॥ श्री ॥

विद्याभवन संस्कृत ग्रन्थमाला

१४०



॥ श्रीः ॥

# प्रबन्धरत्नाकरः

रचयिता—

डॉ० रमेशचन्द्रशुक्लः

एम० ए० पी-एच० डी०

साहित्याचार्यः सांख्ययोगाचार्यश्च

(प्राध्यापक : संस्कृत-विभाग, बारहसैनी कालेज, अलीगढ़)



चौखम्बा विद्याभवन, वाराणसी-२२१००१

प्रकाशक—
चौखम्बा विद्याभवन
( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )
चौक ( बनारस स्टेट बैंक भवन के पीछे )
पो० बा० न० १०६९, वाराणसी २२१००१
दूरभाष : ६३०७६


चतुर्थ संस्करण १९८९
मूल्य ७५-००

अन्य प्राप्तिस्थान—
चौखम्बा सुरभारती प्रकाशन
के० ३७/११७, गोपालमन्दिर लेन
पो० बा० नं० ११२९, वाराणसी २२१००१
दूरभाष : ५५३५७

*

चौखम्बा संस्कृत प्रतिष्ठान
३८ यू ए, जवाहरनगर, बंगलो रोड
दिल्ली ११०००७

मुद्रक—
भोजो मुद्रणालय
वाराणसी

THE

VIDYABHAWAN SANSKRIT GRANTHAMALA

140



# PRABANDHARATNĀKARA



By

Dr. Ramesha Chandra Shukla

M. A., Ph. D.

*Sahityacharya, Sankhyayogacharya*

Professor, Barahseni College, Sanskrit Department, Aligarh



CHOWKHAMBA VIDYABHAWAN

VARANASI

॥ श्रीः ॥

संस्कृतसाहित्यसंरक्षणार्थं नानाविधानि असह्यानि कष्टानि यैः
सहर्षं सोढानि तेषां संस्कृतपण्डितानां शुभस्मृतिचरणेषु
सादरं सविनयञ्च समर्प्यते प्रबन्धरत्नाकरः ।

वाराणसेयसंस्कृतविश्वविद्यालयोपकुलपति-

M. A., D. Phil., LL. B., F. R. A. S. (London)

इत्यादिविविधपदावलिविभूषितानां

श्रीमतां तत्रभवतां

डॉ० सुरेन्द्रनाथशास्त्रिमहोदयानां

## शुभाशंसा

यद्यपि सुविस्तृते संस्कृतसाहित्ये, सुमहत्यामपि सत्यां काव्यप्रणयनपरम्परायां नूनमस्त्येव विरलत्वं निबन्धानां, विशेषतश्चाधुनिकविषयावलम्बिनां समीक्षापराणाञ्च प्रबन्धानाम्। वस्तुतः निबन्धनिर्माणप्रणेतुः विचाराणां समासेनोपन्यासस्य, विषयविशेषमनुलक्ष्य तार्किकसरणिमनुसृत्योहापोहमुखेन प्रतिपाद्यस्य पर्यालोचने क्षमतरमपेक्षते, परञ्च तदध्येतुरपि तादृशं विचारनैर्मल्यमासादयति येन सूक्ष्ममपि विषयमाकलय्य स्वीयभावनानां सम्यगुन्मेषं विधातुं क्षममातनोति। इदानीन्तने युगे पल्लवमानग्राहिणि शिक्षाक्रमे प्रवर्तमाने प्रायशोऽध्येतारः तादृशीं विषयोन्मेषशक्तिं तथा नैवाधिगच्छन्ति यथा पुरा पठनपाठनपरिपाटी पटीयसी सती सुकुमारशेमुषीकान् तर्कोपकरणैः सनाथीकुरुते स्म। संस्कृतभाषाया अपि तादृशं मौलिकं कोशव्याकरणमुखेनाध्ययनाध्यापनञ्चाद्यत्वे विरलतामेवापद्यते। प्रायशः समग्रग्रन्थानां पठनं पाठनञ्च न प्रचलति। एतादृशि व्यतिकरे विद्यालयेषु विविधान् पाठ्यक्रमाननुवर्तमानानां छात्राणां कृते सुरगिरा रचनाभ्यासस्तु प्रायेण दुःसाध्यतां गतः। परीक्षासु च सुरगिरा निबन्धस्तु विरचनीय एव भवति, तत्र चानभ्यासजन्यपाटवविरहाद् बहुधा छात्राः कान्दिशीकता-

मेवावगाहन्ते। तेषां कृते दुस्तरे परीक्षाविस्तरे सरलया सुरगिरा निबद्धः रचनायाः विविधानां मार्गाणां परिचायकः, प्रतिपाद्यस्य विषयस्य स्वरूपप्रदर्शकः रुचिरः प्रबन्धसंग्रहः नितरामपेक्षितः। इमां कालमहिम्ना समुपस्थापितामपेक्षां पूरयितुं नैके मनीषिणः स्वस्वरचनाभिः प्रायतन्त। तथापि प्रौढस्य कस्यापि बहुविषयव्यापकस्य प्रबन्धस्य कृतेऽवकाशं विलोक्य सांख्ययोगसाहित्याचार्योपाधिभाजा शुक्लोपाह्वेन डाक्टर-रमेशचन्द्रशुक्लमहाभागेन प्रशस्तः खलु प्रबन्धरत्नानामेक आकरः समुपस्थापितः यश्च वाराणसेय-चौखम्बा विद्याभवनाध्यक्षैः संग्राहकाध्येतॄणां हिताय प्रकाश्यं नीतः। अयं प्रबन्धरत्नाकरो विविधान् परमोपयुक्तान् विषयानवलम्ब्य पिपठिषां सर्वविधामपेक्षां मनसि निधाय सुगमया विषयावगाहिन्या सुरभारत्या सम्यगुपनिबद्धोऽधुनातनानां छात्राणां हिताय सम्पत्स्यते। एतेषां रमेशचन्द्रशुक्लमहोदयानां प्रयासोऽयं सर्वथाऽभिनन्दनमर्हति, परञ्च प्रबन्धरत्नाकरोऽयं विश्वविद्यालयेषु पाठ्यक्रमे सर्वथा प्ररोचनार्हः तत्र तत्र स्थाने स्थानमवाप्याध्ययनशीलानां सुधियाञ्च लाभाय स्तात्, इत्याशंसते—

वाराणसी
वि० सं० २०२३
पौषशुक्लाष्टमी

—सुरेन्द्रनाथशास्त्री

# सम्मती

## ( क )


### पं० ब्रह्मानन्दशुक्लः, एम० ए०

साहित्याचार्यः व्याकरणालङ्कारशास्त्री, काव्यतीर्थः, कविरत्नम्

( प्रधानाचार्य . श्री राधाकृष्ण संस्कृत महाविद्यालय खुर्जा, बुलन्दशहर )


श्रीमद्भिः डॉ० ( दसउर ) रमेशचन्द्रशुक्लमहोदयैः, एम० ए० साहित्याचार्य-सान्ख्ययोगाचार्यप्रभृत्युपाधिधारिभिः सुनिबद्धं प्रबन्धरत्नाकरं निरीक्ष्य परमाह्लादो ममानुभूतः । एतस्मिन् संस्कृतह्रासयुगेऽपि सात्त्विकभावनया मातरं सुरभारतीं सेवितुमेव महानुभावैरेभिर्महता परिश्रमेण ग्रन्थरत्नमिदं विद्वज्जन-परितोषाय संस्कृताभिनिविष्टमनसां विनेयानामुपकाराय च सुसंस्कृत्य विरचितम् ।

सर्वप्रकाराणां शास्त्रीयनिबन्धानाम्, आचार्य–एम० ए०-परीक्षादिना कृते परमावश्यकप्रबन्धग्रन्थस्य, छात्रजनोपयुक्तस्य प्रायोऽनुपलब्धिरेवासीत् । मन्ये, ग्रन्थेनानेन तादृगभावस्य पूर्तिर्भविष्यतीति निःसन्दिग्धं वक्तुं शक्यते । गद्यपद्यादि-रचनाचतुराणां विदुषां शेमुषीप्रसारः प्रायो निबन्ध-बन्धने कुण्ठितद्वारो भवतीति विदन्त्येव विज्ञाः । व्यर्थविशेषणानाम्, अनुपयुक्तदीर्घसमासानां, अलङ्काररहित-वाक्यसन्ततीनां, प्रबन्धदोषाणामत्र सर्वथा अभाव एवेति । "प्रबन्धो दुरुहाहरः" इत्याद्यभियुक्तोक्त्या सरस्वतीमुपमापये अस्मिन् ग्रन्थरत्ने पदानां स्फुटता, शब्दार्थसरलता, रसपरिप्लुतता च शास्त्रगम्भीरतया सह स्फुटं चकास्ति ।

एवंविधस्य गुणगणपरिपूर्णस्य सुपरिष्कृतस्य रत्नाकरस्य दर्शनोद्भावने श्रीशुक्लमहाभागा भूयसा शुभाशीर्वचसां पात्रभूता सन्तीति प्रेम्णा निवेदये । भगवान् आशुतोषश्च शुक्लमहाभागानामायुष्याभिवृद्ध्यर्थं जगदम्बाया भगवत्याः सरस्वत्याः परमपावनप्रसादप्राप्त्यर्थञ्च विनतशिरसा भूयो भूयः सम्प्रार्थये । तथास्तु ।

## ( ख )

## डॉ० रामसुरेश त्रिपाठी

एम्०ए०, पी-एच्० डी०, डी०लिट्०, व्याकरण-साहित्याचार्य,

( अध्यक्ष : संस्कृत विभाग, अलीगढ़ विश्वविद्यालय )

प्रबन्धरत्नाकरे समुपनिबद्धेषु निबन्धेषु कतिपयानामध्ययनमहं कृतवानस्मि । अत्र भास-अश्वघोष-कालिदासादीनां महाकवीनां वैशिष्ट्यम्, निसर्गसुकुमाराणां शकुन्तलादीनां चरितम्, सामाजिकानां समस्यानाञ्च विवरणं सर्वं सुप्रथित-मस्ति । किन्तु श्रीमतः रमेशचन्द्रशुक्लस्य सुमनोहरा शैली सहृदयानां पाठकानां हृदयमावर्जयति, अभिव्यनक्ति च तस्य गद्यकाव्यनिर्माणे क्षमताम् । अत्र शुक्लमहोदयस्य संस्कृतभाषायां श्रद्धातिशयः स्वधर्मे विश्वासश्च पदे पदे विलोक्यते । मन्ये प्रबन्धरत्नाकरः संस्कृतभाषामुपासकानां सर्वेषामुपकाराय संपत्स्यत इति ।



# निवेदना

साहित्यान्तरे विद्यमानानां निबन्धात्मकानां ग्रन्थानां दिशि यदास्मदीया दृष्टिर्निपतति तदा तत्र ते प्रकृष्टतरतायां सङ्ख्यायाञ्च संस्कृतसाहित्ये शोभमानेभ्यो निबन्धवद्भ्यो ग्रन्थेभ्यो गरीयांसो भूयांसश्च पर्यवलोक्यन्ते। संस्कृतसाहित्ये तु ये केऽपि निबन्धनिभा ग्रन्था दृश्यन्ते तेषु माध्यमिकविद्यालयीयच्छात्रोपयोगिनां निबन्धग्रन्थानामेव तोषावहत्वं भूयस्कत्वञ्च दृग्गोचरीभवति न चौत्तमिकविद्यालयीयविद्यार्थ्युपकारिणां पुस्तकानां सन्तोषावहत्वं प्रचुरत्वञ्च। तस्मादेव कारणादयं जनः प्रबन्धरत्नाकरनामधेयस्यास्य निबन्धग्रन्थस्य प्रणयने आत्मानं न्ययूयुजत्। अत्रेदमपि निःसङ्कोचभावेन स्वीक्रियते यद् यमुद्देशं पुरो निधाय ग्रन्थोऽयं विरचितस्तस्योद्देशस्य पूर्तिरिह वस्तुत एकदेशतोऽपि न संवृत्ता। अतः कामयेऽयं यदस्यां दिशायामधिकारिणो मनीषिणः प्रवर्तेरन् येन संस्कृतसाहित्यस्येदमप्यङ्गं पूर्णतया सम्पुष्टं स्यात्। प्रतिभा-पाण्डित्यविहीनस्यापि प्रतिनस्कृतमातृभक्तस्य कर्तव्यमिदं यदसौ, यत् किमपि सरसं विरसं वा पत्रं पुष्पं तत्सविधेऽस्ति तेनैव, स्वां संस्कृतमातरमुपासीत—इत्येतया भावनया प्रेरितो भूत्वैव जन एषोऽस्मिन् पूजाकर्मणि व्यापृतो जातो न चान्यया कयापि धिया। माता तु मदीयां मामकीनां धृष्टतामिमां क्षंस्यत एव विद्वांसोऽपि सादरं प्रार्थ्यन्ते यत् तेऽपि क्षमेरन्।

अस्मिन् पुस्तके ये निबन्धाः सन्निवेशितास्तेषु, केचन दर्शनादिविषयपरकाः केचन साहित्यिकाः केचन भावात्मकाः केचन च साम-

यिकाः सन्ति । सर्वेषामपि नियन्धाना निबन्धने सुबोधाया प्रवाहशीलाया भाषाया आश्रयः कृतो वर्तते । उपायश्च सः स्वीकृतो येन निबन्ध-निबन्धने व्युत्पत्तिश्छात्रेषु जागृयात् संस्कृतवाण्याममोघतया विशदतया प्रगुणतया च ते विदितेषु प्रचलितेषु बहुविधेषु विषयेषु स्वान् विचारान् प्रकटीकर्तुं प्रभवेयुः । चेदनेन प्रयासेन भवन्ति विद्यार्थिन उपकृतास्तदा लेखकोऽयं स्वं श्रमं सफलं मन्येत ।

श्रीमान्यान् संस्कृतसमृद्धिसंरक्षणपरान् प्रत्नाप्रत्नसंस्कृतग्रन्थ-प्रकाशनलब्धयशस्कान् चौखम्बा-संस्कृत-विद्याभवनाधीशान् श्री श्रेष्ठि-महाभागान् प्रति ससम्मानं कृतज्ञतामावहति च जनोऽयं यैः स्वमुद्रणालये मुद्राप्य ग्रन्थोऽय प्राकाश्यं नीतः ।

अलिगढे
कार्तिकस्य पूर्णिमायाम्,
२०२३ वै० संवत्सरे

विदुषां विधेय,
रमेशचन्द्रशुक्लः

# निबन्ध-सूची

पृष्ठसंख्या

पृष्ठसंख्या

त्रिविधान्यपि दुःखानि यदनुस्मरणान् नृणाम् ।
प्रयान्ति सद्यो विलय तां नौमि जगदम्बिकाम् ॥

॥ श्री ॥

# प्रबन्धरत्नाकरः



## ( १ )

## वेदानां महत्त्वम्

आर्य-धर्मस्य आर्य-दर्शनस्य च जीवनं वेदाः सन्ति । भारतीया संस्कृतिः सभ्यता च नानाधर्मैर्युक्तैव विराजेते । सत्यानुसन्धातृभिर्मनीषिभिरनुभूतस्य परमतत्त्वस्य बोधयितारो भूत्वा श्रुति ते विभान्ति । इष्टप्राप्तेरनिष्टपरिहारस्य च अलौकिका उपायास्तेभ्य एव विदिता जायन्ते । यत्र प्रत्यक्षस्य न च अनुमानस्य प्रवेशस्तत्रापि ते प्रविशन्ति । स्मृतिपुराणादीनां मान्यत्वं तदनुगामित्व एवा-वतिष्ठते । भारतीयधर्मं ईश्वरविरोधमपि सोढुं शक्नुते परं न स तेषां लवमात्र-मपि विरोधं सहते । ईश्वरस्य सत्ताया विरोधीन्यपि दर्शनानि न नास्तिकानि तत्र ( भारतीयधर्मे ) मतानि भवन्ति परं यानि तान्यपि मतानि वा वेदविरोधीनि वर्तन्ते न तानि स आस्तिकानि मन्यते । तेषामध्ययनमिहापरिहार्यत्वेनानिवा-र्यत्वेन चाभ्युपगतम् । यो हि द्विजो वेदमनधीत्यान्यत्र श्रमं विदधाति स इह शूद्रो मतः—

> योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
> स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ ( मनुः )

भारतीयविचारधारायां दृश्यमानमिदं विशेषमस्ति यद् वेदतत्त्वज्ञ एव जनो ब्रह्म-सायुज्यमर्हति—

> वेदशास्त्रार्थतत्त्वज्ञो यत्र कुत्राश्रमे वसन् ।
> इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते ॥

दुःखमिदं महद् ये हि वेदा इह भारतेऽनिवार्यत्वेनाध्येया मता येषां वेदानां ज्ञानमन्तरा नान्यं जीवनस्य लक्ष्यमधिगम्यं भवति त एव वेदाः साम्प्रतमुपेक्ष्य-माणाः सन्ति । तदिदमपि न वयं भारतीया दृष्टिमपि विद्मः ।

वेदा भारतीयाना हि आद्या धर्मग्रन्था सन्ति । तेषामाज्ञात्र देशे धर्मत्वेन मतास्ति । को हि धर्म इति यदि जिज्ञासास्ति तदा वेदास्तन्निमित्तेन द्रष्टव्या — "धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुति" वर्तमाने भारते यावन्त्यपि मतान्युपमतानि भिन्नभिन्नानि प्रसृतानि सन्ति तेषां मूलस्रोतो वेदेभ्य एव निर्गतमस्ति । ज्ञानस्य विमला धारा समस्तेऽपि क्षितिमण्डले सर्वास्वपि दिशासु वेदेभ्य एव निःसृता भूत्वा प्रसृता । न वेदा केवलं भारतीयानामपि तु भुवः सर्वासामपि मानवजातीनां प्राचीना ग्रन्था सन्ति । अस्मदीया पूर्वजा केन प्रकारेण जीवनं यापयामासु ? काभि क्रीडाभिस्ते स्वकीयं मनो मोदयामासु ? का देवतास्ते पूजयामासु ? विवाहसम्बन्धस्योद्देश्य किन्ते निर्धारयामासु ? केन च विधिना ते प्रभाते अग्नावाहुतिं समर्पयामासु—इत्यादिविषये चेज्जिज्ञासा हृदि विजृम्भते तदा तद्विषयकं ज्ञानं यथार्थं वेदेभ्य एव लब्धुं शक्यमस्ति । तदर्थं पुनः पुनः अस्माभिर्वेदा अध्ययनीया अनुशीलनीयाश्च । भारतीयदर्शनाना रहस्यं तेषां विकासस्य वैविध्यञ्च तत्त्वतो वेदसाहाय्येनैव ज्ञेयं भवितुमर्हति । अमुकं शास्त्रमिदं वदति, अमुकं दर्शनमिदं ब्रवीति, अमुकं मतमिदं शंसति, अमुका स्मृतिरिदं कथयति—इत्येवंविधायां स्थित्या किं कार्यं किं न कार्यमित्येतत्कथयितुं निर्णेतुं कर्त्तव्यमिदं यत्ते वेदं शरणं यान्तु । तत्तच्छास्त्रादीना तत्तत्कथनस्य रहस्यं वेद एवोन्मीलयिष्यति । स एव तद्विधा शङ्कामपनेष्यति ।

न केवलमुपर्युक्तमेव वेदानामुपादेयत्वं महत्त्वञ्चापि तु तदीया महत्तोपादेयता च भाषादृष्ट्यापि वरीवर्ति । इयं वैदिकभाषैव वर्तते या साम्प्रतिकं भाषाविज्ञानं दृढीयसीं भूमिमध्यासयति स्म, इयं वैदिकभाषैवास्ति या भाषाविदां मध्ये प्रसृतं प्राचीनभाषाविषयकं मतभेदं निराकृतवती । चेद् भाषाशास्त्रपण्डिता साम्प्रतिका अभिलष्यन्ते यत् तेषामभिमतो विषयो नितरां पूर्णतया परिपक्वतां गच्छेत्, तदा ते वेदान् अधीयीरन् वेद ज्ञानमधिगच्छन्तु च प्रयतेरन् । वेदान् अधीत्यानुशील्य च ते तासु तासु भाषासु समागताना फादर-माइट-फार्दूनप्रभृतिपदानां मूलं रूपं तेषां तत्तद्रूपान्तरताञ्च साधु भोत्स्यन्ते । ज्ञास्यन्तीदं च भौतिकेष्वर्थेषु प्रयुज्यमानानि पदानि युगान्तरेण कस्मादाध्यात्मिकेऽर्थे प्रयुक्तानि भवितुमारभन्ते ।

भूयिष्ठप्रयोजनसाधकत्वाद् वस्तुतो वेदा सन्ति परममहत्त्वभाजो ग्रन्था ।

**वेदा ईश्वरीयं ज्ञानम्**—प्रतीच्या विपश्चितो वेदान् ऋषिप्रणीतान् मन्यन्ते । तेषां हि आधिभौतिकी दृष्टिस्तान् शब्द राशिमेव सामान्यग्रन्थमेवाव-

गच्छन्ति। परं वेदभक्ता भारतीया मेधाविनस्तान् न ऋषिकृतान् मन्यन्ते। तेषां मतमिदं यद् ऋषयो वैदिकमन्त्राणां द्रष्टारः सन्ति न च कर्त्तारः। अलौकिकमाहात्म्यशालिन ऋषयो दिव्यया प्रतिभया मन्त्राणां दर्शनं लब्धवन्तस्तेषां प्रकाशनन्द्विधि अवततार। 'ऋषि' इत्येतस्य पदस्य व्युत्पत्तिरपि (ऋषति= पश्यति इति ऋषिः) अयं एव 'मन्त्र-द्रष्टा' इत्यस्ति। एष 'ऋषि' शब्द इगुपधात् कित् इत्यनेनौणादिकेन सूत्रेण इनि कृते निष्पद्यते। निरुक्ते च विद्यमानाम् 'तद्यदेनांस्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्षत्......' इत्यादिका पङ्क्तिः ऋषीन्मन्त्र-द्रष्टृत्वमुपपादयन्ति।

**वेदानां पौरुषेयत्वमपौरुषेयत्वं च**—न्यायवैशेषिकयोर्मतेन वेदाः पौरुषेया नित्याश्च सन्ति। परं सांख्य-वेदान्त-मीमांसानाञ्च मतेन ते अपौरुषेयाः सन्ति। नित्यत्वञ्च तेषां दर्शनानीमानि स्वीकुर्वन्ति। स्मृतिपुराणेषु च वेद-विषयिणी भावना तादृश्येव प्रायेण, यादृशी मीमांसायां विभाविताऽस्ति। मनुर्वेदान् नित्यान् अपौरुषेयांश्च मन्यते। तेनोक्तम्—

"पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम्।
अशक्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः॥"

**वेदाविर्भावकाल.**—वेदाविर्भावकालमधिकृत्य विद्वत्सु गम्भीरो मतभेदो दृश्यते। भारतीयदृष्ट्या ये विद्वांसः श्रद्धां निदधति तेषां समक्षे तु वेद-काल-निर्णयस्य प्रश्न एव नोत्तिष्ठति। तेषां दृष्ट्या तु वेदाः सन्ति अनादयः। सन्ति ते नित्याः कालापरिच्छिन्नाः। परं पाश्चात्यानां वेदज्ञानां पण्डितानां किञ्चिदनुयायिनां केषाञ्चन भारतीयानां समक्षं तदाविर्भावकालसम्बन्धी प्रश्नो विषम एव समाधेयः। डॉ० मैक्समूलरो "वेदेषु प्राचीनतमस्य ऋग्वेदस्य समुत्पन्नस्य एकविंशत्यधिकद्विशताब्दकमतः सञ्जाता." इति प्राह मैक्समूलर ऋग्वेदस्योदयविषये कञ्चन विन्दुमाश्रित्यैवोक्तां सम्भावनाञ्चकार। न स स्वाङ्गीकृते वेदाविर्भावसमये वस्तुतो निश्चयं गत आसीत्। यतो हि स एकस्मिन् समये भाषमाणः स्वयमेवाभिदधौ यत् नात्र भूतले कापि शक्तिरीदृशी या वैदिकमन्त्ररचनायाः कालं वक्तुं शक्नुयात् निश्चयवत्तया। स इमं विचारं १८८९ शततमे ईसवीयेऽब्दे भौतिकधर्मस्य जिफोर्डव्याख्यानमालायां प्रकटीचकार। वैदिकसंहितासु ब्राह्मणेषु च निर्दिष्टाः ज्यौतिषसम्बन्धिनीः सूचनाः अवगाह्य लोकमान्यबालगङ्गाधरतिलको डॉ० याकोबीनामा जर्मनीयो विद्वांश्चाविर्भूतस्य वेदस्य चतु-

विंशतिशतवर्षाणि यातानीति मन्यंते। सप्तधिकैकनवतिशतितमेशवीयेऽब्दे डॉ० ह्यूगोविन्क्लर 'बोघाजकोइ' नामके स्थाने टर्कीदेशान्तर्गते खननकार्ये प्राचीनमेकं शिलालेखमवाप। तेन सिद्ध्यति यद् वेदस्य प्रादुर्भूतस्यैकविंशत्यधिकचतुस्त्रिंशद्वर्षाणि जातानि न ततोऽधिकानि। अत्रैव प्रतीच्या विचक्षणा धारणामिमां परिपुष्णन्ति यद् वेद-रचना-कालस्य जातस्य प्रायेण पञ्चशतकाधिकचतुःसहस्रसमा अतीता न च ततोऽधिका। डॉ० अविनाशचन्द्रदास स्वकीये 'ऋग्वेदिक इण्डिया' भिधाने ग्रन्थे स्थिति यद् भौगोलिकी किञ्च भूगर्भसम्बन्धिनी घटना अवलम्ब्य ऋग्वेदीया रचनाया अथ च तत्कालवर्तिन्या सभ्यताया प्रादुर्भूताया प्रायेण सप्तविंशतिसहस्राब्दा अतिक्रान्ता। पण्डितदीनानाथशास्त्री चुलैट्स्नु स्वकीये 'वेदकालनिर्णय' सञ्ज्ञके ज्योतिस्तत्त्वमीमांसकग्रन्थे वेदकालमनितरां प्राचीनं साधयितुं श्लाघनीयं प्रयत्नं विदधानः समवाप्यते। तद्विचारेण चितौ वेदारम्भस्य प्रकाशस्यावतीर्णस्य लक्षत्रयसवत्सरा व्यतीयुः। इत्थं वेदकालनिर्धारणे हि विदुषां विचारा विद्यन्ते तेषु नितान्तमेव भिन्नत्वं समुपलभ्यते।

वेदरक्षा —वेदानां परमोपादेयत्वादतिशयनममहत्त्वशालित्वाच्च महर्षयस्तान् रक्षितुमपि पूर्णमुपायञ्चक्रुः। वेदा एतावद्दीर्घकालानन्तरमपि लोके समवाप्ता सन्तीत्यत्र कारणमेव महर्षिकृतः प्रयत्न एवास्ति। महर्षयो हि वेद-रक्षार्थमष्टविकृतीनां व्यवस्थां विदधुः। ता विकृतयोऽधस्थितेन श्लोकेन अभिव्यक्तीक्रियन्ते—

> जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः।
> अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः॥

अत्र कतिपया एव विकृतयो हि वर्ण्यन्ते। पदच्छेदपूर्वकपाठः 'पदपाठ' इत्युच्यते। क्रमपाठः स भवति यत्र पदपाठगतं प्रतिपदं पूर्वोत्तरपदाभ्यां सगमय्य द्विरुच्चार्यते। जटापाठो भवति स यत्र क्रमपाठमाश्रित्य प्रतिपदयुगलं त्रिरुच्चार्यते द्वितीयावृत्तौ पदयोः प्रातिलोम्येनोच्चारणं भवति। शिखापाठजटापाठयोर्मध्ये एतावान् भेदो यच्छिखायामन्यच्चैकं पदमग्रे सम्मिलितं याति। उक्तञ्च—'पदोत्तरं जटामेव शिखामार्याः प्रचक्षते'। घनपाठो नितरां विलक्षणः क्लिष्टश्च। तत्र पदानामावृत्तिरनुलोमविलोमक्रमेणाभ्यस्यते। प्रचपच्युत्स्ववसादादिविकारेभ्यः परित्रातुं श्रुतिं पद क्रम घनजटादिपाठा आविष्कृताः। एषां सद्भावेन न

श्रुतिष्वद्यपर्यन्तमणुमात्रमपि दोषलेशः प्रविष्टो भवितुमशकत्। प्रातिशाख्यग्रन्था अपि वेदपाठस्य रक्षार्थं विरचिता अभूवन्।

**वेदेषु स्वराणां महत्त्वम्**—अनेकार्थजनकमन्त्रदुर्ग्रहत्वे वेदेषु स्वराणामुपयोगो विधीयते। प्रथमं प्रयोजनन्तु तेषां वेदपाठपरिरक्षणमस्ति द्वितीयं प्रयोजनमिदं यत् तैस्तत्तत्पदगतोऽर्थो निर्धार्यते। यथा चाह गोनर्दीयः—'याज्ञिकाः पठन्ति—स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत' इत्यत्र सन्देहः, स्थूला चासौ पृषती च स्थूलपृषती इत्येव विग्रहोऽत्र प्रश्नो वा स्थूलानि पृषन्ति यस्याः सा इति। एवंविधायाः शङ्कायाः निवृत्तिः स्वरेणैव भवितुं शक्यमस्ति। अतः वेदार्थस्य निर्णयने स्वराः सहायका भवन्ति। वाक्यनिर्णयनार्थमपि स्वराणामपेक्षा भवति। यत्र क्वचिन्मन्त्रेषु मुद्रणादिदोषवशाद् विरामचिह्नानि नाङ्कितानि जायन्ते तत्र कुतो वाक्यमारब्धं कुत्र च तद्समाप्तमिति न परिज्ञातुं शक्यते तत्र स्वरैरेव तत्समाधानं भवति। यथा—'पर्जन्यन्त प्रद गृह्णन्तम्' इत्यत्र 'पर्वत' इह अन्तिमं पदद्वयं किं पूर्ववाक्यसम्बन्धि उत उत्तरवाक्यसम्बन्धि—इत्येतस्मिन् सन्देहे प्राप्ते, स्वरेणावधार्यते यदि अनन्वितं तद्वदनुदात्तवं तत्र पूर्वान्वयि, आद्युदात्तत्वे तु उत्तरान्वयीति।

**वेदभाष्यकाराः**—वेदभाष्यकृत्सु स्कन्दस्वामि-नारायण-उद्गीथ-माधव-भट्टवेङ्कटमाधव-धानुष्कयज्व-आनन्दतीर्थ-आत्मानन्द-सायणप्रभृतयो भाष्यकाराः सुविदिताः सन्ति भूभुवने। स्कन्दस्वामी ऋग्वेदे नितरां विशदं भाष्यमकरोत्। स निरुक्तेऽपि टीकां कृतवान्। इतिहासकाराणां कथनं यत् स ६२५ ख्रिस्ततमवर्षीयाब्दास्यां भारतं विभूषयामास। नारायण उद्गीथश्च स्कन्दस्वामिनः समय एव अभूवताम्। नारायणः ऋग्भाष्ये स्कन्दस्वामिनं प्रति साहाय्यमकरोत् इत्येतद् वेङ्कटमाधवो ब्रवीति। उद्गीथस्योल्लेखः सायणेन आत्मानन्देन च कृतः। तदीया भाष्यशैली स्कन्दस्वामिनः शैलीव। 'माधव' नामधेयाश्चत्वारो भाष्यकारा उल्लिख्यन्ते इतिहासकारैः। तेष्वेकः सामवेदसंहितायाः किञ्च इतरे त्रय ऋग्वेदे भाष्यं लिलिखुः। केचन मन्यन्ते माधवो नाम न कोऽपि भाष्यकारः सायणः किं वा वेङ्कट एव 'माधव' इत्येतेन नाम्ना ख्यात आसीत्। अन्ये च ऋङ्-माधवं सायणाद् वेङ्कटाच्च भिन्नम् आमन्दितः 'माधव'स्य व्यक्तित्वं स्वतन्त्रमेव। माधवः ऋग्वेदे परस्परविलक्षणं पाण्डित्यं निदधौ। सायणो वेङ्कटश्चासौ माधवस्य भाष्यमनुसस्रतुः। द्वादशशततमैशवीयाब्दे वेङ्कटमाधवोऽभूदिति पण्डितमन्य

तित्रशास्त्री मन्यते। वेङ्कटस्य भाष्यमतिसंक्षिप्तमस्ति। पर्यायवाचिपदान्युपस्थाप्य स मन्त्रार्थमाकलयितुं प्राय यत्नं कृतवान्। धातुव्युत्पत्त्या त्रिषु वेदेषु भाष्यं प्रणिनायैतेष उल्लेखो वेदाचार्यस्य सुदर्शनमीमांसाया दृश्यते। परं न तदीयं भाष्यमाप्यते न च तस्यैव परिचयविशेषो लभ्यते। १३०० शततमाद् वैक्रमाब्दात् प्राक् स उद्भूवेति कथ्यते। आनन्दतीर्थ एव 'मध्व' इत्येतेन नाम्ना ख्यातिं ययौ। अयं मध्व स एव यो द्वैतवाद प्रवर्तयामास। एष बहून् ग्रन्थान् अजग्रन्थत्। कतिपयांश्च वैदिकान् मन्त्रान् अपि व्याचख्यौ। वैक्रमे चतुर्दशशततमे सवत्सरे अयं प्रादुर्बभूव। आत्मानन्द ऋग्वेदस्य 'अस्य वामीयं सूक्तं व्याख्यातवान्। अयमपि चतुर्दशशततम संवत्सरं जन्मना गौरवान्वितं विदधौ। आचार्यसायणो विजयनगर—संस्थापकमहाराजबुक्कस्य महाराजहरिहरस्य च अमात्य, सेनानीश्चासीत्। सायणो वैदिकसम्प्रदायस्य यथार्थतया वेत्तासीत् तस्मात् तदीय वेदभाष्यं वस्तुतस्तु वेदार्थोन्मीलनकारिषु भाष्येषु मूर्धन्यं भाष्यमस्ति। तद्वेद-दुर्गं दुर्गमे सरलतयैव प्रवेशयति वेदार्थजिज्ञासुम्। अन्ये च भरतस्वामि-गुणविष्णु-उव्वट-महीधरप्रभृतयो वेद-भाष्यकर्त्तारो जज्ञिरे। तेषु उव्वट प्रौढवेदज्ञो बभूव। सोऽनेकग्रन्थेषु टीका भाष्यं च कृतवान्। सुविदितनृपतिभोजशासन-काले स बभूव। महीधरस्य भाष्य 'वेददीप' नाम्ना सुप्रख्यातमस्ति। महीधर आसीत् काशीनिवासी। स तन्त्रशास्त्रस्यापि मर्मविदासीत्। स तन्त्रविषयकं मन्त्रमहोदधिं प्राणैषीत्। आविर्बभूव च स षोडशशततमे वैक्रमेऽब्दे। एतेषु सर्वेष्वपि भाष्यकारेषु सायणो भाष्यकारेषूत्तमो भाष्यकार। सोऽनेकसंहितासु बहुषु च ब्राह्मणग्रन्थेषु भाष्याणि विधाय वैदिक साहित्य वर्धयामास। सायणात् प्राग्वर्तिषु वेदज्ञेषु विद्वत्सु ब्राह्मणसर्वस्वनामकवेदभाष्यकर्तुर्हलायुधस्याप्युल्लेखयोग्य नाम वर्तते। स पक्षाधिपलक्ष्मणसेनस्य राजपण्डितोऽप्यासीत्।

देवतवाद:—वेदेषु देवतानां स्थानं महत्त्वावहम्। मानव' प्रत्यह प्रकृतिदेव्या नानालीला पश्यति। वैदिककालस्य महर्षयस्तस्यास्तत्त्लीला अवधारयितुं विभिन्ना देवता' अकल्पयन्। महर्षीणां विश्वासोऽय यदासां देवतानुकम्पयैव सर्वाणि कार्याणि सम्पद्यन्ते। जगति घटमानानां सर्वासामपि घटनानां कारणभूता देवता एव।

यास्को वदति यद् देवतासु काश्चन पृथिवीस्थानीया काश्चन अन्तरिक्ष-

स्थानीयाः काश्च न द्युस्थानीयाः सन्ति । पृथिवीस्थानीयदेवतासु अग्निर्देवता, अन्तरिक्षस्थानीयासु इन्द्रदेवता, द्युस्थानीयासु सूर्यविष्णुप्रभृतिर्देवताः सन्ति महीयस्यः । ऋग्वेदे हि देवता प्राणशक्तिशालित्वाद् 'असुर' इति प्रोक्ताः । प्रतीच्यानां सुधीनां देवताः उद्दिश्य विचारोऽयं यद् भौतिकपदार्थोपपादकं प्राकृतिकानि दृश्यानि देवतात्वेन कल्पितानि । ऋग्वेदस्यादिमे युगे बहुदेवतानां सत्ता सम्भृता बभूव । गच्छता कालेन, सति मानसिके विकासे देवतानां नामानेकत्वाभिमतिः कल्पितेऽभूत् । एकमूलं सर्वेश्वरवादं स्पष्टतः समुपस्थापयद् दृश्यते । परं पश्चिमीयानामेव देवताविषयको विचारो नावितथः । देवतावादो न भौतिक एतावान् ।

यास्केन निरुक्ते दैवतकाण्डे देवतास्वरूपविवेचनं हि अतिशयविशदतया-त्रुटितम् । जगतो मूले एकैव महत्त्वशालिनी महाशक्तिः शोभते । सा निरतिशयैश्वर्यशालित्वात 'ईश्वर' इति गीयते । सैव शक्तिर्बहुभिः प्रकारैः स्तुता—

महाभाग्यात् देवताया एक एव आत्मा बहुधा स्तूयते ।
एकस्यात्मनोऽन्ये देवा प्रत्यङ्गानि भवन्ति ॥ ७.४. ८-९.

ऐतरेयारण्यकञ्च 'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगा' इत्येतेन वचनेनोक्तमेव विचारं परिपोषयति ।

देवताः प्रायेण त्रीणि रूपाणि बिभ्रति—आधिभौतिकम्, आधिदैविकम्, आध्यात्मिकञ्च । इन्द्रियगम्यं रूपमाधिभौतिकं भवति, आधिदैविकमाध्यात्मिकञ्च न इन्द्रियगम्ये । 'विष्णोर्नु कं वीर्याणि…' 'प्रविष्णवे शूषमेतु मन्मगिरिक्षित उरुगायाय वृष्णे…' इत्यादि मन्त्रैर्वेदो विष्णुदेवताया उक्तानि त्रीण्यपि रूपाणि प्रदर्शयति ।

मानवा देवतानां तां तां शक्तिं साक्षान्निरूप्य तद्द्वारेण तानमुपकुर्युरित्येतदर्थं श्रुतिमातरस्तासां रूपाण्यस्मत्पुरः समुपस्थापयन्ति ।

मन्त्रैर्हि यदा देवतानां न केवलमेकमपि तु एकस्मादधिकानि रूपाणि स्वाभिमतानि गीतानि वीक्ष्यन्ते तदा प्रतीच्यानां तस्मिन् वचसि कथं विश्वासो विहितो भवेद् यत्र देवताः भौतिकदृश्यानामधिष्ठातृत्वेन प्रतीकत्वेन वा कल्प्यन्ते ।

वेदवर्णितेषु प्रमुखेषु विषयेषु देवतास्तुतिरप्येकतमः प्रमुखो विषयः ।

वैदिकवाङ्मयम्—'वेद' इत्येतस्य पदस्य प्रयोगो मन्त्र-ब्राह्मणयोर्निमित्तेन

विधीयते। आपस्तम्बे प्रोक्तञ्च– मन्त्रब्राह्मणयोर्वेदनामधेयम्'। यन हि यज्ञया गानामनुष्ठान निष्पन्नतामुपैति देवतानाञ्च स्तुति विधान यत्रोल्लिखितमस्ति स 'मन्त्र' इति ( मननात् मन्त्र ) प्रोच्यते। 'ब्राह्मणम्' इत्यतत्पद ग्रन्थविशेष वाचकम्। यज्ञानां विविधक्रियाकलापप्रतिपादकग्रन्था 'ब्राह्मणम्' इत्येतां सञ्ज्ञा भजन्ते। 'ब्राह्मणम्' इत्येतस्य पदस्यार्थोऽस्ति–वर्धन, विस्तारो वा वितानो वा यज्ञ इति ब्राह्मणमपि भागत्रये विभक्तमस्ति प्रथमो भाग 'ब्राह्मण मिति, द्वितीयो भाग 'आरण्यकमिति किञ्च तृतीयो भाग 'उपनिषदि'ति कथ्यते। वेदश्च स्वरूपभेदात् त्रिविध ऋग्वेद', यजुर्वेद', सामवेद। यत्रार्थवशेन पादव्य वस्थास्ति तेषा छन्दोबद्धाना मन्त्राणां नाम 'ऋक्' इति वेदाम्। ऋचा समूह एव ऋग्वेद' इति पदेन व्यवह्रियते। 'यजु' इत्येतत् पद 'यज्' धातो उसिप्रत्यये कृते निष्पद्यते। यस्मिन् वेदे यज्ञभागादिक्रियाकलापानुरोधेन मन्त्राणा सन्निवेशोऽस्ति स 'यजुर्वेद' इति निगद्यते। यत्र च गीतिरूपा मन्त्रा विद्यन्ते स उपासनाकाण्डपरो वेद' 'सामवेद' इति गीयते। मन्त्राणां त्रिविधत्वाद् वेदा 'त्रयी' इति नाम्ना प्रसिद्धा सन्ति। मन्त्राणां समूह 'संहिता' इत्येतेन व्यपदेशेन व्यपदिश्यते। यज्ञानुष्ठान दृष्टौ निधाय विभिन्नर्षिभि कृते संहितानां सङ्कलन वेद-व्यासश्चकार। मन्त्र-संहितानां सङ्कलने चतुर्विधतया कृत तस्मात् संहिता सन्ति चतस्र–ऋक्संहिता, यजुसंहिता, सामसंहिता, अथर्वसंहिता च। अत एव वेदाश्चत्वार स्मृता।

ऋग्वेदो धार्मिकस्तोत्राणामेको महान् विशालो निधि। तत्र बहुभिर्भिन्न भिन्नै ऋषिभि सुललितैर्भावमयै शब्दैर्विभिन्ना देवता सादर स्तुता सन्ति। यद्यपि महाभाष्ये ऋग्वेदस्यैकविंशतिशाखा निर्दिष्टा पर शाकल'-वाष्कलाश्वलायन शाङ्खायन माण्डूकायननामधेया पञ्च शाखा सन्ति मुख्या।

यजुर्वेदे सर्वविधानामपि यज्ञयागादीनां वर्णन विद्यते। कृष्णयजु शुक्लयजु र्भेदेन स द्विविध'। मन्त्रब्राह्मणयोर्द्वयोरपि यत्र मिश्रीभाव कृत स 'कृष्णयजु र्वेद' इति नाम्ना किञ्च यत्र मन्त्राणामेव विशुद्धतया प्रतिष्ठान कृत स शुक्ल यजुर्वेद इतिनाम्ना विश्रुत'। शुक्लयजुर्वेदस्य द्वे एव प्रधानशाखे स्त, ते माध्य-न्दिनकाण्वनाम्ना विदिते स्त। कृष्णयजुर्वेदस्य सम्प्रति पञ्चाशीतिशाखासु केवल चतस्रस्तैत्तिरीय-मैत्रायणी-कठ-कपिष्ठलकठाख्या शाखा समुपलभ्यन्ते।

चतसृष्वपि संहितासु सामसंहिता परमगौरवशालिनी संहितास्ति। 'सामानि यो वेत्ति स वेद तत्त्वम्' इत्येतद् बृहद्देवताया कथन तन्महिमान

रुच्चैर्गायन्ति । गीतायां भगवान् कृष्ण आह—'वेदानां सामवेदोऽस्मि'। वेदस्या-स्योद्देश्यमस्ति—गानपूर्वकमुपासनम्। साम्नामस्य गरीयसो वेदस्य तिस्र एव शाखाः प्राप्यन्ते। ताश्च इमाः—कौथुमीया, राणायनीया, जैमिनीया।

वेदेषु अथर्ववेदो बहुलविशिष्टताः निदधाति। यदा हि ऋग्वेदादयस्त्रयो वेदा आमुष्मिकं फलं प्रददति तदा अयम् अथर्ववेद ऐहिकमपि फलं प्रयच्छति। जीवनं सुखसमन्वितं कर्तुं येषां साधनानामपेक्षा भवति तेषां सिद्ध्यर्थमिह वेदे विविधानामनुष्ठानानां विधानं विहितमस्ति। पतञ्जलिमतेऽस्य वेदस्य नव शाखाः समुल्लसन्ति परमिदानीन्तु पैप्पलादशौनकसंज्ञके द्वे एव शाखे लभ्येते।

ब्राह्मणसाहित्यं नितरामेव विशालं व्यापकं च वर्तते। इदं हि साहित्यं गद्यात्मकं विद्यते। यज्ञस्य विधानं कदा कर्तुं भवेत्? केन प्रकारेण च कर्तुं स्यात्? कानि च साधनानि तदर्थमपेक्ष्यन्ते? के च तत्तद्यज्ञानामधिकारिणः? इत्येतद्विषयाणामुपपादनं तत्र (ब्राह्मणसाहित्ये) कृतमस्ति। सम्प्राप्तानां ब्राह्मणानां वेदाननुसरन्ती संख्यानेन प्रकारोऽस्ति—

(१) ऐतरेयब्राह्मणम्, (२) शाङ्खायनब्राह्मणम्-ऋग्वेदीयम्, (३) शत-पथब्राह्मणम्-शुक्लयजुर्वेदीयम्, (४) तैत्तिरीयब्राह्मणम्-कृष्णयजुर्वेदीयम्, (५) ताण्ड्यम्, (६) षड्विंशम्, (७) सामविधानम्, (८) आर्षेयम्, (९) दैवतम्, (१०) उपनिषद् ब्राह्मणम्, (११) संहितोपनिषद् ब्राह्मणम्, (१२) वंशब्राह्मणम्, (१३) जैमिनीयं ब्राह्मणम्—सामवेदीयम्, (१४) गोपथब्राह्मणम्—अथर्ववेदीयम्।

ब्राह्मणग्रन्थेषु शतपथब्राह्मणं गुरुत्वमहत्त्वं भजते। अस्ति च तद् विशाल-कायम्, यागानुष्ठानानां प्रतिपादनं सर्वोत्तमरीत्या तत्रैव कृतं दृश्यते। प्रस्तौति तद् यज्ञ-यागविषयकं विवरणं साङ्गोपाङ्गम्।

वैदिकवाङ्मये हि आरण्यकं नाम साहित्यमपि महीयः। तत् आध्यात्मिका-नां तथ्यानां मीमांसां कुरुते। अस्यैव तदीयः प्रमुखो विषय आत्मविचारणम्। आत्मविद्याया महिमा विशेषेण तत्र प्रतिपादितो वाप्यते। तत्कृताध्यात्मिकतत्त्वानां विकास उपनिषत्सु दृष्टो भवति। आरण्यकानीमानि—ऐतरेयमारण्यकम्, शाङ्खा-यनमारण्यकम्, बृहदारण्यकम्, तैत्तिरीयमारण्यकम्।

उपनिषदामन्तर्भाव आरण्यकेष्वेव। तास्तेषामङ्गविशेषत्वेन मताः। तासु

विधीयते। आपस्तम्बे प्रोक्तञ्च–'मन्त्रब्राह्मणयोर्वेदनामधेयम्'। येन हि यज्ञयागानामनुष्ठानं निष्पन्नतामुपैति देवतानाञ्च स्तुति विधानं यत्रोल्लिखितमस्ति स 'मन्त्र' इति ( मननात् मन्त्र ) प्रोच्यते। 'ब्राह्मणम्' इत्येतत्पदं ग्रन्थविशेष वाचकम्। यज्ञानां विविधक्रियाकलापप्रतिपादकग्रन्था 'ब्राह्मणम्' इत्येतां सज्ञां भजन्ते। 'ब्राह्मणम्' इत्येतस्य पदस्यार्थोऽस्ति–वर्धनं, विस्तारो वा वितानो वा यज्ञ इति ब्राह्मणमपि भागत्रये विभक्तमस्ति प्रथमो भाग 'ब्राह्मण'मिति, द्वितीयो भाग 'आरण्यक'मिति, किञ्च तृतीयो भाग 'उपनिषदि'ति कथ्यते। वेदश्च स्वरूपभेदात् त्रिविध 'ऋग्वेद', यजुर्वेद', सामवेद। यत्रार्थवशेन पादव्यवस्थास्ति तेषां छन्दोबद्धानां मन्त्राणां नाम 'ऋक्' इति बोध्यम्। ऋचां समूह एव 'ऋग्वेद' इति पदेन व्यवह्रियते। 'यजु' इत्येतत् पद 'यज्' धातो उसिप्रत्यये कृते निष्पद्यते। यस्मिन् वेदे यज्ञभागादिक्रियाकलापानुरोधेन मन्त्राणां सन्निवेशोऽस्ति स 'यजुर्वेद' इति निगद्यते। यत्र च गीतिरूपा मन्त्रा विद्यन्ते स उपासनाकाण्डपरो वेद 'सामवेद' इति गीयते। मन्त्राणां त्रिविधत्वाद् वेदा 'त्रयी' इति नाम्ना प्रसिद्धा सन्ति। मन्त्राणां समूह 'संहिता' इत्येतेन व्यपदेशेन व्यपदिश्यते। यज्ञानुष्ठानं दृष्टौ निधाय विभिन्नर्षिभि कृते संहितानां सङ्कलनं वेदव्यासश्चकार। मन्त्र-संहितानां सङ्कलनं चतुर्विधतया कृतं तस्मात् संहिता सन्ति चतस्र–ऋक्संहिता, यजुःसंहिता, सामसंहिता, अथर्वसंहिता च। अत एव वेदाश्चत्वार स्मृता।

ऋग्वेदो धार्मिकस्तोत्राणामेको महान् विशालो निधि। तत्र बहुभिर्भिन्न भिन्नै ऋषिभि सुललितैर्भावमयै शब्दैर्विभिन्ना देवता सादरं स्तुता सन्ति। यद्यपि महाभाष्ये ऋग्वेदस्यैकविंशतिशाखा निर्दिष्टा परं शाकल-बाष्कलाश्वलायन शांखायन माण्डूकायननामधेया पञ्च शाखा सन्ति मुख्या।

यजुर्वेदे सर्वविधानामपि यज्ञयागादीनां वर्णनं विद्यते। कृष्णयजु शुक्लयजु र्भेदेन स द्विविध। मन्त्रब्राह्मणयोर्द्वयोरपि यत्र मिथोभाव कृत स 'कृष्णयजुर्वेद' इति नाम्ना किञ्च यत्र मन्त्राणामेव विशुद्धतया प्रतिष्ठान कृत स शुक्लयजुर्वेद इतिनाम्ना विश्रुत। शुक्लयजुर्वेदस्य द्वे एव प्रधानशाखे स्त, ते माध्यन्दिनकाण्वनाम्ना विदिते स्त। कृष्णयजुर्वेदस्य सम्प्रति षडशीतिशाखासु केवल चतस्रस्तैत्तिरीय-मैत्रायणी-कठ-कपिष्ठलकठाख्या शाखा समुपलभ्यन्ते।

चतसृष्वपि संहितासु सामसंहिता परमगौरवशालिनी संहितास्ति। 'सामानि यो वेत्ति स वेद तत्वम्' इत्येतद् बृहद्देवताया कथनं तन्महिमानं

कुर्वन्ति गायन्ति । गीतायां भगवान् कृष्णश्चाह—'वेदानां सामवेदोऽस्मि'। वेदस्यास्योद्देश्यमस्ति—गानपूर्वकमुपासनम्। साम्प्रतमस्य गरीयसो वेदस्य तिस्र एव शाखाः प्राप्यन्ते। ताश्च इमाः—कौथुमीया, राणायनीया, जैमिनीया।

वेदेषु अथर्ववेदो बहुलविशिष्टताः निदधाति। यदा हि ऋग्वेदादयस्त्रयो वेदा आमुष्मिकं फलं प्रददति तदा अयम् अथर्ववेद ऐहिकमपि फलं प्रयच्छति। जीवनं सुखसमन्वितं कर्तुं येषां साधनानामपेक्षा भवति तेषां सिद्ध्यर्थमिह वेदे विविधानामनुष्ठानानां विधानं विहितमस्ति। पतञ्जलिर्यद्यप्यस्य वेदस्य नव शाखाः समुल्लिखति परमिदानीन्तु पैप्पलादशौनकसंज्ञके द्वे एव शाखे लभ्येते।

ब्राह्मणसाहित्यं नितरामेव विशालं व्यापकं च वर्तते। इदं हि साहित्यं गद्यात्मकं विद्यते। यज्ञस्य विधानं कदा कृतं भवेत्? केन प्रकारेण च कृतं स्यात्? कानि च साधनानि तदर्थमपेक्ष्यन्ते? के च तत्तद्यज्ञानामधिकारिणः? इत्येतद्विषयाणामुपपादनं तत्र (ब्राह्मणसाहित्ये) कृतमस्ति। समग्राह्मणानां ब्राह्मणानां वेदानुसरन्ती संख्यानेन प्रकारेणास्ति—

(१) ऐतरेयब्राह्मणम्, (२) शाङ्खायनब्राह्मणम्-ऋग्वेदीयम्, (३) शतपथब्राह्मणम्-शुक्लयजुर्वेदीयम्, (४) तैत्तिरीयब्राह्मणम्-कृष्णयजुर्वेदीयम्, (५) ताण्ड्यम्, (६) षड्विंशम्, (७) सामविधानम्, (८) आर्षेयम्, (९) दैवतम्, (१०) उपनिषद् ब्राह्मणम्, (११) संहितोपनिषद् ब्राह्मणम्, (१२) वंशब्राह्मणम्, (१३) जैमिनीयं ब्राह्मणम्—सामवेदीयम्, (१४) गोपथब्राह्मणम्—अथर्ववेदीयम्।

ब्राह्मणग्रन्थेषु शतपथब्राह्मणं गुरुतममहत्त्वं भजते। अस्ति च तद् विशालकायम्, यागानुष्ठानानां प्रतिपादनं सर्वोत्तमरीत्या तत्रैव कृतं दृश्यते। प्रस्तौति तद् यज्ञ-यागविषयकं विवरणं साङ्गोपाङ्गम्।

वैदिकवाङ्मये हि आरण्यकं नाम साहित्यमपि महीयः। तत् आध्यात्मिकानां तत्परता, मीमांसा, सृष्टेः, ब्रह्मणः, ... विषये आध्यात्मिकम्। ब्रह्मविद्याया महिमा विशेषेण तत्र प्रतिपादितोऽवाप्यते। तत्कृताध्यात्मिकतत्त्वानां विकास उपनिषत्सु दृष्टो भवति। आरण्यकानीमानि—ऐतरेयमारण्यकम्, शांखायनमारण्यकम्, बृहदारण्यकम्, तैत्तिरीयमारण्यकम्।

उपनिषदामन्तर्भाव आरण्यकेष्वेव। तास्वेषामहविशेषत्वेन मताः। तासु

वेदाना सारभूता सिद्धान्ता सन्ति प्रतिपादिता । अधोलिखितश्लोके निर्दिष्टा उपनिषद् प्राचीनतमा प्रामाणिकाश्च मता सन्ति—

ईशकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरि ।
ऐतरेय च छान्दोग्य बृहदारण्यक दश ॥

शिक्षा-व्याकरण निरुक्त कल्प छन्दः-ज्यौतिषाभिधानि सन्ति षड् वेदाङ्गानि । अनुक्रमणीत्येतन्नाम्ना ये ग्रन्था वैदिका सन्ति प्रसिद्धास्तेषा प्रधाना प्रग्रथन-प्रयोजन मुख्यतो वेदरक्षणमेव ज्ञेयम् ।

वैदिकवाङ्मयाध्ययनेन वैदिकयुगस्य भौगोलिकी स्थिति, आर्याणा निवास स्थलानि, दस्यु पणिप्रभृतीना विवरणम्, सामाजिकमार्थिक राजनीतिक धार्मिकञ्च जीवनम् इत्यादिका सर्वेऽपि विषया प्रकाशमायान्ति । अस्मदीया पूर्वजा समग्र भानु शशि व्योम भूमिप्रभृतितत्त्वाना ज्ञान निदधतिस्म । ते समुद्र नदी पर्वत-वनादीनामुपादेयता सर्वाङ्गीणतया विदन्ति स्म । ते दीर्घदीर्घतरा समुद्र-यात्रा कुर्वन्ति स्म । तेषा सन्निधे महान्ति महान्ति जलयानान्यासन्, तैस्ते सामुद्रिक व्यापारञ्च चक्रु ।

"अनारम्भणे तद्वीरयेथामनास्थाने अग्रभणे समुद्रे" इत्यादिवैदिकमन्त्रा अत्र प्रमाणम् । वैदिके काले का नदी केन नाम्ना को देशो जनपदो वा केन नाम्ना पर्वतो वा केन नामधेयेन व्यवहृतोऽभवदिति वैदिकेभ्यो ग्रन्थेभ्यो यथायथ ज्ञातुमर्हन्ति । तस्मिन् युगेऽस्मद्देशे कुरु-पाञ्चाल कीकट मद्र महावृष-काशि कोशल विदह मगधाङ्गनामका बहवो जनपदा अशोभन्त ब्राह्मणग्रन्थेषु कुरुपञ्चालाना प्रकृष्टा प्रशसा दृष्टा भवति । नदीना वर्णन वेदेषु बहुधा कृतमवलोकित भवति । सिन्धुसरितो वर्णन नितान्तमेव रुचिराया भाषाया विहितमवाप्यते—"अभि त्वा सिन्धो शिशुमिन्नमातरो, वा श्रा अर्षन्ति पयसेव धेनव" इत्यादिमन्त्रे परयन्तु प्रेक्षावन्तो यद्भिरामोपमामाश्रित्य तस्या (सिन्धो) वर्णन कुर्वन्ति ऋषय । ऋग्वेदे सरस्वत्या माहात्म्य भृश घोषित जायते । "युव पदवे पुरुवार-मश्विनास्पृधा श्वेत तरुतार दुवस्यथ", "सुमित्रिया न आप ओषधय सन्तु", "ऊर्क् च मे सिनृता च मे" इत्यादिका सन्ति बहवो मन्त्रा एवविधा ये ज्ञापयन्ति यत् तदानीन्तना भारतीया साधु तासु तासु विद्यासु विज्ञानेषु कलासु च पूर्णमिराभिज्ञता निहितवन्त ।

वैदिकेऽनेहसि सर्वेऽप्याधमा समृद्धा सुखिन आसन् । पुत्रा पुण्यश्च उच्च-

शिक्षा तदा प्रासरन्त । ललितकलानाञ्च तदा प्रसार आसीत् । विवाहस्तदा सुव्यवस्थितस्तथा बहून् दृग्गोचरो भवति । नारीणां सम्मानमासीत्, पुरुषाः सदाचारवन्तः पुरुषार्थप्रियाः शक्तिशालिनो बभूवुः । कृषिकर्मणि पशुपालने च जनता सदा तदा निरताऽवाप्यत । ग्रामेषु जनता निवासं चक्रे । पुरां दुर्गाणां च वर्णनं वैदिके साहित्ये पर्यवलोक्य विदितं जायते यत् तदानीन्तना जनाः सभ्यतायाः प्रशस्तमुच्चशिखरं गता आसन् । "शतभुजिभिस्तमभिह्रुतेरघात् पूर्भी रक्षता" प्रभृति मन्त्राः सन्त्यस्मिन् विषये प्रमाणम् । "कारुरहं ततो भिषक्" इत्यादि मन्त्रा बोधयन्ति यत् तदानीन्तना जना जीवन-यापनाय अर्थोपार्जनाय च बहूनि उद्यमनानि जगृहुः । वैदिके काले शासनपद्धतिः परमकुशला बभूव । शासन-पद्धतिश्च तदा अनेकविधा प्रचलितासीत् । राजानः प्रजावत्सला आसन्, प्रजा राष्ट्रे राजनि च भक्तिभावनिदर्शी—"प्रत्नोऽच्युत प्रमृणीहि शत्रून्", "त्वां विशो वृणतां राज्याय", "इयं ते राट्", "या च राष्ट्रिमतायेऽहम्" इत्यादिमन्त्रेषु तात्कालिक्या राजनीतिकदशाया मनोज्ञं दर्शनं जायते । "युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः" प्रभृतिमन्त्राः सन्ति साक्षिणो यद् वेदकालीनं भारतं धार्मिकं पावनं पवित्रचरित्रं जीवनमुवाह ।

रसालङ्कार-सौन्दर्यकल्पनादिदृष्ट्या च वैदिकं साहित्यमतितरामुत्कृष्टं दृष्टिगोचरं भवति । क्वचित् तत्र शृङ्गाररसस्य सुन्दरता क्वचित् अलङ्काराणां छटा, क्वचित् भावनाभा वीक्ष्यते ।

"इषुर्न श्रिय इषुधे रसना गोपा शनसा नरह्नि" इत्यत्र शृङ्गाररसम्, "अभ्रातेव पुंस एति प्रतीची गर्तारुगिव सनये धनानाम्" इत्यत्र उपमालङ्कारं मनोरमं, "कन्येव तन्वा शाशदाना एषि देवि देवमियक्षमाणम्" इत्यत्र मानवीयाया अनवद्याया भावनाया दिव्याभां प्रेक्षन्तां प्रेक्षावन्तः ।

"अक्षैर्मा दीव्य", "अहमनृतात् सत्यमुपैमि", "कुर्वन्नेवेह कर्माणि जिजीविषेत्", "माता भूमिः पुत्रोऽहं पृथिव्याः", "सर्वा आशा मम मित्रं भवन्तु", "समानी प्रपा सह वो अन्नभागः", "मन्ये मा रिषाम वयं तव", इत्यादिकं असन्दिग्धं उपदेशपरं मन्त्रं सन्ति श्रुतयोऽलङ्क्रियमाणाः ।

उपेक्षते, हन्त, अद्यतनं भारतं तत्त्वं विश्वशुभचिन्तकं सर्वोपकारकं श्रेयःप्रेयस्सम्पादकं वैदिकं वाङ्मयं यत्, पुरातनं भारतं सर्वविधान्यपि दुःखान्यपि

सहमानमपि प्राणानपि हुत्वा ररक्ष । वैदिकसाहित्योपेक्षाया एव कुफलमिदं यदद्य सर्वमपि निखिलमपि जगच्च परमशोचनीया हीना निन्दनीयाञ्च दशा गतमस्ति । प्रार्थ्यते हरिः—

"सर्गादौ स्फुरतां समग्रजगतां य श्रेयसे जज्ञिवा-
नर्थानभ्युदयाय सम्प्रथितवांस्तांस्तांस्तु वैज्ञानिकान् ।
यश्चोच्चावचभाववान् विविधसद् विद्याभि रद्योतवान्
विश्वस्मिन् भुवने स वेदभगवान् भूयो जरीजृम्भताम् ॥ ५



## वेदाङ्गानि किञ्च प्रतीच्यप्रधीनां वैदिकवाङ्मय-मेवा

आधुनिकानामितिहासकाराणां कथनमिदं यत् षण्णामपि वेदाङ्गानां निर्माणं वैदिकयुगस्य उत्तरार्द्धभागेऽभवत्। शिक्षा, व्याकरणम्, कल्प, निरुक्तम्, छन्दः, ज्यौतिषञ्च-इत्येतानि वेदाङ्गानां सन्ति नामानि। पाणिनीय-शिक्षा प्राह—

शिक्षा कल्पोऽथ व्याकरणं निरुक्तं छन्दसां चयः।
ज्योतिषामयनं चैव वेदाङ्गानि षडेव तु॥

षण्णामप्येतेषां वेदाङ्गानामुल्लेखो गोपथब्राह्मण-बौधायनधर्मसूत्र-गौतमधर्मसूत्र-रामायणप्रभृतिप्राचीनग्रन्थेषूपलभ्यते। एतेन तेषां पुरातनतरत्वं सिद्ध्यति। बुद्धावतारात्प्राग्वर्ती काल उत्तरवैदिककालत्वेन निर्धार्यते बुधैः।

अङ्गमित्येतस्य पदस्य व्युत्पत्तिः अङ्ग्यते ज्ञायतेऽनेनेति 'अङ्गम्' इत्येवास्ति। अनयास्य व्युत्पत्तिलभ्योऽर्थः 'उपकारकम्' इति ज्ञेयः। वेदाना भाषा भावश्च उभावपि—दुरूहौ स्तस्तस्माद् वेदार्थावगमनाय वेदाङ्गानामपेक्षा भवति। वेदार्थबोधाय सहायकत्वात् तेषामुपकारकत्वं स्पष्टमेव।

शिक्षा—यथा वैदिकविधीनां सम्पादनार्थं ब्राह्मणग्रन्था उपयुज्यन्ते तथैवोच्चारणप्रयोजनेन शिक्षाया उपयोगो वाञ्छ्यते। वेदानां वैदिकसाहित्यस्य चाध्ययनाध्यापनविषयकविधीनां निर्देशः शिक्षाशास्त्रे कृतः। शिक्षा स्वरवर्णाद्युच्चारणानि केन प्रकारेण कर्तव्यानीत्येतस्मिन् विषये उपदिशति। सायणस्य ऋग्वेदभाष्यभूमिकायामुक्तम्—"स्वरवर्णाद्युच्चारणप्रकारो यत्र शिक्ष्यते उपदिश्यते सा शिक्षेति"। वेदपाठावसरे शुद्धमुच्चारणं स्वरक्रिया च युक्त्या कार्येते अशुद्धोच्चारणयुक्तो भ्रष्टस्वरश्च वेदपाठो महद् दुष्फलं जनयति। स परमहानिकृद् भवति। यज्ञयागोपासनादिकं यत् कार्यमिष्टलाभाय क्रियते तस्मादिष्टलाभो न कदापि अशुद्धेन उच्चारणेन समवाप्तः सञ्जायते तद्विपमशुद्धोच्चारणयुतं कार्यं तु विपदं महतीमुत्पादयति। श्रूयते यत्पुरा 'इन्द्र-शत्रुर्वर्धस्व' इत्येतन्मन्त्रस्याशुद्धोच्चारणं कृतमभूत् तेन यजमानस्यति तदनिष्टकारकमसिद्धयत्। पाणिनीयशिक्षायामुक्तम्—

मन्त्रो हीनः स्वरतो वर्णतो वा, मिथ्याप्रयुक्तो न तमर्थमाह ।

स वाग्वज्रो यजमानं हिनस्ति, यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥

वेदोच्चारणस्य युक्तताये स्वरज्ञानमपेक्ष्यते समीचीनम् । स्वर उदात्तानुदात्तस्वरितभेदेन त्रिविधः । 'उच्चैरुदात्त', 'नीचैरनुदात्त', 'समाहारः स्वरित' इत्येतानि पाणिनिना तेषां त्रयाणां लक्षणानि प्रोक्तानि । 'अनुदात्तपदमेकवर्जम्' इत्यस्मिन् पाणिनीय सूत्रेऽभिहितं यद् वेदस्य प्रतिपदमवश्यमेव केनापि उदात्तेन स्वरेण सम्पृक्तं भवति, अवशिष्टाश्च स्वरा भवन्त्यनुदात्ता । तेष्वेवानुदात्तेषु स्वरेषु अन्यतमः स्वरो हि परिस्थितिविशेषे स्वरितो जायते । स्वरप्रधानताया कारण यदस्त्यस्ति तत् ( स्वराणाम ) अर्थनियन्त्रणं वम् । केन प्रकारेण स्वराणामर्थ नियन्त्रणकारित्वं भवती युपरिष्टादुदाहरण निधायाभिहितमेव । वेदेषु शुद्धोच्चारण सर्वप्रथमवाञ्छितं भवति, तच्च शुद्धोच्चारण शिक्षा समुपदिशति एतस्मादेव हतो परमु वेदाङ्गेषु शिक्षाङ्गस्य मूर्धन्यत्वमाम्नातम् । शिक्षाया अभिमतो विषय प्रातिशाख्येषु दृश्यते । प्रातिशाख्यग्रन्था शिक्षाशास्त्रस्य प्राचीनतमा प्रतिनिधय इव सन्ति । संहितासम्बन्धिन सर्वेऽपि विषयास्तत्र साङ्गोपाङ्गतया प्रतिपादिता ।

शिक्षाशास्त्रेतिहास पुरातनतरः । परं न तद्विषयका प्राचीनतरा ग्रन्था उपलभ्यन्ते । श्रीवाचस्पतिगैरोला स्वकीये इतिहासे लिखन्ति यत् सत्यकेतुविद्यालङ्कारस्य मतमिदं यद् 'जैगीषव्यस्य शिष्यो बाभ्रव्य शिक्षाशास्त्र प्रणिनाय । महाभारते शान्तिपर्वणि आचार्यगालवकृतस्य शिक्षाग्रन्थस्योल्लेखो लभ्यते । भण्डारकरशोध संस्थानपूनातो भारद्वाजशिक्षाया प्रकाशन जातमस्ति । तत्र नागेश्वरभट्टस्य टीका च वर्तते । नागेश्वरमतेन स ग्रन्थो भारद्वाजेन प्रणीत । शिक्षासङ्ग्रहनामके ग्रन्थे द्वात्रिंशच्छिक्षापुस्तकाना सङ्ग्रहोऽवाप्यते । शिक्षा इमाश्चतुर्णामपि वेदाना भिन्न भिन्नशाखासम्बन्धिन सम्बध्नन्ति । बलदेव उपाध्याय स्वकीय 'वैदिकसाहित्य और संस्कृति' इत्येतदभिधेय ग्रन्थे याज्ञवल्क्य शिक्षा वासिष्ठीशिक्षादिसदृशकाना विंशतिप्रमुखानामुल्लेख विदधानो दृश्यते । साम्प्रत समुपलब्धा पाणिनीयशिक्षा प्राचीनशिक्षासूत्राणा साहाय्येन प्रणीताभूदिति बुधाना विचार । अद्यतन युगे पाणिनीयशिक्षा स्वामी दयानन्द उद्धार । इदमपि स्मरणीयमत्र यदिदानीं शुक्लयजुर्वेदे याज्ञवल्क्यशिक्षा, सामवेदे नारद शिक्षा, अथर्ववेदे माण्डूकी शिक्षा किन्तु ऋग्वेदे पाणिनीयशिक्षा प्राप्यन्ते न च अन्या कापि ।

कल्प —वेदाङ्गानां द्वितीयमङ्गमस्ति कल्पः। वेदविहितानां कर्मणां व्यवस्थापनं क्रमपूर्वकं कल्पशास्त्रे कल्पितम्। उक्तञ्च—'कल्पो वेदविहितानां कर्मणाम् आनुपूर्व्येण कल्पनाशास्त्रम्'। कल्पसूत्राणि भवन्ति चतुर्विधानि—(१) श्रौतसूत्रम्, (२) गृह्यसूत्रम्, (३) धर्मसूत्रम्, (४) शुल्बसूत्रम्। श्रौतसूत्रे ब्राह्मणग्रन्थवर्णितानां श्रौतानि-यज्ञानां क्रमबद्धं वर्णनं वर्तते। गृह्यसूत्रे गृह्याग्निसम्बद्धयागानामुपनयनविवाहश्राद्धादिसंस्काराणां विस्तृतं विवरणं प्रस्तुतं विद्यते। धर्मसूत्रे चतुर्णां वर्णानामाश्रमाणाञ्च किञ्च राज्ञामपि कर्तव्यानि निर्दिष्टानि सन्ति। एतान्येव त्रीणि वस्तुतः प्रधानानि कल्पसूत्राणि मतानि। चतुर्थं शुल्बसूत्रन्तु वेदि निर्माणप्रकारं विशेषतः प्रतिपादयति। सूत्रस्यास्य वैज्ञानिकं महत्त्वमस्ति।

श्रौतसूत्रोपपादितो विषयो वस्तुतो दुरूहः। न तत्र जनसामान्यस्य कृते आकर्षणम्। धार्मिकदृष्ट्या श्रौतसूत्रस्य विषयो महत्त्वशाली। आधुनिके युगे श्रौतयागानां विधानं विरलतामुपेतम्। प्राचीनस्य युगस्य धार्मिकेषु विधानेषु याज्ञिकेषु कर्मसु च येषां रुचिरनुरागश्च तैरवश्यमेव श्रौतसूत्राणि अनुशीलनीयानि। ऋग्वेदस्य आश्वलायनं शाङ्खायनञ्च इत्येते द्वे श्रौतसूत्रे स्तः। गृह्यसूत्रे च तदीये-आश्वलायनं शाङ्खायनं च स्तः। शुक्लयजुर्वेदस्य श्रौतसूत्रमेकमेव कात्यायनश्रौतसूत्रमस्ति। गृह्यसूत्रञ्चास्यैकमेव पारस्करगृह्यसूत्रं विद्यते। कृष्णयजुर्वेदसम्बद्धानि श्रौतसूत्राणि-बौधायन-आपस्तम्ब-हिरण्यकेशि-वैखानस-भारद्वाज-मानवनामधेयानि सन्ति। एतस्मिन् वेदे बौधायनं गृह्यसूत्रमपि सुलभमस्ति। सामवेदीयकल्पसूत्रेषु आर्षेयं कल्पसूत्रं प्राचीनतमम्। इदं लाट्यायनात् श्रौतसूत्रादपि प्राचीनतरमिति निगद्यते। वेदस्यास्य मुख्यं गृह्यसूत्रं कौथुमशाखीयं गोभिलगृह्यसूत्रं सुविदितम्। अथर्ववेदस्य श्रौतसूत्रं वैताननामकं किञ्च तदीयं गृह्यसूत्रं कौशिकसंज्ञकं वेद्यम्। गृह्यसूत्रमिदं प्राचीनभारतीययातुविद्याविषयिकामनुपमां च सामग्रीं प्रस्तौति। धर्मसूत्राणि कल्पस्य गौरवमयान्यङ्गानि सन्ति परं न सकलं प्रतिशाखायां धर्मसूत्राणि लभ्यन्ते। यस्मात्तत्र धर्मसूत्रमाश्रित्य मनुस्मृतेर्निर्माणं सञ्जातं तदपि नाद्यपर्यन्तमुपलब्धं भवति। सुतरां बौधायनापस्तम्बहिरण्यकेशिकल्पसूत्राणामुपलब्धिः पूर्णतया भवति अत एव तदीयानि धर्मसूत्राण्यपि प्राप्यन्ते। धर्मसूत्रेषु चतुर्वर्णकर्तव्यानि कर्माणि, व्यवहारा राजधर्म, आश्रमधर्म, विवाह, दायभाग, प्रायश्चित्तम्, नित्यनैमित्तिक कर्म—

दृश्यते अन्ये चानेके विषया सन्ति वर्णिता। धर्मसूत्रेषु प्राचीनतमं गौतम-धर्मसूत्रं विद्यते। गौतमधर्मसूत्रं निर्दिशन्तो याज्ञवल्क्य कुमारिल-शङ्कराचार्य-मेधातिथय प्राप्यन्ते। बोधायनोऽपि धर्मसूत्रस्य प्राचीनतम आचार्यो मत। वसिष्ठश्च प्रतिष्ठितेषु धर्मसूत्रकारेषु गण्यते। तदीय धर्मशास्त्रं यद्यपि लघुकाय परं गुणविपुलत्वेन महनीयमस्ति। वसिष्ठस्य जीवनदर्शनमायन्तमुदात्तमा-ध्यात्मकमस्ति। स सदाचारमय जीवन यापयितुमुपदिशति। उपदिशति च दुर्बुद्धिप्रिया तृष्णा परिहर्तुम्। न वसिष्ठस्य श्लोकवद्धा स्मृति प्रकाशं गतास्ति। बहवो मनुस्मृतिश्लोकास्तत्र गद्यात्मकेषु सूत्रेषु दृष्टिगोचरा भवन्ति। विदुषां धारणेयं यद् वसिष्ठस्य धर्मशास्त्रमेव वर्तमानमनुस्मृते किंवा तदीयात् प्राचीन-विशुद्धमूलरूपात् तान् श्लोकान् उद्धृताश्चकार।

व्याकरणम्—वेदाना रक्षकत्वात्, वेदार्थावबोधने सहायकत्वात् प्रकृति-प्रत्ययोपदेशपुरस्सरपदस्वरूपप्रतिष्ठापकत्वादर्थनिर्णयनकृस्माधनेष्वन्यतमसाधनत्वेन प्रयुक्तत्वात् व्याकरण नाम अङ्ग नितान्तमेव महनीयं श्रेष्ठञ्च अङ्गमध्येषु स्मृतम्। व्याकरणस्य व्युत्पत्ति ( व्याक्रियन्ते शब्दा अनेनेति व्याकरणम् ) एम्योऽर्थोऽस्ति पदमीमांसाकर शास्त्रम्। तद् वेदस्य मुखत्वेन स्मृतम्—'मुखं व्याकरणं स्मृतम्'। 'चत्वारि शृङ्गा त्रयो अस्य पादा' इत्यादिशब्दैं ऋग्वेदस्त-थ्यशासन्द्रुयते। आचार्यवररुचि व्याकरणशास्त्रमहनीयता गायन् तदध्ययनप्रयो-जनानि चेत् पञ्च प्रतिपादयति तदा महर्षि पतञ्जलिस्तदध्ययनप्रयोजनानि त्रयोदश ब्रूते। व्याकरणशास्त्रं नितरा प्राचीनं शास्त्रमस्ति। गोपथब्राह्मणे व्या करणविषया सन्ति निर्दिष्टा स्पष्टत व्याकरणशास्त्रेतिहासावलोकनेन विदितं भवति यद् भारते पुरा अनेके व्याकरणकर्तार आचार्या बभूवु। तत्र आपिशलि-शाकटायन-गार्ग्य-इन्द्रादीना व्याकरणकर्तॄणामुल्लेख कृतोऽवाप्यते। परं साम्प्रतं तु पाणिनीय व्याकरणमेव प्राप्यते। तत्कृतो ग्रन्थ —'अष्टाध्यायी-'सर्वाङ्गसुस-सितो भूत्वा विभाति। तत्र वैज्ञानिकया पद्धत्या व्याकरणं प्रतिपादितमस्ति। यादृशं हि सुललितं देववाण्या शास्त्रीय विवेचन तत्र दृश्यते नान्यत्र तादृश क्वापि विलोक्यते। तत्र लौकिकं वैदिकमुभयविधमपि व्याकरणमाम्नातम्।

निरुक्तम्—निरुच्यते निरशेषेणोपदिश्यते तत् सदर्थावबोधनाय पदजातं यत्र तन्निरुक्तमिति कथ्यते। निरुक्तस्यास्ति विषय—वैदिक-पदानां व्युत्पादनम्। तद् दुरुहपदानामर्थावबोधनाय वैदिकपदव्याख्यानाय विरचितमभूत्। तदध्य-

यनात् प्राग्व्याकरणशास्त्रस्याभिन्नत्वं कथ्यते। तन्महत्त्वमधिकृत्य दुर्गाचार्यः प्राह—'प्रधानं चेदमितरेभ्योऽङ्गेभ्यः सर्वशास्त्रेभ्यश्च अर्थपरिज्ञानाभिनिवेशात्। अर्थो हि प्रधानं तद्गुणः शब्दः स च इतरेषु व्याकरणादिषु चिन्त्यते। यथा शब्दलक्षणपरिज्ञानं सर्वशास्त्रेषु व्याकरणात् एवं शब्दार्थनिर्वचन-परिज्ञानं निरुक्तात्।' भाषाशास्त्रदृष्ट्या निरुक्तमनुपमं रत्नम्। निरुक्तस्य विद्वान् टीकाकारो दुर्गाचार्यः कथयति-यन्निरुक्तान्यासन् चतुर्दश। यास्कस्य निरुक्ते द्वादश निरुक्तकाराणां मतानि निर्दिष्टानि प्राप्यन्ते। साम्प्रतं तु इदं यास्कविरचितं निरुक्तमेव निरुक्ताख्यस्य वेदाङ्गस्य प्रतिनिधित्वं करोति। यास्कः पाणिनेरपि प्राचीनतरः। महाभारते शान्तिपर्वणि 'यास्को मामृषिरव्यग्रो नैकयज्ञेषु गीतवान्' इत्यादि श्लोके निर्दिष्टः संलक्ष्यते। निरुक्तं वस्तुतः स्वयमेव भाष्यं मूलस्य, परं नितान्तदुरूहत्वात् टीकाकाराः तदर्थावगमनाय कठोरतरं श्रमं कृतवन्तः। तद् वैदिकशब्दकोशनिघण्टुग्रन्थस्य भाष्यम्। निरुक्तप्रतिपादिता विषया अधःस्थितेन श्लोकेनोपस्थाप्यन्ते—

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्॥

छन्दः—वेदाः सन्ति छन्दोबद्धाः अतस्तेषामुच्चारणनिमित्ताय छन्दोज्ञानं नितरामपेक्षितम्। छन्दोऽभिधेनैतेनाङ्गेन छन्दसां सर्वेषामुच्चारणविधिस्तद्गतिप्रकारस्तद्गानरीतिश्च विदिता जायन्ते। तस्माद् वैदिकमन्त्रोच्चारणप्रयोजनेन तदध्ययनं पूर्वमुचितम्। विना छन्दोज्ञानं यो वेदाध्ययनयजनयाजनादिकार्याणि करोति तस्य तानि सर्वाणि कार्याणि न भवन्ति फलदानि। उक्तञ्चात्र कात्यायनेन—

'यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वा अध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पात्यते प्रमीयते वा पापीयान् भवति।'

संहिताब्राह्मणेषु छन्दोनाम्नामुपलभ्यत्वात् प्रतीयते यच्छन्दोऽङ्गस्याप्युत्पत्तिर्वैदिकयुग एव संवृत्ता। 'छन्दः' इत्येतस्य पदस्य व्युत्पत्तिरियम्—छन्दयति (पृणाति) इति छन्दो वा छन्दयति (आह्लादयति) इति छन्दोऽथवा छन्द्यतेऽनेनेति छन्दः। 'छन्दांसिच्छादनादि'त्येतद्यास्ककथनात् वेदार्थवाचकं छन्द इत्येतत्पदं छद् (छादने) धातोर्निष्पन्नम्। वेदावरणकारित्वात् छन्द इति पदं युक्तमेव। दुर्गाचार्य आह—'यदेभिरात्मानमाच्छादयन् देवा मृत्योर्बिभ्यत', तच्छन्दसां छन्दस्त्वम्।' श्रुतिषु छन्दसो महनीयता स्पष्टं गीता। असुरकृतविघ्न-

बाधाभ्यो रक्षकत्वात् तस्य, तच्छक्तिशाली सैनिक इव मतम् । उक्तञ्च—'दक्षिणतोऽसुरान् रक्षांसि त्वष्ट्राम्यपहन्ति त्रिष्टुब्भिर्वज्रो वैरविन्दुद् ।' वैदिकानि छन्दांस्यनेकभेदोपभेदवन्ति सन्ति । प्रधानेषु वैदिकेषु छन्दःसु इमानि गण्यन्ते—गायत्री, उष्णिक, अनुष्टुप, बृहती, पङ्क्ति, त्रिष्टुप, जगती, अतिजगती, शक्वरी, अतिशक्वरी, धृति, प्रकृति, आकृति, विकृति, संस्कृति, अभिकृति, उत्कृतिश्च । वैदिकच्छन्दस विशिष्टतेयं यत् तानि अक्षर-गणनाया भवन्ति नियतानि । न तत्राक्षराणां गुरुलघुक्रमस्य कश्चिन्नियमविशेष । उक्तञ्च कात्यायनेन—'यदक्षरपरिमाणं तच्छन्द' । छन्दःशास्त्रसम्बन्धी प्राचीनतमो ग्रन्थ पिङ्गलकृत पिङ्गलसूत्रमस्ति । पिङ्गलाचार्य कदा बभूवेति निश्चयपूर्वकं न वक्तुं शक्यते । अस्मच्छन्दःसूत्रस्य भट्टहलायुधकृता मृतसञ्जीवनी व्याख्या प्रसिद्धास्ति । लौकिकच्छन्दसां विकास पश्च एव वैदिकच्छन्दोभ्यो जात ।

ज्यौतिषम्—यज्ञभागा सन्ति बहुविधा केचन यज्ञा एवंविधा विधाने नीता ये सम्वत्सरसम्बन्धिन सन्ति । केचन एतादृशा सन्ति ये ऋतुसम्बन्धिनो वर्तन्ते । केचन च तिथि मास-पक्ष-नक्षत्रपरका सन्ति । भावोऽयं वेदेषु यज्ञभागानां विधानं भिन्न भिन्नकालेषु कृतमवाप्यते । तैत्तिरीयब्राह्मण वदति—ब्राह्मणो वसन्तेऽग्निमादधीत क्षत्रियो ग्रीष्मे वैश्य शरदि । अष्टकाया फाल्गुन्या पूर्णमासे च दीक्षाया विधानं विदधत् ताण्ड्यब्राह्मण वीक्षितं भवति । एतद्विधाया वेदाज्ञाया पालनं ज्यौतिषशास्त्रज्ञाने सत्येव यथायथं भवितुमर्हति । तस्माज्ज्यौतिषं नाम वेदाङ्गमपि नैजं वैशिष्ट्यं निदधाति । यज्ञस्य यथार्थज्ञाता ज्योतिर्विदेव वेदाङ्गज्यौतिषे कथितञ्च—

वेदा हि यज्ञार्थमभिप्रवृत्ता
कालानि पूर्वा विहिताश्च यज्ञा ।
तस्मादिदं कालविधानशास्त्रं
यो ज्यौतिषं वेद स वेद यज्ञम् ॥

वेदाङ्गज्यौतिषग्रन्थो लगधप्रणीत । ग्रन्थस्यास्य श्लोकाना रहस्यं क्लिष्टत्वेनेद वस्तुतो विद्वद्धौरेयाणामपि दुर्गमम् । ग्रन्थस्यास्यारचनाकालस्य ३४०० वर्षाणि व्यतीतानीति शङ्करबालकृष्णदीक्षितस्य विचार । लोकमान्यतिलक-सुधाकरद्विवेदि-डॉ० थीबौ प्रभृतयो विद्वांसो ग्रन्थस्यास्य श्लोकान् व्याख्यातुं प्रायतन्त । भारतीयस्य ज्योतिःशास्त्रस्य ग्रन्थ एष आद्य । मन्ये, न तस्मात् प्राक् ज्योतिषि क्वापि काचिद् कृतिर्लिखिताभूत् ।

गच्छता कालेन शास्त्रमिदं संहिता-गणित-होराख्येषु त्रिषु भागेषु आत्मानं प्रकटीचकार । आर्यभट्ट-वराहमिहिर-ब्रह्मगुप्त-भास्कराचार्यप्रभृतयोऽस्याचार्यवर्या धुरन्धराः प्रतिभाशालिनो निश्चिकिरे ज्योतिर्विदोऽद्भुतान् सिद्धान्तान् अवतार्य शास्त्रमिदमभिनवेन रूपेण विभूषयाञ्चक्रुः । शास्त्रमिदं त्रिकालवर्तिनीमपि स्थितिं करतलामलकवत् करोति । एतेन परोक्षं भाविकालस्थितमपि वस्तु प्रत्यक्षं जायते । उक्तं च यथैवास्य महिम्नि—

> वेदस्य निर्मलं चक्षुर्ज्योतिःशास्त्रमकल्मषम् ।
> विनैतदखिलं श्रौतं स्मार्तं कर्म न सिद्ध्यति ॥

सर्वाण्यपि दर्शनानि सकलानि शास्त्राणि, सर्वाश्चोपनिषदो येषां हि परात्परभूतानां वेदानां सौन्दर्य-सुधां सततमहर्निशं पिबन्त्योऽपि न तृप्यन्ति तेषां वेदान् अनुशीलयितुं यथा शाकल्य-आत्रेय-आर्यस्कन्दस्वामि-माधवभट्ट-नारायण-उद्गीथ-वेङ्कटमाधव-आनन्दतीर्थभट्टस्वामि-गुहदेव-गुरु-भट्टभास्करमिश्र-उवट-महीधर-नरस्वामि-गुणविष्णु-सायणप्रभृतयः प्रीत्या भक्त्या च नितान्तमेव प्रयासं चक्रिरे तथैव देशान्तरीया अपि विपश्चितो वेदामृतं पातुं तान् व्याख्यातुं चाऽर्थयितुं प्रायतन्त ।

एतस्यां दिशि प्रतीच्यानां पण्डितानां चेतोऽष्टादशशतकस्योत्तरार्धभागे आकृष्टं बभूव । १८०५ तमेऽब्दे कोलब्रुकमहोदयः 'एशियाटिकरिसर्चेस' इत्येतदभिधाने पत्रे वेदविषयकं निबन्धं लिलेख । तत्र स वैदिकवाङ्मयस्य बहूनां ग्रन्थानां विवरणेन सह तदीयां महत्तां प्राचीनतां सविस्तरम् । वेदानुशीलन-निमित्तेन पाश्चात्यानां विपश्चितामयं हि आद्यः प्रयास आसीत् । एष निबन्धः पश्चिमीयविद्वद्वर्गे मानसं वैदिकसाहित्याध्ययनार्थमुत्कण्ठमजीजनत् । रोजेन-नामा जर्मनीयो विद्वान् सोत्साहम् ऋग्वेदं सम्पादयितुं प्रचक्रमे । परं तदीयो मृत्युर्न तं तत् स्तुत्यं कार्यं समाप्तिं नेतुमादिदेश । तस्मात् केवलं प्रथमाष्टकमेव प्रकाशितं भवितुमशकत् । पेरिसस्थसंस्कृतशिक्षकबरनूफमहाभागस्योद्योगेन तदीया ध्रुवपदा अन्तेवासिनो वेदानुशीलनकार्यं प्रशस्यपदं कार्यं विदधिरे ।

षट्चत्वारिंशदधिकाष्टादशशततमेऽब्दीये वत्सरे रूडाल्फरौथनामा जर्मनीयो धीमान् वैदिकं साहित्यमितिहासञ्चाधिकृत्य लघुपुस्तिकामेकां कृतिमरचयत् । कृतेर्म-हीयस्कत्वात् पश्चिमीयेषु देशेषु ( यूरोपे ) वेदानुशीलनं प्रति गम्भीरा प्रवृत्ति-

रूदपादि । ततश्च रॉथमहोदय एकत्रैतादृश ग्रन्थ महनीयमजग्रन्थत् । तत्र वेदस्य लौकिकसंस्कृतग्रन्थानाञ्च पदानि ( शब्दा ) तेषामर्थविकासक्रमेण सन्निहितान्यक्रियन्त । अद्भुते तस्मिन् कोशे वैदिकशब्दार्थ-सङ्कलनं रॉथश्चकार लौकिकसंस्कृत-शब्दार्थनिर्णयनञ्च बोटलिंग कृतवान् । कोषोऽयं वस्तुतोऽद्वितीय । संस्कृतशब्दानामैतिहासिकार्थविकासक्रमबोधकत्वान्नूनमतितरामुपादेयोऽसौ ग्रन्थ ।

रॉथमहाशयस्य मित्राणा शिष्याणाञ्चास्ति विशाला सख्या । सा वेदानुशीलनकर्मणि उल्लेखनीय भाग जग्राह । एतेषु केचन वैदिकग्रन्थाना वैज्ञानिकानि संस्करणानि, इतरे वैदिकग्रन्थानाम् अनुवादम्, अपरे वेदार्थावगाहनपरकग्रन्थान्, अन्ये च वैदिकसंस्कृतिस्वरूपोद्भावनपराणि व्याख्यात्मकानि पुस्तकानि प्राणैषु ।

ये विद्वांसो वेदमधिकृत्य ग्रन्थान् अकार्षुस्तेषु मैक्समूलर प्रतीच्यपण्डितकुल्लाम । स वेदविषयकान् बहून् ग्रन्थान् विरचय्य वैदिक सिद्धान्त धर्मञ्च लोकप्रियता निनाय । तदीयमतिमहत्त्वपूर्णं कार्यमस्ति सायणकृतस्य ऋग्वेदभाष्यस्य विवेचनपूर्णं सम्पादनम् । ततश्च स 'प्राचीनवैदिकसंस्कृतसाहित्ये' वैदिकसाहित्यस्य वैदुष्यपूर्णां मीमांसा चकार, 'पवित्रप्राच्यग्रन्थमालाया' स्वय वैदिकग्रन्थान् अनूदितवान् किञ्चान्येषां विदुषामपि अनुवादांस्तत्र प्रकाशयामास । डॉ० वेबरोऽपि प्रख्यात प्रतीच्येषु प्रधीषु । स नैजपाण्डित्येनाऽलोचकान् विस्मापयामास । स यजुर्वेदसंहितां तैत्तिरीयसंहिताञ्च सम्पादितवान् अथ च इन्दिशेस्तुदियनाख्यजर्मनीयशोधपत्रिकया वैदिकमनुसन्धान च प्रवर्धयामास । आउफ्रेक्टनामा विद्वान् ऋग्वेद रोमनलिप्या प्रकाशयामास । जर्मनीयो विपश्चित् श्रोदरो मैत्रायणीसंहिताया वैज्ञानिकं संस्करण सम्पाद्य काठकसंहितायाञ्च नैपुण्येन कार्यं कृतवान् । स्टेवेन्सनो राणायनीशाखाया साममहितामाङ्गलभाषायां बेन्फीमहोदयश्च कौथुमशाखाया सामसंहितां जर्मनीभाषायामनुवादञ्चक्रतु । रॉथोह्निटनी च अथर्ववेदस्य संस्करण ललिततया रीत्या प्रकाशनिन्यतु । पिप्पलादशाखाया अथर्ववेदसंहिता काश्मीरप्रदेशात् केवलमेका लब्धाऽभवत् । सा च अतिजीर्णां दशा गतासीत् पर प्रो० ब्लूमफील्डो डॉ० गार्बे च ता छायाचित्रे परिणमय्य त्रिषु दीर्घकायेषु खण्डेषु प्रकाशयाञ्चक्रतु । तयोरेव प्रयासो महान् प्रतीच्यानां विद्यानुरागिणां विज्ञानां संस्कृतभाषाया रक्षणे महतीं प्रीतिं दृढञ्चानुरागमतुलञ्च स्नेहमभिव्यनक्ति । तत्रत्या अनेके च विद्वांस समये समये ब्राह्मणानां श्रौतसू-

( ग ) प्रमाणमीमांसायां ( एपिस्टेमोलॉज्यां ) कार्यमस्ति-ज्ञानस्य विवेचनम्। इह ज्ञानस्य स्वरूप, ज्ञानस्य प्रामाण्य, ज्ञानस्यावधि, सत्यम् अन्यांश्चैवंविधान् विषयान् समीक्षते।

( ङ ) तर्कं सत्यासत्यविनु प्रमाणविनु च प्रयुज्यमानान् विशिष्टान् नियमान् विशदतया यथार्थतया च वर्णयति तर्कशास्त्रम् ( लॉजिक ) तस्मात् ज्ञानस्य व्यावहारिकस्य प्रक्रियाया उपपादनमेतदीय कार्यं वेदम्।

( ई ) आचारमीमांसा (एथिक्स) आचार मीमांसते। किं नाम कर्त्तव्यम्? तत् कतिविधम्? कर्त्तव्याकर्तव्यनिर्णयश्च कस्मिन्नाधारे कर्तुं शक्यम्—इत्येतेषां प्रश्नानां शुष्कं विवेचनमत्र कृतमस्ति। प्रतिमानवो मानव-जीवनस्य ध्येयं जिज्ञासते ईप्सति च स कल्याणं नैजम् एतद्विधेषु च विषयेषु प्रकाशपातनमाचारमीमांसायाः प्रमुखं कार्यमस्ति।

( उ ) 'सौन्दर्यमीमांसा' (एस्थेटिक्स) इत्येतेन शब्देनैव स्पष्टं विदितं सञ्जायते यदेतद्दर्शनं सौन्दर्यं व्याचष्टे। किं नाम सौन्दर्यम्? सौन्दर्यस्य निर्णयनं कथं स्यात्? कस्य चन पदार्थस्यावलोकनात् सुखं वा दुःखं कस्मात्कारणादुत्पद्यते? सुन्दरत्वस्य तात्त्विकी व्याख्या च का? इत्येते विषयाः सौन्दर्यमीमांसायां न केवलं प्रतिपादिताः सन्ति तत्र सौन्दर्यस्य कलायाः परिणामत कलाया विवेचनं च निरूपितमस्ति।

( ऊ ) मनोविज्ञाने (साइकोलॉजी) मनसो विविधानां प्रवृत्तीनां शास्त्रीयपद्धत्या निरूपणं कृतं वर्तते। डॉक्टर फ्रायडेन नेजसोऽविष्कारेण वरे मनोविज्ञानस्य यो नूतनोऽवयवः प्रवर्तितस्तेन दार्शनिके संसार एव न ततोऽन्यत्रापि महत्कौतूहलमुत्पादितमस्ति।

प्रतीच्यदर्शनस्योद्देश्यं भारतीयदर्शनस्योद्देश्याद्भिन्नमेव। यदा भारतीयदर्शनस्योद्देश्य दुःख-निवृत्तिः, मृत्युविजयः, मोक्षाधिगमनञ्चास्ति तदा प्रतीच्यदर्शनस्य प्रादुर्भावः कुतूहलधियो ज्ञानपिपासाया उपशमनाय राजनीतिकप्रयोजननिष्पादनाय च जातोऽस्ति। अर्थ-काम धर्मार्जनं भारतीय दर्शनं स्वकीयमवान्तरमेवोद्देश्यं मन्यते।

प्रायेण पाश्चात्यदर्शनस्य गतिर्मन:पर्यन्तमेव दृश्यते। नास्तिवादिनोऽपि मनस आत्मनश्चान्तराले कमपि भेदं मन्यन्ते। वर्तमानसृष्टेः प्राग् जातानां सृष्टीनामपि विचारस्तत्र न कृतोऽवाप्यते। प्राचीनतमेष्वपि यूनानीयेषु दर्शनेषु, तत्रापि

न जडाजडयोर्मध्ये कोऽपि भेदोऽङ्गीकृत । कस्मात्प्रथमद्रव्याज्जगदिदमुत्पन्नमभू-दित्येव विषयस्तस्य विचारणीयो विषय ।

यूनानाभिधानेदेशे ईशवीयाब्दात् प्राक् षष्ठे शतके थैलीज एनैक्सीमेण्डर-एनैक्सिमैनीज नामधेयास्त्रयो दार्शनिका बभूवु । एतेषु थैलीजो जलात्, एनैक्सी-मेण्डर कस्माचिदनियतद्रव्यात्, एनैक्सिमैनीजश्च वायो सृष्टेरुद्भव मन्यते। आस्मान वा ईश्वरमधिकृत्य नैते दार्शनिका कामपि चर्चां कृतवन्त । सन्तीमे वस्तुतो द्रव्यवादिन । चेतनाचेतनताविशिष्ट द्रव्यमेव मूलकारणमित्येषा तेषा मान्यता । एनैक्सिमेण्डरस्य कथनमेतद् यद् विश्वस्योत्पत्ति अपरिच्छिन्नपरिमाणाद् द्रव्याद् भवति तत्रैव च लीयते पुन । स द्रव्यस्य अपरिमितत्वमनश्वरत्व मन्य मानस्तदाया गति शाश्वतिकीं मनुते । वक्ति च स यद् द्रव्यमेवैतत् शैत्यौष्ण्य भूसलिलसमीरादीनां मूलम् । एनैक्सिमैनीजो वायु प्रथम द्रव्यस्वीकुर्वाणो वायोरेव शीतलत्वोष्णताभ्या यथाक्रम घनत्व शिथिलत्वञ्चोरपद्येते, वायो शैत्याज्जलमथ-चौष्ण्यादग्निरजायत वस्तुतो जगदिद वायौ स्थितमिति वक्ति । हिप्पो डायोजि-नीजश्चोपरिनिर्दिष्टानामेव थैलीजप्रभृतीनामनुयायिनावास्ताम् । तत्र हिप्पो आर्द्र तातोऽग्निरग्निजल सपर्यापसार उद्भूतेति विश्वमिति । पर डायोजिनीज वायुमेव मूलकारणत्वेनोपपादयति । एनैक्सिगोरस पीथागोरसौ दार्शनिकावीश्वर-वादिनावास्ताम् । एनैक्सिगोरसो बहूनां तत्त्वानामस्तित्व स्वीकुरुते । पर-मीश्वरस्य प्रेरणामवाप्यैव तेषु तत्त्वेषु सृष्टिप्रति कारणत्वमुपपद्यते नान्यथेति स आह । पाइथोगोरसश्च यूनानीयेषु प्राचीनतरेषु दार्शनिकेषु महान् तत्त्ववेत्ताऽभूत्। अस्य दार्शनिकस्य सृष्टी मतमतिसूक्ष्मम् । पदार्थाना मूलतत्त्व प्रकृतिर्न । अपि तु तदीय आकार एवेत्यस्य विचार सङ्गीताध्ययनेन समानुपातविषयक तथ्यमावि ष्कृत्य अय विद्वान् सामानुपातिक तथ्य ज्यात सकलेष्वपि पदार्थेषु तरलीभव दनुभवति । शरीर स्वस्थ तावदेव विलोक्यते यावत् तदीया मौलिका गुणास्तत्र ( शरीरे ) समानुपातेन स्थिता भवन्ति तेषां असमानुपातता शरीरे रोग जन-यति, अतो वस्तुतथ्यमाकारमध्यास्ते । एतदीया मान्यतेय यत् सर्वे पदार्था अङ्का सन्ति । ईश्वरोऽपि अङ्केषु एकाऽभिधोऽङ्क । अन्ये सर्वे एवाङ्कास्तस्मादेव समुद्भूता । अस्यैव सिद्धान्त "एकोऽह बहु स्याम्" इत्येत श्रौत सिद्धान्त सवदति ।

न विश्वस्योत्पत्ति कदाप्यभवन्न च तस्य नाश एव स्यादित्येतत् परामेनी-

डॉज़स्य मतं मीमांसकानां 'न कदाचिदनीदृशं जगत्' इत्येतन्मतमनुरुन्धद् दृश्यते। या का अपि तत्र गतयः प्रतिलक्ष्यन्ते वस्तुनो न गतयः केवलं भ्रमः।

हिरेक्लिटस (ई० पू० ५४०–४७५) अग्निमेव संसारस्य मूलं तत्त्वमभंस्त। अवगमश्च न परिणामस्य प्रतीकमिव। मूलवस्तुनो, नित्यत्वे विश्वमत्रापि 'जगति पदार्था सन्ति बहव सततं परिवर्तिनश्च' इत्येतदपि मेने। अत एवासौ परिवर्तनवादिषु गण्यते। भगवान् बुद्धोऽस्मद्भारते यं परिणामवादं व्याचख्यौ तमेव यूरोपे स प्रत्यपादयत्। तस्य 'जगतो मूलतत्त्वमग्नि' रित्येष विचारः कठोपनिषदि गीतम् 'अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव'—इत्येनं विचारमनुवर्तमान इव संलक्ष्यते। "प्राकृत-घटनाचक्रस्य व्यवस्थापूर्वकमञ्चलनं ज्ञापयतीदं यत् तन्मूले कापि सर्वज्ञ-बुद्धिर्नियतमेव विराजते" इत्येष तस्य सिद्धान्त।

डिमाक्रिटसो 'भौतिकशास्त्रस्य जनक' इति कथ्यते। दार्शनिके संसारे तु तस्य सम्मानमस्त्येव वैज्ञानिकमपि जगत् तं परमादरदृष्ट्या प्रेक्षते। तदुद्भावितेन परमाणुवादेन भौतिकं शास्त्रं ह्यात्मानमुत्थापयितुं विशेषमाहात्म्यं लभते स्म। विश्वस्य रचनायां परमाणुरेव मूलसाधनमित्युपपादयन् स ब्रूते यत् पदार्थानामवान्तर गुण-रूप-शब्द-गन्ध-रसा व्यवहारतो नानृता। परमार्थतश्चेत् किमपि वस्तु सत्यं भवितुमर्हति तर्हि तत् परमाणुरेव।

भौतिक-विज्ञानाभ्युदयावतारकत्वात् डिमाक्रिटसम्प्रति वैज्ञानिकाः सन्ति प्रगतमाला।

इटल्यन्तर्गतेलियापुर्यां सञ्जातेषु दार्शनिकेषु जेनोफेनीजो (५७०–४८० ई० पू०) मूर्धन्योऽबभूव। अस्तुत्वं प्रतीच्यस्य संसारस्याद्यमद्वैतवादिनं सर्वेश्वरवादिनञ्च मनुते। तस्य सिद्धान्तोऽयं 'विश्वमेकम् एकं च तद् ब्रह्म' इति। परमीनीडीज—जेनोप्रस्तुतयो दर्शनशास्त्रिणस्तदीयमद्वैतवादं दृढं पर्यपुष्णन्। परमीनीडीजस्याभिधानमस्ति यत् सद्रूपं जगत् कदापि न असतः समुद्भवितुं प्रभवति। जगदस्ति सदेकमखण्डञ्च वस्तु। तत्र दृश्यमानानि परिवर्तनानि न सन्ति सत्यानि। सिद्धान्तमेतं जेनो युक्तिभिस्तर्कैश्च सम्यक् पर्यपोषयत्। विवेकः सम्यग्ज्ञानस्यास्ति साधनमिन्द्रियजन्यं ज्ञानमसत्यमित्येषास्ति एषा दार्शनिकानां मान्यता।

प्रतीच्यानां परमाणुवादिनां परमाणुवादो भारतीयानां परमाणुवादिनां

परमाणुवादाद् भिन्नोऽपि समवाप्यते । प्रतीच्य परमाणुवाद परमाणोर्गतिशीलत्व जगत्पदार्थनिर्माणकारित्वञ्च स्वीकुरुते । परं भारतीय परमाणुवाद परमाणु जड मन्यते, परमेश्वरेच्छया तत्र गतिरुत्पद्यते—इत्येतच्च तन्मतम् । प्रतीच्येषु देशेषु सोफिस्ट इत्येता सज्ञा भजमाना दार्शनिका मानवजीवनस्य समस्या समीक्ष माणा पर्यवलोकयन्ते । एषामुपदेशेषु सत्य तत्त्वज्ञान व्याहन्त । प्रोटेगोरस एतेषु श्रेष्ठो विद्वान् सञ्जात । 'मनुष्य एव पदार्थाना मानदण्ड' इत्येषा हि तस्योक्ति-रासीत् । सोफिस्टाना समयो यूनानीयदर्शनस्य सुवर्णसमय इव मतो भवति । यतो हि तस्मिन् युगे सुकरात (सोक्रेटीज) अफलातून (प्लेटो) अरस्तू (एरिस्टाटल) च समजनिषत । एते दार्शनिका पाश्चात्य दर्शन नैजैर्मौलिकै-र्विचारै सर्वथैव समुन्नमयाम्बभूवु ।

सुकरातो ज्ञानात्पर न किमप्यवगच्छति स्म । न स धर्म ज्ञानाद् भिन्नममन्यत । तन्मतेन धर्मज्ञानयोर्मध्येऽभिन्नतैव वर्तते । स स्वोपदेशस्य स्व श्रद्धायाश्च विषय ज्ञानमाचारञ्च कृतवान् । तयोरुपर्येव तस्य निष्ठासीद् । दार्श-निके जगति तस्य महनीय कार्यमासीत्—ज्ञानाधिगमनार्थं निगमनपद्धते प्रयोगोऽथ च तद्द्वारेण ज्ञानोपलब्ध्यर्थमीहा ।

तत्त्वज्ञान स्वीकृत्य प्लेटो दार्शनिकेन प्रतिपादिता सिद्धान्ता सन्ति वस्तु तस्तु महत्त्वशालिन । अस्ति स ईश्वरवादी । तन्मतेन ईश्वर एव स्रष्टा स्रष्टे । स संसार महाप्रकृष्ट जीवनोज्ज्वल वस्तु मन्यते । स वक्ति यज्जगत शरीरं इस मस्ति परमात्मास्यदस्य । मनुष्यस्यात्मा परिणामिना जगता सह स्वकीयं सम्बन्धमिन्द्रियजन्यज्ञानेन प्रतिष्ठापयति किञ्च पारमार्थिकेन जगता सार्धं स प्रज्ञया स्व सम्बन्ध सम्बध्नाति । सद्व प्लेटो प्रत्रेच्छा विषय वासनानो समुच्चय-मेवात्मेति वदति । स मन्यते—यदात्मास्यमर । स तत्रायाति ततो निर्याति च । श्रेय-प्राप्तिरेव मानवस्योद्देश्यमन्त्यम् । श्रेयस्याप्तञ्च न मानवजीवनस्य लक्ष्यमन्तिमम् । ज्ञान, शौर्यम्, आत्मसंयम, न्यायपरता—सन्त्येते चत्वार सद्गुणा इत्येष तदीयो विचार । चातुर्वर्ण्ये च स प्रीति निदधौ । वस्तुत प्रतीच्यं दर्शनशास्त्रमप्रति प्लेटो महाभागस्य दान महनीय दान मतं भवति ।

अरस्तु (३८४-३२२ ई० पू०) अनुभववादितायां यथार्थवादितायां च स्वगुरो प्लेटो दार्शनिकादुद्भटतर आसीद् । इन्द्रियग्राह्ये ससारे श्रद्धानोऽप्य-सावन्यविधामपि सत्तां न प्रत्याचख्यौ । ज्ञानप्रयोजनेन स प्रत्ययस्य महनी-

पताया धियं निबबन्ध। यथार्थवादित्वात् स भौतिकाज्जगतो भिन्नं स्वतन्त्रकमपि विचारलोकमङ्गीकर्तुमाशमानं नोद्यतश्चकार। सोऽनारतमेतद् दर्शयितुं प्रायस्यद् यत् समवेततया जगज्ज्ञानसत्ताभिव्यक्तिक्रियोऽज्ञानि व्यवस्थान्तराणि परस्परं सम्बन्धमविरोधश्च सन्निष्ठेते। स द्रव्यमाकारञ्च प्रकल्प्य सकलस्यापि संसारस्य व्याख्यानार्थं स्वाधारस्तदुपद्याय प्रायतिष्ट। स आकारमेवेश्वरं मने। स 'ईश्वरः स्रष्टेति' न विश्वसितिस्म। परमेश्वरस्य सम्प्रत्ययावस्य कामनानां केन्द्रत्वमेवास्य स्वाद्रुस्ते। तद् विचारानुसारेण जगतः सर्वेऽपि पदार्था आकारद्रव्याभ्यां घटिताः सन्ति। आकारद्रव्ययोराकार एव प्रमुखतरः। द्रव्यमस्ति सहकारकम्। केवलं द्रव्यं न वस्तुनः पूर्णतया निर्माणं कर्तुमर्हति। तद् तदर्थमाकारमपेक्षते। प्रतिमाया प्रस्तरस्तु द्रव्यमस्ति मूर्तिकलाकारावतारितं रूपञ्च तदीयोऽस्याकारः। जगतो मूले यस्य स्थितिर्दृश्यते स आकार एव। तमेव केचन 'ईश्वर' इत्येतेन व्यपदेशेन व्यपदिशन्ति। स्वकीयमेतं सिद्धान्तमन्वनुसनुना हेतुचतुष्टयं कल्पितम्। ते च सन्ति इमे—१ उपादानकारणम्, २ असमवायिकारणम्, ३ निमित्तकारणम्, ४ लक्ष्यञ्च।

घटं प्रति मृत्तिकोपादानकारणमाकारोऽसमवायिकारणं, कुम्भकारो निमित्तकारणं जलाग्निनिधानप्रयोजनं च लक्ष्यमस्ति।

अरस्तुर्न दार्शनिक एव स वैज्ञानिकोऽप्यासीत्। विज्ञानं स आत्मनो रूपं बनावगमत्।

वस्तुतो हि प्रतीच्ये संसारे दर्शनविज्ञानयोर्या धारा प्रेक्ष्यन्ते प्रवर्तितास्तासामुद्भवभूमिः सुकरात-प्लेटोऽरस्तूनां ग्रन्था एव सन्ति।

अरस्तोरर्वाक् कालेऽपि दर्शनं प्राधान्येन नैतिकं किं वा धार्मिकमगण्यत। स्टोइक एपिक्यूरियन-संशयवादानि च मतानि सर्वाणि जीवनसम्बन्धिनानां समस्यानामुन्मीलने व्यस्तानि अभूवन्। आसीत् तेषां प्रमुखो विषय—आचारः। व्यावहारिकजीवनस्य सुखे परिणमनं तेषामुद्देश्यमभवत्। मनः शमं सञ्चयेत्, बाह्येभ्यो बन्धनेभ्य आत्मा मुक्तो भवेदित्येतदर्थं तत्कालवर्तिनां सम्प्रदायानामभिनिवेश आसीत्। स्टोइक-मतेन गुण एव सुखम्। एपिक्युरस-मतेन सुखार्थं गुणा अपेक्ष्यन्ते। स्टोइक-मतेन गुणानां प्रयोगो गुणानां कृते एव। गुणवृत्त्या यद्यपि दुःखं सम्भवं परं गुणवृत्तिरेवास्ति सुखम्। एपिक्युरसस्य मतेन गुणाः सुखस्य साधनमात्रम्। सुखमेव जीवनस्य लक्ष्यमस्ति। विश्व-नियमानामव-

बोधेन भवति तत्सुलभम्। तेषामनभिज्ञत्वयैव मानवं निपीडयते। मानवो नानाकल्पनासु आत्मानं निपात्य भीतो भवति। सुखासुरागिणा जनेन महत्त्वं बुद्धि न्यायशीलतादिरा गुणा सम्प्राह्या। स्टोइक्दिका सुखवादिन आसन्, परम् अरस्तुप्रभृतिनिद्वासो ज्ञानवादिनो बभूवु। तेषां दर्शनस्य कथनमिदं यद् ज्ञानं सुखधिगतेरध्वास्ति।

दशमेशवीयशतकात् पञ्चदशशवीय शतकं यावत् प्रतीच्येषु देशेषु सभानाना तावज्ञानरताना समाजे अल्किन्दी अलफराबी अवीसीना अवेरोजनामधेया यवना किञ्च स्काटसएरिजेना एनूसेल्म-टामसऐक्वाइनस-डसस्कोट्समनामका ईसामतावलम्बिन सन्ति विश्रुता। अस्येषां सिद्धान्ताना, पर, व्यावहारिकं महत्त्वं न्यूनतमम्।

षोडशे शतके समुद्भूताना दार्शनिकाना विचारा प्रतीच्ये जगति वर्तमानं दार्शनिक युगमारभन्त उक्ते शतके मज्ञातेषु दार्शनिकेषु इटलीदास्तव्यो ब्रूनो, इग्लैण्डनिवासी बेकन, फ्रान्सीये डेकार्ट प्रख्याता सन्ति।

डेकार्टस्य दर्शनं सेश्वरमस्ति। 'अहं विचारयामि, अतोऽहमस्मि' इत्येष तदीय सिद्धान्त आसीत्। सिद्धान्तस्यास्य दर्शनं शङ्करोक्तेऽस्मिन्—

"अहनित्यस्मिन्नर्थे न कस्यास्ति सशय पुस।
अत्रापि सशयश्चेत् सशयिता य स एव भवसि त्वम्॥"

—श्लोकेऽपि भवति। डेकार्ट आत्मानमेतं निश्चयं गमयामास यत् यदस्ति प्रतीतमभिव्यक्तं निश्चितञ्च तदशत्यवश्यम् अवितथम्। ईश्वरस्य प्रतीतिनितान्तं विशुद्धा सुनिश्चिता च। स जगदपि सत्यं जानाति स्म। जगतोऽनुभूतिसत्यत्वात् तस्य सत्ताया न कोऽपि सन्देह इति प्रमाण स जगत सत्यत्वमङ्गीकरोति। तस्य कर्तास्ति परमेश्वर इत्यपि स वदति। महात्मा अगस्टाइन इव सोऽपि शरीरात्मानौ मिथो भिन्नौ इति स्वीकुरुते।

सप्तदशे शतके उल्लेखनीया दार्शनिका डेकार्टं व्यतिरिच्य अन्येऽपि हाब्स-स्पिनोजा-लाइबनिस-लॉका सन्ति।

हाब्स आसीत् प्रकृतिवादी। द्रव्य गतिश्चेत्येतौ द्वौ पदार्थावस्तित्वाविति तस्य विचार। तयोर्मेलनेन ससारस्य प्रतिपदार्थो भवति निर्मित इति स मन्यते। जगतो मूलकारणमीश्वर इत्येतं सिद्धान्तं यद्यपि न स प्रत्याख्यातवान्

परं तस्यासीद् विश्वासोऽयं यत् तमधिकृत्य किमपि कथनं कठिनं, न वयं किमपि वक्तुं शक्नुमः।

स्पिनोजाख्यस्य दार्शनिकस्य सिद्धान्ता भारतीयवेदान्त-सिद्धान्तसदृशाः सन्ति। यथा आचार्यशङ्कर ब्रह्मरूपां सत्तामेकां मन्यते तथैव स्पिनोजाऽपि। स आह—विश्वम् ईश्वरः, ईश्वरश्च विश्वम्। तस्येश्वरोऽस्ति—निर्गुणः। परं सर्वथैव न तस्य निर्गुण ईश्वरोऽद्वैतवादिनामभिमतं निर्गुणमीश्वरं सन्नदति। आत्मानमीश्वर-धर्मत्वेन स्वीकरणात् सोऽद्वैतवादिभ्यस्तो भिन्न एव। स्पिनोजामतेन जीवो यदा ईश्वर-विषयोऽमत्वं पूर्णमवगन्तुमर्हति तदा तस्मिन्नस्मै बौद्धिकया भक्त्या प्रेम्णश्चोद्रेको जायते। मानव-जीवनस्य लक्ष्यं स इदमेवामस्त।

लाइब्निसः शक्त्यणुवादं प्रातिष्ठिपत्। तस्य दृढीयसीयं धारणा यदन्त्या सत्तैकैव। अस्ति जीवो नित्यः।

अनुभववादी लॉकः प्रज्ञापरीक्षामुद्दिश्य ग्रन्थमरचयत्। तदीयं दर्शनमस्तीश्वरवादि। तस्य दर्शने ईश्वरेच्छाया अनुवर्तनं धर्म इत्येतन्मतं स्पष्टमेव दृष्टं जायते।

एतदवसरं यावत् समुपलब्धेषु दर्शनेषु देहवादस्य सर्वत्र व्यापकता प्राप्यते परमष्टादशशतककालिकेषु दर्शनेषु न तथा व्यलोक्यत। अष्टादशे शतके बर्कले-ह्यूम-काण्टप्रभृतयो ह्यद्भुतविचारवन्तो विद्वांसोऽजायन्त। तेषां विचाराः मनुष्यजातिं प्रति प्रेरणाप्रदा असिद्ध्यन्।

दार्शनिको विद्वान् बर्कले अध्यात्मवादी बभूव। स देहवादं निराचकार। स बाह्यवस्तुनः सत्तामपि प्रत्यवदत्। तस्य मतं बौद्धविज्ञानवादेन सार्धं पर्याप्तं सादृश्यं बिभर्ति।

संसारस्यानिश्चितत्वमुपपादयन् ह्यूम आत्मनो बुद्ध्यगम्यत्वं तस्याज्ञातत्वञ्च प्रतिपादयति।

काण्टेन ज्ञानस्य मीमांसा परमविवेकपूर्वकं कृतासीत्। तेन मानसिकशक्तीः समीक्षितुं त्रयो विवेचनात्मका ग्रन्था अलेखिषत—शुद्धौ शुद्धबुद्धिपरीक्षा (क्रिटिक ऑफ प्योर रीज़न), सङ्कल्पे कृत्यबुद्धिपरीक्षा (क्रिटिक ऑफ प्रैक्टिकल रीज़न), भावनाया निर्णयपरीक्षा (क्रिटिक ऑफ जजमेन्ट)। तस्य कर्मसम्बन्धिनः सिद्धान्ता भगवद्गीताया कर्मसिद्धान्तमनुगच्छन्ति। तन्मत-मिदम्—यथा बाह्यजगतः सत्ताया प्रमाणं भौतिकविज्ञानेनावाप्यते तथैवेश्वर-

स्यामररत्य च प्रमाणं नैतिकताया स्वतन्त्रसत्तासामर्थ्यात्प्राप्त जायते। सः सर्वेष्वपि वस्तुषु द्विविधत्व पश्यति—पारमार्थिकत्वं प्रातिभासिकत्व च। अतो न साधारणो जनो वस्तुनो यथावद् ज्ञानं कर्तुं पारयति।

काण्टस्य दृष्ट्या मानवेषु ज्ञानस्य शक्तिद्वय निवसति—१ इन्द्रियाणि ( सेन्सीबीलिटी ), २ बुद्धिश्च। असम्बद्धसवेदनाना ( सेन्सेशन ) समुपस्थापनमिन्द्रियाणा कार्यमस्ति। बुद्धे. ( इण्टलेक्ट ) कार्यं वर्तते—प्रस्तुतीकृतेषु सवेदनेषु विभिन्नाना सम्बन्धाना सन्निवेशनम्। चेद् बुद्धिरेवविधान् सम्बन्धान् न प्रतिष्ठापयेत् तदा कीदृशोऽपि नानुभव समुपलभ्येत। अस्मदखिलमपि ज्ञानं द्वादशश्रेणीश्रिताभिर्बुद्धिभिर्व्यवह्रियते। यावत्यो हि तर्कशास्त्रीया प्रतिज्ञा भवितुं शक्यास्तावत्य एव श्रेण्योऽपि ( केटेगरीज़ ) सन्ति। सन्ति च निर्णयानां चत्वारो हि प्रमुखा वर्गा—१ परिमाण, २ गुण, ३ सम्बन्ध, ४ प्रकार। एतेष्वप्येकैकस्त्रिविध। तदेव कोण्टविचारेण सन्ति श्रेण्यो द्वादश। सोऽनुभवमपि द्विविध मन्यते। परन्तु तत्रमनुभवस्य बाह्यजगदस्ति; अपरं च सम्बन्धस्रोतो भूतास्मद्धीरस्ति। एतेन तस्यानुभववादित्वं बुद्धिवादित्वञ्च युगपदेव सिद्ध्यति।

काण्टो वस्तुसत्तामपि द्विविधां वदति। तत्रैकास्ति अनुभवनिरपेक्षिणी, अपरा चास्ति अनुभवापेक्षिणी।

( १ ) अनुभवनिरपेक्षिणी—एतदुत्पादनायानुभवो नापेक्ष्यते। तदभावेऽनुभवस्य स्वतोऽसम्भवित्वात्। ( २ ) अनुभवापेक्षिणी—अनुभव एवेन्द्रिय-प्रस्तुत-पदार्थ-सत्तां ज्ञापयति। न स ( अनुभव ) तद् विशुद्धं रूपं प्रकटीकरोति। अपितु देश-काल-द्रव्य-गुण-कार्य-कारणादिसम्बन्धैस्तस्य विकृतमेव रूपमभिव्यनक्ति। प्रज्ञायां न शुद्धवस्तु साक्षात् वस्तुं शक्नोति। सा जगति प्रतीयमानस्यैवाविर्भावने क्षमते।

काण्टस्य मतमेतच्च यत् कर्तव्यानि कर्माणि न लाभ-प्रयोजनेन सम्पाद्यानि अपितु तानि कर्तव्यबुद्ध्याचरणीयानि।

एकोनविंशशताब्दीशतके सञ्जातेषु तत्त्ववेत्तृषु फिक्ते-शेलिङ्ग-हेगलाख्य एते सन्ति विख्याता।

काण्ट इव फिक्तेऽपि नैतिकमादर्शं स्वीकरोति। विपक्षोऽत्र सोऽपि द्वयोरपि जगतो. सत्ताञ्च मन्यते। तस्य सिद्धान्त प्राधान्येन नैतिकमाध्यात्मिकञ्च तत्त्व-

मवगम्यते। श्रेय, शुद्धसङ्कल्प, नैतिकसामञ्जस्यम्—इत्येतानि स सत्तत्त्वेनो-ररीकुरुते। दृश्यमानं संसारं मूलतत्त्वस्य प्रतिच्छाया मन्यते। वस्तुतत्त्वं मन-सृष्टिश्च न कल्पते। न सन्ति वस्तुनो ज्ञाता अनेके। सन्ति ते एकस्या एव नैतिक्या व्यवस्थाया अभिव्यक्ता।

शेलिङ्गस्य मूल तत्त्वं विद्यते—द्वैत–कल्पना–विरहितम्। न मूलतत्त्वं तदीय मात्मा न चानात्मा। परमस्ति तद् द्वयोरपि कारणम्। अस्ति तद् निर्गुणं निरपेक्षम्। तत्र विरोधिनीनां भावनानां समन्वयोऽस्ति। वस्तुतस्तु शेलिङ्गस्य निरपेक्षतत्त्वं काण्ट फिक्टे स्पिनोजादार्शनिकानां समन्वय-स्थलं प्रतिभाति। तस्य मतेन प्रकृतिरचेतनतत्त्वं चैतन्यवद् दृश्यते। नाध्यात्मवादिन इव स प्रकृति-मात्मन्येवावगच्छति।

हेगलस्य विचारधारा अद्वैतवेदान्तस्य सिद्धान्तमस्मत्सन्निकटे समुपस्थापय-न्तीव प्रतिलक्ष्यते। शेलिङ्गस्य ब्रह्म चेत्पदार्थेभ्यः पृथगवतिष्ठते नापेक्षते तान्, तदा हेगलस्य ब्रह्म प्रक्रियास्वरूपमस्ति। न तत् क्रिया भिन्नं जीवनमुत्पादयत्यपि तु स्वयं क्रियारूपं जीवनरूपञ्च वर्तते। न तद् वस्तूनि अतिक्रमते अपितु तत्र व्याप्तं सदेव सन्निष्ठते। तस्य ब्रह्म विश्वातीतं न भूत्वा विश्वानुगमेव। वेदान्तिकास्तु भौतिके जगत्येव बुद्धेः राज्यं स्वीकुर्वन्ति परं हेगलस्तु ततोऽपि पर-स्तादवयाति। न प्रपञ्चं स मिथ्या मन्यते। विश्वप्रक्रियाया नियामको हेतुः पूर्ण-प्रत्यय (परब्रह्म) एव। तद्वान्तिमं लक्ष्यं, जगत् तद्दिशयैवोपसरति अहरहः। अस्ति विश्वस्य सत्ता व्यावहारिक्या दृष्ट्या सत्या परं पारमार्थिकदृष्ट्या न।

हेगलोऽस्ति स महादार्शनिको यो हि कला धर्मं दर्शनञ्च गाम्भीर्येण जगाद।

शोपेनहावर, हरबार्ट, नीत्शे, वुण्टश्चैते चत्वारो दार्शनिकास्ते सन्ति ये सत्तां सङ्कल्परूपां मन्यन्ते। 'बुद्धितत्त्वमेव सत्ता' इत्यत्र न ते श्रद्दधते। वेदान्त प्रभावो हि शोपेनहावरादिकानां सिद्धान्तेषु स्पष्टं दृश्यते। वेदान्तिन इव एते दार्शनिका अपि जगत्पदार्थान् मायामेव वदन्ति। हेगलश्चैतन्यस्य सारो बुद्धिरिति कथयति यदि, तदा शोपेनहावरो बुद्धिं चैतन्यस्याङ्गमेव। स चैतन्यस्य सारं सङ्कल्पं मन्यते। सङ्कल्पशक्तिं स सर्वासामपि स्थितीनां मूलमवगच्छति। तदा मानवः स्वसत्तामधिगच्छति। सैव बुद्धिं सहकृत्य मानवेषु नानाविधान् प्रत्ययान् रचयति। जीवनस्य लक्ष्यं निर्वाणमिति शोपेनहावरस्य मतम्।

एकोनविंशे ईशवीये शतके इङ्गलैण्डे भौतिकवादस्य विरोधाय अध्यात्म

वाशी प्रादुर्भूतोऽभवत् सोऽस्ति ग्रीनो नाम दार्शनिक । तद् दृष्ट्वा ह्यूमस्यानुभववाद स्पेन्सरस्य च विकासवाद उभावपि मानवस्य चरित्र प्रकृतिं च व्याख्यातु न प्रभवतो, द्वयोरपि सदोषत्वात् । आत्मोपलब्धि ग्रीनो मानवस्य लक्ष्यममस्त । तद्विचारोऽय मानव स्वकल्याण समाजमधिवसन्नेव कर्तुं क्षमते, समाजव्यक्त्योर्मध्ये सम्बन्धोऽस्ति नितान्तसान्द्र । मानव समाजस्य प्रधानमङ्गमत समाजादेव तस्य मङ्गल भवितुमर्हति ।

एतेन विवेचनेन स्पष्टमेवेद विदित जायते यत् प्रतीच्ये ससारेऽपि तत्त्व ज्ञाननिष्ठा सत्यस्यान्वेषण महता प्रेम्णा महताध्यवसायेन च कृतवन्त । इद स्ववश्यमेव सत्य यत्प्रतीच्याना दर्शनाना चरमावसान ज्ञानतृप्तावेव । सर्वाण्यपि दर्शनानि तत्रत्यानि ज्ञानसम्बन्धिनीं तृप्ति समवाप्तु सतत रतानि विलोक्यन्ते । तेषा मतम ज्ञानान्वेषणस्य लक्ष्य ज्ञानमेव । पर भारतीयानि दर्शनानि ज्ञान साधनमेव मन्यन्ते न च साध्यम् । प्रतीच्यदर्शन न स्थूल लिङ्गादिशरीर भेद, न च जन्मान्तरसिद्धान्त स्वीकुरुते । अत आत्मानञ्च न तत् सम्यक सम्प्रत्यपि ज्ञातु शक्नोति । तत्त्वज्ञानार्थं कृतस्तस्य प्रयासोऽवश्यमेवाभिनन्दनीय ।



## श्रीकृष्णलीलामृतं श्रीमद्भागवतम्

श्रीमद्भागवतं संसारभयनाशनं सर्वेषामज्ञानध्वान्तविध्वंसननिपुणं काव्यालोकनप्रसन्नामलविचारजन्मदीप्तं भक्तिरसाद्भुतनमस्वत्स्वं संस्कृत-साहित्यस्य सर्वं भगवत्तत्त्वप्रकाशनपरं परमानन्दसुधासमं विमलविवेकसमुन्मीलनकुशलं किमपि परमं ज्योतिः।

एतद् ग्रन्थरत्नं प्रस्थानत्रयीव वैष्णवानां विद्वद्वराणां च तुरीयप्रस्थानत्वेन मन्यते। भगवान् वेदव्यासोऽत्र समाधिवशादनुभूतानि भगवत्तत्त्वानि वर्णयामास। एतस्यैव प्रभविष्णु प्रभावः सकलानामपि विविधविद्वज्जनानां समप्राणानपि रससम्मेलनया सम्यक् सर्वतो वितनु मनवाप्यते। वल्लभसम्प्रदायचैतन्यमहाप्रभुसम्प्रदाययोः नितरामेवास्यादरणीयता विषयाऽवर्तित सन्दृश्यते। आध्यात्मिकतत्त्वसिद्धान्तप्रणालिकया परमोदात्ततया विद्वत्तया गीतं तस्मात् तत् तत्त्वजिज्ञासुना तत् तत्त्वसूत्रं पातुं सर्वैरपि विद्वद्भिरियं अहमहमिकया प्रधावितम्। विपुला ग्रन्था ग्रन्थावलयोऽस्य व्याख्यार्थं विविधविद्वद्वरैर्विरचिताः। तत्र भागवततत्त्वनिर्णय आनन्दतीर्थविरचितः, षट्सन्दर्भश्च श्रीजीवगोस्वामिविरचित उल्लेखनीयौ ग्रन्थौ स्तः। षट्सन्दर्भस्तु व्यापकत्वाद् विशदत्वाच्च परामेव प्रकर्षमिव समश्नुते। भागवतं तत्त्वं किंवा भागवतस्य गूढार्थं प्रकटीकर्तुं या सम्प्रदायभाजां प्रेक्षावतां बह्व्यष्टीकाः सरलाः सन्ति शोभनानाम्नाम् रामानुजमतपरस्य सुदर्शनसूरेः शुकपक्षीया, श्रीवीरराघवाचार्यस्य भागवतचन्द्रचन्द्रिका, माध्वमतरतस्य विजयध्वजस्य पदरत्नावली, निम्बार्कमतभाक् शुकदेवाचार्यस्य सिद्धान्तप्रदीपः, वल्लभमतानुरागिणी वल्लभाचार्यस्यैव सुबोधिनी, गिरिधराचार्यस्याध्यात्मिकी, चैतन्यमतस्नेहिनी श्रीसनातनस्य बृहद्वैष्णवतोषिणी, जीवगोस्वामिनः क्रमसन्दर्भः, विश्वनाथचक्रवर्तिनः सारार्थदर्शिनी, श्रीश्रीधरस्वामिनश्च ख्याता सुविदिता सर्वेषामपि मतिमताम्। सर्वेष्वपि सम्प्रदायेषु या अपि आध्यात्मिकत्वे मान्त्रिय कल्पकल्पना प्रसूताः तासां मूलं इदमेव भगवद् विग्रहरूपं भागवतम्।

श्रीमद्भागवतमद्वैततत्त्वं विशदतया स्फुटतया च प्रतिपादयदपि भक्तिरसप्रधानमिदं भक्तिशास्त्रम्। भगवद्भक्तिमन्तरेण न ज्ञानोदयः सम्भव, यावद् ज्ञान-

भानो प्रादुर्भावो न भवति तावत् कर्मतमोऽपि नापैति कर्मणां प्रवाहस्यानव-च्छिन्नतायां कुतोऽपवर्गः ? तस्मादेव कारणात् तत्र परोक्षतया अपरोक्षतया च भगवद्भक्तिरेव सर्वत्र [गीता। मानवजीवनस्य चरमं साध्यं यदस्ति तद् भगव-च्चरणप्रेमैव। तद्भक्त्यैव कृतकृत्यता सिध्यति' यावन्न साध्यते न तावन्मानवस्य परमार्थतः कल्याणमित्येतद् विमृश्य तदादावेवाममनि—

स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे।
अहैतुक्यप्रतिहता ययाऽऽत्मा सम्प्रसीदति॥
वासुदेवे भगवति भक्तियोगः प्रयोजितः।
जनयत्याशु वैराग्यं ज्ञानं च यदहैतुकम्॥ १॥
धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः।
नोत्पादयेद् यदि रतिं श्रम एव हि केवलम्॥
धर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पते।
नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः॥ २॥
कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता।
जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्मभिः॥ ३॥

ज्ञानं तदेव धन्यं यद् भगवति भक्तिमुत्पादयति, तपस्तदेव श्रेष्ठं यन्मनो भगवदुन्मुखं विदधाति, धर्मः स एवाभिनन्द्यो यो भगवच्चरणेषु प्रीतिं पुष्णाति ज्ञानतपोधर्मादीनां प्रयोजनं भगवत्कृपाधिगमनमेव—

वासुदेवपरं ज्ञानं वासुदेवपरं तपः।
वासुदेवपरो धर्मो वासुदेवपरा गतिः॥

सत्त्वगुणोपाधिविहीनोऽव्यक्तो निराकारो भगवान् 'निर्गुण' इति कथ्यते स एवोपाध्यवच्छिन्नत्वेन 'सगुण' इति निगद्यते। शुद्धसत्त्वावच्छिन्नत्वात् स 'विष्णु'-रिति, रजोमिश्रसत्त्वावच्छिन्नत्वाद् 'ब्रह्मा' इति, तमःसत्त्वावच्छिन्नत्वाद् 'रुद्र' इति, तुरयसत्त्वरजस्तमोऽमिश्रसत्त्वावच्छिन्नत्वाच्च 'पुरुष' इत्यभिधीयते। जगतः स्थितौ निमित्तकारणं विष्णुः, तस्य रचनायां निमित्तकारणं 'ब्रह्मा' किञ्च तस्य प्रत्याहारे निमित्तं कारणं 'रुद्रो' मतः। पुरुषस्तु तस्योपादानकारणम्। एते विष्णुप्रभृतयः सर्वेऽपि गुणातीतस्य ब्रह्माख्यस्य तत्त्वस्य सगुणरूपत्वेनाम्नाताः। इत्थं भागवतस्य मते 'ब्रह्म' एवाभिन्ननिमित्तोपादानकारणमस्ति। ब्रह्म एव

संसारस्य सर्ग-स्थिति-संहारहेतोर्भिन्नभिन्नावतारमुपस्थापनाति। अत्र श्रीमद्भागवतमेवमाह—

> आद्योऽवतारः पुरुषः परस्य
>
> कालः स्वभावः सदसन्मनश्च।
>
> द्रव्यं विकारो गुण इन्द्रियाणि
>
> विराट् स्वराट् स्थास्नु चरिष्णु भूम्नः ॥ १ ॥
>
> स एष आद्यः पुरुषः कल्पे कल्पे सृजत्यजः।
>
> आत्माऽऽत्मन्यात्मनाऽऽत्मानं संयच्छति च पाति च ॥ २ ॥

"मानवो मर्त्यः परदेवः स श्रेयस्य प्रयत्नेन" इत्येतदर्थं श्रीमद्भागवतं मातेव, पितेव, गुरुरिव, कान्तेव, सखेव तमनिशमुपदिशति। नामरूपात्मकमिदं विश्वं यावन्तोऽपि सन्ति पदार्थास्तावन्तः सर्वेऽपि सन्ति सारशून्याः। अतस्तत्र तावानेव व्यवहारो विधेयो यावान् स्यात् प्रयोजनीयः। न कस्यापि केनापि तत्र समासक्तिः कार्या क्वचमपि। अनेकानेककामनानां दासो भूत्वा मनुजो जगत्याः प्रतिपदमपमानं सहते बहुविधासु विपत्सु लीयते दुःखानि च प्रचुराणि विन्दते। तस्मात् तस्य कर्तव्यमेतत् यत्सौ कामायत्तो न स्यात्। काममेव स स्ववशे कर्तुमर्हति। कामस्तं न विजयतामपि तु सः कामम्। बहुलबहुलतरसम्पत्तो न विरज्यते न च स दीनजनानुकूलोऽपि श्रीमद्भागवतमिदमेव विविनक्ति—

> अतः कविर्नामसु यावदर्थः स्यादप्रमत्तो व्यवसायबुद्धिः।
>
> सिद्धेऽन्यथार्थे न यतेत तत्र परिश्रमं तत्र समीक्षमाणः ॥ १ ॥

मानवः दीनं पराननावेक्षित्वं विस्मित्यमानैश्वर्यगौरव न श्रीमद्भागवतं उन्मुमभिलषते। विद्वांसं हि पुरुषं धनवतां पुरः स्वनतनस्वनोरथपूरणार्थं दीनतापूर्वकं याचमानं विलोक्य नितरामेव विषीदद् ब्रवीति—

> सत्यां क्षितौ किं कशिपोः प्रयासैर्बाहौ स्वसिद्धे ह्युपबर्हणैः किम्।
>
> सत्यञ्जलौ किं पुरुधान्नपात्र्या दिग्वल्कलादौ सति किं दुकूलैः ॥ १ ॥
>
> चीराणि किं पथि न सन्ति दिशन्ति भिक्षां
>
> नैवाङ्घ्रिपाः परभृतः सरितोऽप्यशुष्यन्।
>
> रुद्धा गुहाः किमजितोऽवति नोपसन्नान्
>
> कस्माद् भजन्ति कवयो धनदुर्मदान्धान् ॥ २ ॥

नरो यो न भगवल्लीलानुरागी स सारमेयादपि धालेयादपि वराहादपि क्षुद्रतर । प्रत्यहमायुःक्षयमेवोपैति तस्मात् तत् प्रयतितव्य तेन, यत् तमुपवुर्वात—

आयुर्हरति वै पुंसामुद्यन्नस्त च यन्नसौ ।
तस्यर्ते यत्क्षणो नीत उत्तमश्लोकवार्तया ॥ १ ॥
तरव किम्न जीवन्ति भस्त्रा किं न श्वसन्त्युत ।
न खादन्ति न मेहन्ति किं ग्रामपशवोऽपरे ॥ २ ॥
श्वविड्वराहोष्ट्रखरै संस्तुत पुरुष पशु ।
न यत्कर्णपथोपेतो जातु नाम गदाग्रज ॥

श्रीमद्भागवतसागरे सर्वा अपि शास्त्र सरितो निपतन्ति । दर्शनानि प्रकृति-पुरुषासमुत्क्रिसृष्ट्यादिविषयान् यान् प्रतिपादयन्ति, उपनिषदो यद्धि आत्मतत्त्व गृणन्ति, स्मृतयो य हि धर्मं परिशीलयन्ति श्रीमद्भागवते शास्त्रे तेषा सर्वेषामपि विषयाणा सम्यग निरूपण दृग्गोचर सञ्जायते । चेद् वेन-पृथु-ध्रुव प्रह्लाद-बलि-प्राचीनबर्हिद्दक्षप्रजापति-वृत्रासुरर्षभदेव-देवासुरसमर-समुद्रमन्थन-गङ्गा-वतरणादिकथाना सरमार्ता श्रवणाय परमौत्सुक्य मनसि बलीयस्तया जागर्ति, तदा शास्त्रमिद तदृप्यौत्सुक्य पूर्णतया सवातुमलम् । इक्ष्वाकु-निमि-चन्द्र-पुरु-क्षत्रवृद्धरजिप्रभृतिमहीरमणाना वंशेषु ये हि पुण्यकर्माणो राजानो बभूवु स्तेषामेतद्वर्णयानि पेशलानि चरितानि श्रोतु मानसे उत्कटोऽभिलाष समुज्जिहति तदा सोऽप्यभिलाषस्तारतम्र तृप्तिमश्नुते । महर्षेश्च्यवनस्य पावन चरित्र समुपस्थाप्य भक्तप्रवरस्य अम्बरीषस्यानुकरणीय स्पृहणीयञ्च वृत्त सन्निधाय विदुरोद्धवादीना पुनीतानि सदाचरणानि च प्रणिगद्य शास्त्रमेतत्सर्वथैव मन प्रीणाति । भगवत श्रीकृष्णचन्द्रस्य पापापहा लीला उद्गीय एषा श्रीमद्भागवत-माता समारस्य मनोम्लानतामपनेतु, तस्य मङ्गलमाचरितु, तत्प्रवृत्तितो निवृत्ति-म्प्रति नेतु, त भगवदुन्मुख विधातुमनारत दिवानिश विनायासमनुभवन्ती, विना खेद गच्छन्ती, सोत्साह सस्नेहञ्च ध्यापृता केन न चक्षुष्मता वीक्ष्यते ? पश्यन्तु प्रेक्षावन्त, अत्र कान्तारे सगोपो मजवल्लभो हि धेनूश्चारयति, इह त कालिय-नागस्य निपाद् गोपवृन्द गोपायन्त विलोकयन्तु, इह त गोवर्द्धनस्योत्थापन विधाय शक्रस्य मानमपहरन्त गोपाश्च रक्षन्त वीक्षन्ताम्, इह त गोपाङ्गनाभि सह रासोत्सव वितन्वन्त प्रेक्षन्ताम्, इह त कस निगृह्णन्तमिह शिशुपालस्य शिर

सुदर्शनचक्रेण नेदृशस्तमिह च महाभारते धनञ्जयं गीतामुपदिश्य चाद्य वीरकर्म्मणां विरधिम्नत्तमः ।

श्रीमद्भागवतं वस्तुतस्तास्ता विविधा भगवतो लीला सख्याप्यानेकोपाख्यानोपन्यासपुरस्सरं मानवमात्रं 'कोऽहमि'त्येतच्चिन्तयितुं, 'किमर्थमहं शरीरं संप्राप्तवान्' इत्येतद्विचारयितुम् 'मदीयं किं कर्म कश्च मम धर्मः' इत्येतद् विभावयितुम्, 'कस्माद् मामाधिव्याधिजातम् पीडयन्ती'ति ध्यातुम्, 'किमर्थमहं पुनःपुनः जननमवाप्नोमी'ति च बोद्धुम्, 'कस्मात्कारणादहं दरिद्रः स च धनवान्' इति अवगन्तुं प्रेरयति नितरामित्थम् ।

श्रीमद्भागवतमुपरिस्थितान् सर्वान् अपि प्रश्नान् समादधत्सम्यक् पुर उपतिष्ठति । तत्पुरञ्जनोपाख्यानमाख्याय मानवमुपदिशति यत् पुरञ्जनो राजा नान्यः कश्चित् स एव स्वयमस्ति । पुरं नान्यत् किमपि । इदं शरीरमेव पुरम् । प्राकृतानां विषयाणामुपभोगाय स तदधितिष्ठति । देहाभिमानी जीवोऽज्ञानपरिच्छिन्नो भूत्वा विविधान्याधिभौतिकाधिदैविकाध्यात्मिकानि च दुःखान्युपभुञ्जानः संहननं बिभर्ति । अस्ति तु परमार्थतोऽसौ निर्गुणः परं प्राकृतेन्द्रियमनोधर्मानात्मन्यारोप्य 'सर्वमिदमहं करोमि' इत्येवमाद्यभिमानधिया निबद्धो भवन् इमान् विषयांश्चिन्तयन् बहुविधानि कर्माण्यनुतिष्ठति । अस्ति वस्तुतः स स्वयं प्रकाशः परं यावत् स सर्वेषामपि परमगुरुमात्मस्वरूपं भगवन्तं नावगच्छति तावत् स प्रकृतेर्गुणेष्वेव निमज्जति । गुणजनितान् धर्मान् स्वकीयान् विभाव्य संसारसागरे गभीरे पतति । कदाप्यसौ तत्र सद्भावैर्निषेव्यमाणो भवति, कदाप्यसौ चाञ्चल्येन घूर्णमानो जायते, कदापि चासौ मोहेन मुह्यमानः सञ्जायते, कदापि स सात्त्विकैः कर्मभिः प्रकाशबहुलं नाकमश्नुते, कदापि राजसकर्मवशाद् दुःखप्रदान् लोकान् लभते, कदापि च स तमोमयकर्मभिः शोकसंकुलितासु तमःपरिवेष्टितासु योनिषु च जनुर्गृह्णाति । यथा शृङ्खलकण्ठः श्वा स्थले स्थले विचरन् स्वप्रारब्धानुरूपं क्वचिद् दण्डप्रहारं सहते, क्वचिदोदनं भुङ्क्ते तथैव जीवोऽपि—मानवोऽपि—नानावासना आदाय उच्चावचेन च मार्गेण ऊर्ध्वाधो मध्ये च पर्यटन् स्वकर्मानुरूपाणि फलानि विन्दति । यस्या अविद्याया वशात् परमैश्वर्यस्वरूपमात्मानमेषा जन्ममरणरूपानर्थपरम्परा कदर्थयति तस्या निवृत्त्यर्थं श्रीहरिसम्बन्धिनी ज्यायसी भक्तिरपेक्ष्यते ।

एकतानतया भगवति वासुदेवे निहिता भक्तिर्ज्ञानं वैराग्यञ्च जनयति ।

भक्तेन्द्रभवास्पदमस्ति भागवती कथा। अत श्रद्धया भगवत्कथाध्येतव्या श्रोतव्या च। यत्र भगवद्गुणकीर्तननिमग्नमानसा भक्ता निवसन्ति तत्र भागवच्चरितामृततरङ्गिण्यो वहन्ति। दुःखमिदमतितरां यत्स्वभावजै प्रत्यूहैरपहृतो जीव श्रीहरिलीलासुधासिन्धोर्विमुखीभवन् परमदारुणसांसारिकविषयविषभयावहसागरे आमज्जति। तस्य मनो हा भगवति न सज्जति, न स्निह्यति न लगति च। अत एव तु स समारदुर्गमकाननेन कण्टकाकुलविषमधरणीतलेन हिंस्रमत्त्वसङ्कुलेन नितान्तमेव निपीड्यमान सन्तापमन्तप्तो भयात् सत्रस्त सन् उच्चै क्रन्दति। देहगेहासक्तस्य कीदृशी शोचनीयावस्था जायते तामधिकृत्य श्रीमद्भागवतमाह—

आत्मा जायासुतागारपशुद्रविणबन्धुषु।
निरूढमूलहृदय आत्मानं बहु मन्यते ॥ १ ॥
सन्दह्यमानसर्वाङ्ग एषामुद्वहनाधिना।
करोत्यविरत मूढो दुरितानि दुराशय ॥ २ ॥
अर्थैरापादितैर्गुर्व्या हिंसयेतस्ततश्च तान्।
पुष्णाति येषा पोषेण शेषभुग् यात्यध स्वयम् ॥ ३ ॥
वार्ताया लुप्यमानायामारब्धाया पुन पुन।
लोभाभिभूतो नि सत्त्व परार्थे कुरुते स्पृहाम् ॥ ४ ॥
कुटुम्बभरणाकल्पो मन्दभाग्यो वृथोद्यम।
श्रिया विहीन कृपणो ध्यायञ्छ्वसिति मूढधी ॥ ५ ॥
एव कुटुम्बभरणे व्यापृतात्मा नितेन्द्रिय।
म्रियते रुदतां स्वानामुरुवेदनयास्तधी ॥ ६ ॥

अज्ञानान्मनुजो यद् दुःख तदेव सुखमवगच्छति। सुखाधिगमनाशया स स्वकीय मनो ललनासु योजयति पर ताभ्य कुत सुखसम्भव सत्यम्। अन्ततो गत्वा नितरा विषीदति। अनुशयेन दूयमानो ब्रवीति—हन्त यन्मयाऽऽपात सुख तत्तु भीषण दुःखमेवासीत्। ससारस्य दुःखप्रदत्वमुद्दिश्य श्रीमद्भागवत प्राचीनबर्हिष क्षितीश यदुपदिशति तत् तच्छब्दैरेव श्रूयताम्—

"सुमन समधर्मणा स्त्रीणा शरण आश्रमे पुष्पमधुगन्धवत्क्षुद्रतम काम्यकर्मविपाकज कामसुखलव जैह्व्यौपस्थ्यादिविचिन्वन्त मिथुनीभूय तदभिनिवेशितमनस षड्ङ्घ्रिगणसामगीतवदतिमनोहरवनितादिजनालापेष्वतितरामतिप्रतिलो-

निमेषगणनये वृकयूथवदल्पम आयुर्हरतोऽहोरात्रान्नान् कालचक्रविशेषानविगणय्य गृहेषु विहरन्तं गृहान् एव परोक्षमनुप्रवृत्तं लुब्धक कृतान्तोऽन्तःशरेण यमिह पराविध्यति तमिमानमहो राजन् निबध्य द्रष्टुमर्हसीति ।

> सत्वं विचक्ष्य मृगचेष्टितमात्मनोऽन्त-
>
> श्चित्तं नियच्छ हृदि कर्णधुनीं च चित्ते ।
>
> जह्यङ्गनाश्रममसत्तमयूथगाथं
>
> प्रीणीहि हंसशरणं विरम क्रमेण ॥"

श्रीमद्भागवतं जनताया युगे भवाटव्या भीषणत्वमुपन्यस्यति तद् वस्या असह्यदारुणत्वमद्भुतं ज्ञापयन्मानवनिकरं प्रभवीति यत् तेऽपसृतान्तो भूत्वा तिष्ठेयु । भवाटवीं प्रविश्य न कोऽपि तामंगो विन्दुमपि लब्धुं प्रभवति । अत्र मनो ज्ञानेन्द्रियाणि च सन्ति दस्यव । तैर्मानवो भवति विलुप्यमान. । पुत्र-कलत्रबन्धुप्रभृतयस्तथैवात्र मानवं दुन्वन्ति यथा वृक-जम्बुकादय । सम्पदो दंश-मशका इवात्र जनानुपलघ्नन्ति । कर्मणां सङ्कुलता इह गुल्म-तृणवीरुधवत् सन्ति । ताभ्यो जनाना निर्मुक्तिर्भवत्येव न । तदुद्भ्रमितास्ते न कदापि सुखेन श्वासमप्येकं ग्रहीतुं शक्नुवन्ति । प्रमदात्र वात्येव विद्यते । सा तेषां नयनयो रज-क्षिपति तदन्धा भवन्तस्ते मधुरुष्णां मर्यादामपि न विचारयन्ति । रजोमलिन-नयना भूत्वा ते कर्मसाक्षिभूता देवता अपि अवज्ञातुं प्रक्रमन्ते । शत्रूणां परुषाणि वचांसीह कौशिकरव इव वर्तन्ते तान्याकर्ण्य तेषां मनो भृशं व्यथति । राजकुलस्य भर्त्सनापूर्णानि वचनानि चात्र श्वापदाना कठोररवा इव सन्ति तानि तु तेषां हृदयमेव भिन्दन्ति । गृहस्थाश्रमपरको महान् विस्तृत कर्मकलाप इह महीधर इव विद्यते । स तु तेषां जीवनं कठोरेषु गह्वरेष्वेव निपातयति । इह तृष्णास्तु सन्ति स्रोतस्विन्य इव तासां तरणं तु सम्भवमेव न भवति । जना दुस्तरत्वात् तासां तासु मुह्यन्ति । कदापि ते एतस्या भवाटव्यां दुर्जन-दन्दशूकैर्दश्यमाना भयत्रस्ता उद्विग्नताश्च नीयमाना रुदन्ते, विवेकरात्रे-र्भीमत्वादन्धा इवान्धान्धानापतन्ति । कदापि तेऽत्र भवारण्ये विषय-सुख-मधुकणान् विचिन्वन्तो यदा परकीयाणि द्रव्याण्यपि धर्तुं प्रवर्तन्ते तदा तत्तद्-द्रव्याधिपतिभिर्निगृह्यमाणा अपारे निरये निपतन्ति ।

एवं सविस्तरं भवाटव्या घोराणि दुःखानि वर्णयित्वा महर्षिर्व्यासो रहूगण-

धिपोपदेशापदेशेनाखिलानपि विश्वजनानाचष्टे यत् ते विषयेभ्यो व्यावृत्ता भूत्वा ज्ञानचन्द्रहासेन भवाटवीं भिन्द्यु,—

रहूगण त्वमपि ह्यध्वनोऽस्य
संन्यस्तदण्डः कृतभूतमैत्रः ।
असज्जितात्मा हरिसेवया शितं
ज्ञानासिमादाय तरातिपारम् ॥

श्रीमद्भागवते भारतमहिमवर्णनमधीत्य विदितं भवति यत् पुरातने भारते भगवत्कथासरित् सर्वत्र सवेगं कलकलशब्दं कुर्वाणा गभीरप्रवाहपूर्वकं प्रवहमाना बभूव । साधुजनैरत्रत्या वसुन्धराऽलङ्क्रियमाणा भूत्वा विललास । नृत्यगीतमृदङ्ग-तूर्यनिस्वनैः सम जना भगवन्तं यज्ञपूरुषमर्चन्त इह तदादर्शिषत । भारतीया विभिन्नदेवता उद्दिश्य पृथक् पृथग् भागं निदधानास्ताभ्यश्च विधिमन्त्रद्रव्यादि-योगेन सश्रद्धं हविः प्रददाना अवालोकिषत । अत एव तु भगवान् वेदव्यासः स्वयं भारतमेवमुपश्लोकयति—

यैः श्रद्धया बर्हिषि भागशो हविर्निरुप्तमिष्टं विधिमन्त्रवस्तुतः ।
एकः पृथङ्नामभिराहुतो मुदा गृह्णाति पूर्णः स्वयमाशिषां प्रभुः ॥ १ ॥
सत्यं दिशत्यर्थितमर्थितो नृणां नैवार्थदो यत्पुनरर्थिता यतः ।
स्वयं विधत्ते भजतामनिच्छतामिच्छापिधानं निजपादपल्लवम् ॥ २ ॥
यद्यत्र नः स्वर्गसुखावशेषितं स्विष्टस्य सूक्तस्य कृतस्य शोभनम् ।
तेनाजनाभे स्मृतिमज्जन्म नः स्याद् वर्षे हरिर्यद् भजतां शं तनोति ॥ ३ ॥
अहो अमीषां किमकारि शोभनं प्रसन्न एषां स्विदुत स्वयं हरिः ।
यैर्जन्म लब्धं नृषु भारताजिरे मुकुन्दसेवौपयिकं स्पृहा हि नः ॥ ४ ॥

हा हन्त यद् भारतं पुरा एतादृशं सच्चरित्रमासीद् यत् तद् वीक्ष्य देवा अपि तत्र प्रहोतुं जनुरवाञ्छन्त यन्महर्षयोऽपि भूयो भूयोऽभिनन्दन्तोऽपि नातृप्नुवन् तदेव भारतं साम्प्रतं नानादुराचरणभ्रष्टाचरणादिभिर्निन्दितकुत्सितघृणितकर्मभि-ग्रस्यमानं दृश्यते । न साम्प्रतं भारतीया जघन्यानि कर्माणि कुर्वाणा मनागपि त्रपन्ते, धनवन्तो दीन-दरिद्रान् मध्यमवर्गान् शोषयन्तो निपीडयन्तश्च दिवानिशं प्राप्यन्ते, शास्तारः स्वयमेवात्र कुमार्गं गच्छन्त आसाद्यन्ते । ते स्वकीयं वैभवं वर्धयन्तो नानाविधैरन्याय्यैः साधनैः सर्वत्र विलोक्यन्ते, तासममध्ये पद्मत्रासु

ते निर्विचनावसरेषु यान् अनाचारान् अवलम्बन्ते तेषामनालपनमेव वरम्, हा, हास्मद्देशस्य रामादिराजान् क्व चेमे साम्प्रतिकाः शास्तारो येषां मनसि जनतायाः हितस्य स्तोकमपि चिन्ता न दृश्यते । हा, कीदृशं शोचनीयमस्मत्पतनं संवृत्तम् ।

श्रीमद्भागवतं जनान् सत्पथं नेतुं बहुधा यतते । तस्करकान् प्रदर्श्य भाययति वाञ्छति च यत् ते भीता भूत्वा दुष्कर्मभ्यो विरमेयुः पापेभ्यः पराङ्मुखाश्च स्युः । तदाह—

"ये त्विह वै दस्यवोऽग्निदा गरदा ग्रामान् सार्थान् वा विलुम्पन्ति राजानो राजभटा वा तांश्चापि हि परेत्य यमदूता वज्रदंष्ट्रा श्वानः सप्तशतानि विंशतिश्च सरभसं खादन्ति ······" ।

अतः परं किं खेदास्पदं स्याद् यद् यस्य भारतस्य जीवनं धर्म एव बभूव तस्यैव भारतस्य शासनकारिणो धर्ममवजानन्ति । 'को नाधर्म' इति तु तैर्विचार्यते न । 'धर्मोऽभ्युदयवाधामवर्तनि'रिति निगद्य, हन्त, अधर्मं धर्मं मन्यमानास्ते धर्मं दलन्ति । धर्मदलनस्यैव स्विदं कुफलं यदिदानीं क्वापि न नैतिकता, क्वापि न सत्यपरता, क्वापि न लोभे जुगुप्सा, क्वापि न कुकर्मसु घृणा च विलोक्यते । श्रीमद्भागवते 'धर्मः क' इत्यत्र शास्ति—

> धर्ममूलं हि भगवान् सर्ववेदमयो हरिः ।
> स्मृतं च तद् विदां राजन् येन चात्मा प्रसीदति ॥ १ ॥
> सत्यं दया तपः शौचं तितिक्षेक्षा शमो दमः ।
> अहिंसा ब्रह्मचर्यं च त्यागः स्वाध्याय आर्जवम् ॥ २ ॥
> सन्तोषः समदृक् सेवा ग्राम्येहोपरमः शनैः ।
> नृणां विपर्ययेहेक्षा मौनमात्मविमर्शनम् ॥ ३ ॥
> अन्नाद्यादेः संविभागो भूतेभ्यश्च यथार्हतः ।
> तेष्वात्मदेवताबुद्धिः सुतरां नृषु पाण्डव ॥ ४ ॥
> श्रवणं कीर्तनं चास्य स्मरणं महतां गतेः ।
> सेवेज्यावनतिर्दास्यं सख्यमात्मसमर्पणम् ॥ ५ ॥
> नृणामयं परो धर्मः सर्वेषां समुदाहृतः ।
> त्रिंशल्लक्षणवान् राजन् सर्वात्मा येन तुष्यति ॥ ६ ॥

महाकविकालिदास–भवभूति–बाणादयो याभ्यां द्वाभ्यां कविभ्यां काव्य-रचन-शिक्षां गृहीतवन्तो यद्-रचितान् ग्रन्थानवधार्य ते काव्यं केन प्रकारेण रचनीयमित्येतद् विविदुस्तयोरेकतर श्रीमद्भागवतप्रणेता व्यासो वर्तते। महर्षि-व्यासस्येदं भागवतं महनीयं काव्यरत्नमपि विद्यते। वस्तुवर्णनशैली तदीया काव्यमयी विभाति। तत्रऋतुप्रभृतिप्रकृतिच्छटां विलोक्य कवयोऽपि स्वस्वकाव्ये तद्विधं वर्णनमकुर्वन्। भागवतस्य वर्षर्तुसुषमा दृश्यताम्—

तडित्वन्तो महामेघाश्चण्डश्वसनवेपिता।
प्रीणनं जीवनं ह्यस्य मुमुचुः करुणा इव॥ १॥
श्रुत्वा पर्जन्यनिनदं मण्डूका व्यसृजन् गिरः।
तूष्णीं शयाना प्राग् यद्वद् ब्राह्मणा नियमात्यये॥ २॥
हरिता हरिभिः शष्पैरिन्द्रगोपैश्च लोहिता।
उच्छिलीन्ध्रकृतच्छाया नृणां श्रीरिव भूरभूत्॥ ३॥

अत्र शरच्छोभा निभाल्यताम्—

शरदा नीरजोत्पत्त्या नीराणि प्रकृतिं ययुः।
भ्रष्टानामिव चेतांसि पुनर्योगनिषेवया॥ १॥
सर्वस्वं जलदा हित्वा विरेजुः शुभ्रवर्चसः।
यथा त्यक्तैषणा शान्ता मुनयो मुक्तकिल्बिषाः॥ २॥
गिरयो मुमुचुस्तोयं क्वचिन्न मुमुचुः शिवम्।
यथा ज्ञानामृतं काले ज्ञानिनो ददते न वा॥ ३॥

कविवरकलितभावान् विभावयन्तु मानवीयं मानसं च प्रेक्षन्तां प्रेक्षावन्तः—

मृगयुरिव कपीन्द्रं विव्यधे लुब्धधर्मा स्त्रियमकृत विरूपां स्त्रीजितः कामयानाम्।
बलिमपि बलिमत्त्वावेष्टयद् ध्वाङ्क्षवद् यस्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः॥१॥
यदनुचरितलीलाकर्णपीयूषविप्रुट्सकृददनविधूतद्वन्द्वधर्मा विनष्टाः।
सपदि गृहकुटुम्बं दीनमुत्सृज्य दीना बहव इह विहङ्गा भिक्षुचर्यां चरन्ति॥ २॥
अपि बत मधुपुर्यामार्यपुत्रोऽधुनाऽऽस्ते, स्मरति स पितृगेहान् सौम्य बन्धूंश्च गोपान्।
क्वचिदपि स कथा नः किङ्करीणां गृणीते, भुजमगुरुसुगन्धं मूर्ध्न्यधास्यत् कदा नु॥

वैदुष्यस्य समुपार्जितानेकशास्त्रज्ञानस्य वा सौन्दर्यमस्ति पारमार्थिकतायाम-नुरागो दर्शीयान् भगवच्चरणेषु निर्व्याजप्रीतिर्वा। मुदाश्रो विश्रम्य ज्ञानिनाम-प्रेमरस्योपधानं निधाय श्रीमद्भागवतं ज्ञानिनां जगदिदमेव बोधयति नूनम्।

"स एवं भार्यया विप्रो बहुशः प्रार्थितो मुहुः।
अयं हि परमो लाभ उत्तमश्लोकदर्शनम्॥"

इत्येष हि सुदाम्नो वाणी यत् स धनाकल्पयति तदपि विपश्चित स्ववचेन आवर्जयेयुः। सुदामा महादारिद्र्येण दूयमान आसीत्, न तस्य विधे भोक्तुमन्नमासीच्च चावरीतुं वपुर्वास एव शुष्कमासीत् परं सत्यपि तद्विधे आर्थिके सङ्कटे, न स जीवनस्थिति तमभावप्रबलं तुच्छतमामपि हानिमवजगाम। जीवनस्य दारिद्र्यं वा दुर्भाग्यं स भगवच्चरणविमुखतामेव विवेद। परमार्थविद्यादेव तस्य श्रीकृष्णस्तदर्थं तत्प्रेम तत्सम्मानं हार्दिकं समर्पयत् यत्प्रेम यच्च सम्मानं निरीक्ष्य सकलमपि राजभवनं परं विस्मयं प्रपेदे—

तं विलोक्याच्युतो दूरात् प्रियापर्यङ्कमास्थितः।
सहसोत्थाय चाभ्येत्य दोर्भ्यां पर्यग्रहीन्मुदा॥ १॥
सख्युः प्रियस्य विप्रर्षेरङ्गसङ्गातिनिर्वृतः।
प्रीतो व्यमुञ्चदब्बिन्दून् नेत्राभ्यां पुष्करेक्षणः॥ २॥
अथोपवेश्य पर्यङ्के स्वयं सख्युः समर्हणम्।
उपहृत्यावनिज्यास्य पादौ पादावनेजनीः॥ ३॥
अग्रहीच्छिरसा राजन् भगवाँल्लोकपावनः।
व्यलिम्पद् दिव्यगन्धेन चन्दनागुरुकुङ्कुमैः॥ ४॥

मन्ये ज्ञानं श्रीमद्भागवतरूपं निधाय भुवि विभाति। तद्धियोऽज्ञानमपमृज्य तत्र ब्रह्मप्रकाशं विकिरति। तत् तथेहते येन बुद्धिर्ब्रह्माकाराकारितैव जायते। तद्विनाभ्यासस्य च हृदयग्रन्थिर्भिद्यते संशया अपि छिद्यन्ते। वेदस्तुतिद्वारेण तद्वेदमन्त्राणां रहस्यं स्फुटतयैवोन्मीलयति। वस्तुतः संसारस्य पुरस्तात् सत्यं निधातुमेव महर्षिव्यास श्रीमद्भागवत-ज्योतिः प्रज्वालयामास। तज्ज्योतिषा द्रष्टव्यं द्रष्टुं शक्नोति पुमान्—

सत इदमुत्थितं सदिति चेन्ननु तर्कहतं
व्यभिचरति क्व च क्व च मृषा न तथोभययुक्।
व्यवहृतये विकल्पदूषितोऽन्धपरम्परया
भ्रमयति भारती त उरुवृत्तिभिरुक्थजडान्॥

साङ्ख्ययोगयोः रहस्यं गुह्यं च श्रीमद्भागवतं तेनोपदेशेनाभिव्यनक्ति यमुपदेशं हंसो भूत्वा भगवान् सनकादिभ्यः प्रददौ—

ईक्षेत विभ्रममिदं मनसो विलासं दृष्टं विनष्टमतिलोलमलातचक्रम् ।
विज्ञानमेकमुरुधेव विभाति माया स्वप्नस्त्रिधा गुणविसर्गकृतो विकल्पः ॥

श्रीमद्भागवतस्य पारायणेन भवति विदितं यन्मानवोद्धारो न तावत् सम्भवो यावत् तस्मिन् भागवती भक्तिर्नोत्पद्यते । न ज्ञानाच्छास्त्राणां न च यज्ञादिकर्मणामनुष्ठानादेव स प्राशस्त्यं प्राप्तुमर्हति । प्राशस्त्यप्रदाने चेत् क्षमता काप्यस्ति तर्हि सा भगवद्भक्तावेव । वस्तुतो भगवद्भक्तिरेव ज्ञानमस्ति कर्म च सैव । रासपञ्चाध्याय्यां प्रेमभक्तिप्रतिनिधिव्रजाङ्गनानां विमलं प्रेम सङ्कीर्त्य महर्षिर्व्यास इदमेवामनति यत्प्रेम्णा भगवल्लाभः सम्भव । धन्या हि संस्कृत-भाषा धन्य हि संस्कृतसाहित्य यत्र श्रीमद्भागवतरूपतत्त्वरत्नमस्ति ।

सत्यमेवोक्तम्—

श्रीमद्भागवतं पुराणममलं यद् वैष्णवानां प्रियं
यस्मिन् पारमहंस्यमेकममलं ज्ञानं परं गीयते ।
तत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यमाविष्कृतं
तच्छृण्वन् विपठन् विचारणपरो भक्त्या विमुच्येन्नरः ॥



# महाभारतम्

अस्ति महाभारतं रामायणमिवास्मद्राष्ट्रिय इतिहासः । भारतीयाया संस्कृतेर्भव्यं रूपमस्मिन् अद्वितीये ग्रन्थे चतुरस्रतया प्रस्फुटतां गतमवलोक्यते । नास्त्यस्य ग्रन्थस्योद्देश्यमेकमात्रं कौरवपाण्डवयोः समरारम्भस्य वर्णनमपि तु भारतीयधर्मस्य कार्त्स्न्येन सविस्तरं चित्रणमपि तदीयं प्रमुखं लक्ष्यं विद्यते । नैकवस्तुकलादेव ग्रन्थोऽयं महान्, जीवनस्य समस्यानां समाधाने मनोयोगपूर्वकं संलग्नमनाः सन् नयनपथमधिरोहति तस्मादस्माकं भारतीयानां कृते ग्रन्थराज एव धर्मशास्त्रस्यापि कार्यं साधु साधयति । कानिचन स्थलानि तु सत्यमेवंविधानि यानि निशम्यार्थलिप्सुर्वा लोकः काव्यस्यानन्दमश्नुते। एवंविधानेकवैशिष्ट्यविभूषितत्वात्, वस्तुतोऽयं ग्रन्थो बहूपकरोति संसारम् । इतिहासत्वात् स अस्मत्पुरतोऽस्मदीयानां पूर्वजानामितिवृत्तं प्रस्तौति, ऐहिकामुष्मिकनिःश्रेयसमार्गप्रदर्शनकारित्वात् स अस्मत्समक्षे धर्मशास्त्रं भवत् समुपतिष्ठते; मनःप्रीतिकारिण्या पद्धत्या ललितया संस्कृतेः मन्थनायात्र धर्मार्थकाममोक्षप्रदर्शनपुरस्सरं मनोज्ञं रूपं च निदधात्यतः स काव्यायते च । तदेवं ग्रन्थोऽयं सुन्दर इतिहासो रुचिरं धर्मशास्त्रं रमणीयञ्च काव्यं वर्तते । ग्रन्थस्यास्य महत्ता कियतीत्येतस्मिन् विषयेऽभिदधाति श्लोकोऽयम्—

धर्मे ह्यर्थे च कामे च मोक्षे च भरतर्षभ ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् ॥

रामायणरचनाकारः श्रीवाल्मीकिरिव महाभारतप्रणेता श्रीवेदव्यासोऽपि संस्कृतकव्युपजीव्यत्वेन मतः । कवय एतदीयान्युपाख्यानान्याश्रित्य काव्य-नाटक-चम्पू-कथाऽऽख्यायिकादिमयं विपुलं साहित्यं सृजन्तः कैर्न प्रेर्यन्ते ? न केवलमस्मद्देशस्य कवयः स्वकीयाः कृतीः कर्तुमिमं महाग्रन्थमवलम्बन्ते स्म यवसुमात्रादिसंज्ञकद्वीपानामपि कलाकाराः स्वस्वरचनानां प्रणयनाय ग्रन्थादेतस्मान्महतीं सहायतामविन्दन् । न यावदस्य ग्रन्थराजस्याध्ययनं विधीयते तावच्च प्राक्तनराजनीतिविषयकं ज्ञानं जायते न च अर्थशास्त्रस्यापि मर्म

विदित भवति तस्माद् ग्रन्थस्यास्य गरिमाण संस्कृतवाङ्मयस्य न ग्रन्थान्तर मासादयितु शक्नोति इति निश्चप्रचभावेन वक्तु शक्यते ।

अविरामे परिश्रमे आत्मान विनियोज्य महर्षिणा व्यासेन ग्रन्थोऽय त्रिभि र्वर्षैः समाप्ति नीत इत्येतत् तत्समादिपर्वस्थित श्लोक एव प्रकाशयति—

'त्रिभिर्वर्षैः सदोत्थायी कृष्णद्वैपायनो मुनि ।
महाभारतमाख्यान कृतवानिदमुत्तमम् ॥'

अद्य महाभारत यद् रूप बिभर्ति तत्र शतसहस्रपरिमिता श्लोका शोभन्ते । अत इदानीमिद 'शतसाहस्री संहिता' इत्येतेन नाम्ना प्रथितम् । गुप्तकालवर्तिनि एकस्मिन् शिलालेखे ग्रन्थोऽयमुपरिनिर्दिष्टया सङ्ख्यैव स्मृतस्तस्माद् भवतादमव गत यदय ग्रन्थो वर्तमानऽनहसि य काय धयति काय त गमितस्यास्य प्रायेण षोडशशतसमा सवृत्ता । विपश्चितामत्रेद मत यदतद्रूप तदनकशतकानन्तर समुपलब्धुमशक्नत् । तदथमिद ग्रन्थस्त्रीन् परिजग्राह । प्रथमे क्रम ग्रन्थोऽय 'जय' नाम्ना, द्वितीयस्मिन् क्रमे 'भारत' नाम्ना ततश्च तृतीय क्रम 'महाभारतम्' इत्येतन्नाम्ना प्रसिद्धिमवाप ।

महाभारतस्य पाठ सम्प्रदाय प्राधान्येन द्विविधो विलोक्यते । तयोरेकतर उत्तरभारते तदितरश्च दक्षिणभारते प्रचलति । उभयत्रापि श्लोकसङ्ख्यायाम्, अध्यायानां क्रमे, आख्यानाना सन्निवेशे च भूयान् भेद समवाप्यते ।

महाभारतस्यादिम रूप कीदृशमासीत् तत्र कियन्त श्लोका आसन्, कानि कानि चाख्यानान्यवर्तन्त–इत्येतदर्थं चिराद्-वेषणकारिणा प्रयासो वरीवर्ति । एतास्मिताद् 'भण्डारकर ओरिण्टियलरिसर्चइन्स्टीट्यूटात्' यत्समस्करणमधुनाधिग म्यते तत्र ग्रन्थस्यास्य मौलिक रूपमधिकतराया मात्राया दृगत भवति ।

महाभारतस्य व्याख्यातॄणामपि सङ्ख्यास्ति विशाला । तेषु नीलकण्ठानन्त भट्टार्जुनमिश्ररामानुजविमलबोधशङ्कराचार्यश्रीनिवासप्रभृतयो द्वाविंशति सुवि- दिता । इम हि व्याख्याकारा प्रकाण्डपाण्डित्यशालिनो मनीषिणा धुरि कीर्त- नीया सन्ति, सन्ति च तत्त्व्याख्याविद्यापारावारीणा । व्याख्या टीकादिकर्तृणा मियती महती सङ्ख्या ग्रन्थस्यास्य विद्वत्प्रियता लोकप्रियताञ्च व्याचष्टे ।

महाभारतेऽस्ति प्रधानो रस शान्त । अङ्गभूतश्च तदीयोऽस्ति रसो वीर' । एतेन प्राधान्येनायोधनवर्णन न लेखकस्याभिमतमित्येतच्च विदित जायते ।

भौतिकजीवनस्य निस्सारतां प्रदर्श्य मोक्षमपि प्राप्तुं मानसे उत्सुकताया सद्भावस्तदनुसन्धानं विद्यते ।

धर्म एव भारतीयसंस्कृतेर्जीवनमिति यतद्वर्णमपि तु महर्षिव्यास सुन्दर-सुन्दर तराणि आख्यानानि ग्रन्थेऽस्मिन् निदर्शी । अधर्मस्य राष्ट्रस्य विनाशो धर्मेण च तस्योत्थानं भवतीति व्याहरन् विश्वशुभचिन्तको लेखक 'को धर्म' इत्यत्रे दर्शयति—

सर्वेषां यः सुहृन्नित्यं सर्वेषां च हिते रतः ।
कर्मणा मनसा वाचा स धर्मं वेद जाजले ॥ १ ॥
अहिंसा सत्यमक्रोधस्तपो दानं दमो मतिः ।
अनसूयाप्यमात्सर्यमनीर्ष्या शीलमेव च ॥ २ ॥
एष धर्मः कुरुश्रेष्ठ कथितः परमेष्ठिना ।
अस्मिन् धर्मे स्थितो राजन् नरो भद्राणि पश्यति ॥ ३ ॥
धारणाद् धर्ममित्याहुर्धर्मेण विधृताः प्रजाः ।
यः स्याद् धारणसंयुक्तः स धर्म इति निश्चयः ॥ ४ ॥

इत्थं धर्मस्य स्वरूपं प्रतिपादयन् स तमेव नरं वस्तुतो धर्मात्मानं मन्यते यो हि वेदबोधिताचारं सम्यक् सरक्षति । 'आचारः परमो धर्मः' इति यदुक्तं तत्राह स —

'आचाराल्लभते प्राज्ञ इह धर्ममवाप्नुयात् ।
एवं च साधुभिर्दान्तैश्चाप्यदृष्टाहचरणम् ॥

महाभारते धर्ममनुष्ठातुं मानवलोकमुपदिशन्नेवम्—

न जातु कामान्न भयान्न लोभाद्
धर्मं त्यजेज्जीवितस्यापि हेतोः ।
धर्मो नित्यः सुखदुःखे त्वनित्ये
जीवो नित्यो हेतुरस्य त्वनित्यः ॥

अर्थकामाभ्यां धर्म एव ज्यायान् । तेनोभयोरपि सिद्धत्वात् । अत उक्तम्—

ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति मे ।
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ॥

सर्वेषामपि वर्णानां, सर्वेषामप्याश्रमाणाम्, सततमागमपि वर्णानां, नृणां, स्त्रीणां पतिव्रतानां, पितृमातृभक्तानां, सामान्यस्य सत्यस्य, विशेषसमयस्थानां·

दीनाञ्च धर्मस्य निरूपकत्वात् प्रदर्शकत्वादुपदेशकत्वाच्च महाभारतं निःसंशयं भारतीयानां जनानां धर्मशास्त्रं वा पञ्चमो वेदो विद्यते।

जगत्यर्थस्य किं महत्त्वं किञ्च तदीयमुपादेयत्वमित्येतत् सर्वैरपि विदितम्। अर्थं विना संसारे मानवस्य जीवनं क्षणमपि न स्थातुं शक्नोति। अर्थमन्तरेण न किमप्यैहलौकिकं, नहि नहि पारलौकिकमपि, न सम्पन्नतां याति। अर्थविहीनो जनो जगति क्वापि प्रतिष्ठामवाप्तुं न प्रभवति, न चोन्नतिमपि कस्मिन्नपि क्षेत्रे कर्तुं पारयति। अर्थरहितस्य तु दशैव संसारे शोचनीयतां गच्छति। केनापि कविनोक्तम्—

तानीन्द्रियाण्यविकलानि मनस्तदेव
स बुद्धिरप्रतिहता वचनं तदेव।
अर्थोष्मणा विरहितः पुरुषः स एव
ह्यन्यः क्षणेन भवतीति विचित्रमेतत्॥

कृषिर्वाणिज्यं, शिल्पं, सैन्यं, शिक्षा, स्वास्थ्यं, जनरक्षा, गोपालनमित्येवमादीनि सर्वविधान्यपि सुखानि च अर्थमपेक्षन्ते। वस्तुतोऽर्थस्य यादृशी महत्त्वपेक्षा जगति, समाजे, कुटुम्बे, बन्धुतायाञ्च वर्तते न तादृश्यन्यस्य कस्यापि भवति। अर्थोऽयं केन प्रकारेण संग्राह्य उपार्जनीयो रक्षणीयो वर्धनीयश्चेत्येतेषु निखिलेष्वपि विषयेषु महाभारतं प्रकाशमुत्सृजति। तदुपदिशत्यर्थमधिकृत्यैवम्—

कर्मभूमिरियं राजन्, इह वार्ता प्रशस्यते।
कृषिवाणिज्यगोरक्षं शिल्पानि विविधानि च॥ १॥
अर्थं इत्येव सर्वेषां कर्मणामव्यतिक्रमः।
न ऋतेऽर्थेन वर्तेते धर्मकामाविति श्रुतिः॥ २॥
अर्थस्यावयवावेतौ धर्मकामाविति श्रुतिः।
अर्थसिद्ध्या विनिर्वृत्तावुभावेतौ भविष्यतः॥ ३॥
आसीनश्च शयानश्च विचरन्नपि वा स्थितः।
अर्थयोगं दृढं कुर्याद् योगैरुच्चावचैरपि॥ ४॥

न केवलं महाभारतमर्थशास्त्रीयति सत्कामशास्त्रीयति च। सत् कामस्यापि महत्तां तदीयाञ्च प्राप्ततां साधु युक्तिपूर्वकं प्रतिपादयति सर्वेषामपि पुरः। काममन्तरेण न कोऽपि प्राणी किमपि कर्तुं प्रवर्तते। कस्मिंश्चिदपि कार्ये धार्मिके सामाजिके आर्थिके आध्यात्मिकेऽपि वा न रुचिं न चोत्साहं निदधाति पुमान्

स्वादन्, यावत्कामी कामेन प्रेर्यमाणो भवति। सम्पूर्णोऽयं लोकः कामाधीनः। कामस्य शासनं सर्वत्र सौख्यं प्रस्फुरति। सर्वेऽपि प्राणिनस्तद्वशवर्तिनः सन्ति। सुरा असुरा नराः सर्वेऽपि कामस्य पुरो बद्धाञ्जलयो भूत्वा दासा इव सन्तिष्ठन्ते। कामादेव ते सर्वे जीवन्ति। जीवनमेव स सर्वेषाम्। कामस्य विचित्रमेव प्रभावं तेजः ऐश्वर्यञ्च विलोक्य महाभारतं तमेवमनुपवर्णयति—

नाकामः कामयत्यर्थं नाकामो धर्ममिच्छति।
नाकामः कामयानोऽस्ति तस्मात् कामो विशिष्यते॥ १॥
कामेन युक्ता ऋषयस्तपस्येव समाहिताः।
पलाशफलमूलादा वायुभक्षाः सुसंयताः॥ २॥
वेदोपवेदेष्वपरे युक्ताः स्वाध्यायपारगाः।
श्राद्धयज्ञक्रियायां च तथा दानप्रतिग्रहे॥ ३॥
वणिजः कर्षका गोपाः कारवः शिल्पिनस्तथा।
देवकर्मकृतश्चैव युक्ताः कामेन कर्मसु॥ ४॥
समुद्रं वा विशन्त्यन्ये नराः कामेन संयुताः।
कामो हि विविधाकारः सर्वं कामेन सन्ततम्॥ ५॥
नास्ति नासीन्नाभविष्यद् भूतं कामात्मकात् परम्।
एतत् सारं महाराज धर्मार्थावत्र संश्रितौ॥ ६॥
पुष्पतो मध्विव रसः काम आभ्यां तथा स्मृतः।
कामो धर्मार्थयोर्योनिः कामश्चाथ तदात्मकः॥ ७॥

मानवजीवनस्यास्य रूपमपरं मोक्षः। यावदसौ मोक्षं नाश्नुते न तावत् स कदापि दुःखेभ्यो जराजन्ममरणकष्टेभ्यश्च मुक्तो भवितुं शक्नोति। पुत्रकलत्रादीनि यान्यपि सांसारिकसुखत्वेन गण्यन्ते तानि सकलान्यपि दुःखकराण्येव सन्ति। सांसारिकाणां सुखानामनित्यत्वात् तेषां वियोगोऽवश्यमेव सञ्जायते। न केवलं तेष्वनित्यत्वमेव, तेषु दोषा अपि सन्त्यनेके। अतः कदापि तानि स्वकीयैस्तैर्दोषैः कदापि च नैजानित्यत्वधर्मेण निपीडयन्ति न। अभिलषितसम्पदेऽपि सम्पदेवमेव दुःखप्रदा। सम्पदर्जने रक्षणे च प्राणी परमकष्ट-मानादिकञ्च विन्दति। तत्र वर्तते चौराग्निभयमनः सदैव जीवनं चिन्तायामेव ततो व्यत्येति। विद्या विद्वत्स्वेव यद् यद् चिन्ता तत्र सुखं कुतः? प्रायेण पुत्रकलत्रा-,

दिग्वसना भवन्तिस्वच्छन्दचारिणस्ते आदेशपरा अपि न भवन्ति। स्वार्थभावाक्रान्ता भूत्वा ते तत् तदाचरन्ति यत् प्राणिन नितान्तमेव व्यथयति। तस्मात् सासारिकाणि सर्वाण्यपि सुखानि वस्तुतो दु खान्येव। अत एव तु योगदर्शनमाह—

परिणामतापसंस्कारदु खैर्गुणवृत्तिविरोधाच्च दु खमेव सर्वं विवेकिन"।

स्वर्गलोकोऽपि वस्तुतो न सुखद। सत्कर्मणामवसाने सोऽपि हस्ताद् भ्रशते। इदमेव सर्वं विचार्य सुधियोऽभिलषन्ति मोक्षम्। इम मोक्षमुद्दिश्य महाभारत मानवान् पुन पुनर्मधुर शास्ति—

त्यागलोकाद् विमुच्यन्ते विद्यासंसक्तचेतस।
ब्रह्मभूता विरजसस्ततो यान्ति परा गतिम्॥ १॥
भगवन्तमज दिव्य विष्णुमव्यक्तसज्ञितम्।
भावेन यान्ति शुद्धा ये ज्ञानतृप्ता निराशिष॥ २॥
ज्ञात्वाऽऽत्मस्थ हरिं चैव न निवर्तन्ति तेऽव्यया।
प्राप्य तत् परम स्थान मोदन्तेऽक्षरमव्ययम्॥ ३॥
श्रुतिप्रमाणागममङ्गलैश्च शेते जरामृत्युभयादभीत।
क्षीणे च पुण्ये विगते च पापे ततो निमित्ते च फले विनष्टे॥ ४॥
अलेपमाकाशमलिङ्गमेवमास्थाय पश्यन्ति महत्यसक्ता।
यथोर्णनाभि परिवर्तमानस्तन्तुक्षये तिष्ठति पात्यमान॥ ५॥
तथा विमुक्त प्रजहाति दु ख विध्वसते लोष्ट इवाद्रिमृच्छन्।
द्रुम यथा वाप्युदके पतन्तमुत्सृज्य पक्षी निपतत्यसक्त॥
तथा ह्यसौ सुखदु खे विहाय मुक्त परार्ध्यां गतिमेत्यलिङ्ग॥ ६॥

महाभारत कर्मण्यनुरज्यति। कर्म एव मनुष्यस्य पारमार्थिक लक्षणमिति तदीयो द्रढीयान् विश्वास। अत एव तन्मतमिद यत् कर्मपराङ्मुखो मानवो मानवताल समते। कर्मानाचरणात् दु खानि प्राप्तानि भवन्ति, कर्मणि रतपुरुष सुखेन जीवन नतु पारयति। समारेऽस्मिन् सतत कठोरतापूर्वक कर्म कुर्वाणा एव जना हित गच्छन्त प्रायेण वाक्यन्ते। यत् कर्मकुशल पुरुष कर्म कुर्वन्नपि तत् फल न लभते तदा न कोऽपि त निन्दति। एतदेव मानवजगत् प्रति महाभारत मेवमुपदिशति—

प्रायशो हि कृत कर्म नाफल दृश्यते भुवि।
अकृत्वा च पुनर्दु खं कर्म पश्येन्महाफलम्॥ १॥

शक्नोति जीवितुं दक्षो नालसः सुखमेधते ।
दृश्यन्ते जीवलोकेऽस्मिन् दक्षाः प्रायो हितैषिणः ॥ २ ॥
यदि दक्षः समारम्भात् कर्मणो नाश्नुते फलम् ।
नास्य वाच्यं भवेत् किञ्चिल्लब्धव्यं वाधिगच्छति ।
हीनं पुरुषकारेण कर्म त्विह न सिद्ध्यति ॥ ३ ॥

अस्तीयं भव्या भरतभूः कर्मभूः । इह मानवैः सन्ततं सत्कर्मपरैर्भाव्यम् । येन कर्मणोन्नतिर्नैतिकी दैहिक्याध्यात्मिकी च जायते येन सर्वेऽपि मानसमाह्लादयन्ति, येन सदाचारो विकसति तदेव कर्म सत्कर्म इति कथ्यते । कर्मणि शक्तिर्महती सन्निहितास्ति । तत्स्वर्गमपवर्गञ्च प्रदातुं शक्नोति परं स्वर्गादिफलार्थं सत्कर्म काम्यते अपवर्गार्थञ्च निष्कामकर्म । कर्म बन्धुरिव साहाय्यकृदस्ति पाणिरिव तत्सर्वदोपकरोति प्राणिनम् । स एव पुरुषो भुवि दीनो हीनो योऽस्ति कर्मरहितो वा पाणिरहितः । व्यासो मन्यते यत् पाणिलाभ एव महाँल्लाभः—

अहो सिद्धार्थता तेषां येषां सन्तीह पाणयः ।
अतीव स्पृहये तेषां येषां सन्तीह पाणयः ॥
न पाणिलाभादधिको लाभः कश्चन विद्यते ।

वस्तुतो व्यासः कर्मवादी आचार्योऽस्ति । तज्जीवनमेव तस्य कर्मवादितां घोषयति । श्रीमद्भागवत पुराण-महाभारतप्रभृतयस्तदीया ग्रन्थास्तस्य कर्म-धौरेयस्य कर्मवादितायाः समुज्ज्वलानि देदीप्यमानानि च प्रमाणानि सन्ति ।

यदि राजधर्मे जिज्ञासास्ति तर्हि महाभारतं पश्यताम् । तत्रैव राजधर्म-विषयेऽपि सविस्तरं वर्णितम् । प्राचीनो राजधर्मः कीदृश आसीदिति चेत्कश्चिद् ज्ञातुमाकाङ्क्षति तदा तेन महाभारतं पठनीयम् । महाभारतमन्तरेण न कोऽपि मानवः कदापि पूर्णतया राजनीतिविचक्षणो भवितुमर्हतीति चेदुक्तं स्यात् तदा नानुचितं भवेत् । एतद् ग्रन्थावलोकनेन ज्ञातं सम्भवति यदस्मदीयाः पूर्वजा नूनं राजनीत्यामपि परां कूटविज्ञतां गता आसन् । केचिदिह श्लोका उद्ध्रियन्ते तेभ्यो ज्ञायते यत् स महान् दुरूहो विषयः केन प्रकारेण साधिकारं वर्णितः—

मृदुर्हि राजा सततं लङ्घ्यो भवति सर्वशः ।
तीक्ष्णाच्चोद्विजते लोकस्तस्मादुभयमाश्रय ॥ १ ॥
अवमन्यन्ति भर्तारं संघर्षादुपजीविनः ।
स्वस्थाने च न तिष्ठन्ति लङ्घयन्ति च तद्वचः ॥ २ ॥

व्यसनानि च सर्वाणि त्यजेथा भूरि दक्षिण।
न चैव न प्रयुञ्जीत सङ्गं तु परिवर्जयेत् ॥ ३ ॥
नित्योद्युक्तेन वै राज्ञा भवितव्यं युधिष्ठिर।
प्रशस्यते न राजा हि नारीवोद्यमवर्जितः ॥ ४ ॥
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः।
उत्पथप्रतिपन्नस्य दण्डो भवति शाश्वतः ॥ ५ ॥
त्यागश्च प्रणिधिश्चैव काले दानममत्सरात्।
युक्त्यादानं न चादानमयोगेन युधिष्ठिर ॥ ६ ॥
सतां संग्रहणं शौर्यं दाक्ष्यं सत्यं प्रजाहितम्।
अनार्जवैरार्जवैश्च शत्रुपक्षस्य भेदनम् ॥ ७ ॥
आत्मा जेयः सदा राज्ञा ततो जेयाश्च शत्रवः।
अजितात्मा नरपतिर्विजयेत कथं रिपून् ॥ ८ ॥
न्यसेत गुल्मान् दुर्गेषु सन्धौ च कुरुनन्दन।
नगरोपवने चैव पुरोद्यानेषु चैव ह ॥ ९ ॥

राजनीतेर्नेतारं प्रति महाभारतं महनीयमादर्शमुपस्थापयति। धर्मस्य व्यवस्थाया उत्तरदायित्वं राजानमेव प्रयाति। यदि राजा प्रजाः न पालयेत् तदा प्रजानामेव क्षयो न, वेदत्रय्या अपि अवस्थानं नितान्तं कठिनं स्यात्। राजधर्मे सति नष्टे समास्तस्य राष्ट्रस्य च सर्वनाशो भवति। अस्ति राजा राष्ट्रपुरुषस्य मेरुदण्ड इत्यादिशब्दैर्महाभारतमुच्चै राजधर्मस्योत्कृष्टतरतां किञ्च राजनीतेरुपादेयतां प्रतिपादयति। अस्मद्भारतं कृषिप्रधानराष्ट्रमस्ति। अतः कथनं महाभारतस्येदं यद् यो नेता स्वयं कृषिकर्मा न, स राष्ट्रसमितिप्रवेशाधिकारी अपि न—

"न न स समितिं गच्छेद् यश्च नो निर्वपेन्महीम्"

महाभारतं परमरमणीयं मनोऽभिराममुपवनमिव संस्कृतसाहित्यसंसारस्य। सद्यानन्तानि नानाविधानि च सुमनांसि विलोक्यन्ते। तानि स्वस्वालौकिकेन सौरभेण सर्वेषामपि मनांसि सम्यक् परितर्पयन्ति। तानि न केवलं चेतः परिप्रीणयन्त्यपि मनसो मलिनतामपनयन्ति धियमेधयन्ति आत्मानञ्चोन्नमयन्ति।

परिश्रीलयन्तु सर्वेऽपि आमानं शील-सौरभेण—

शीलं प्रधानं पुरुषे तद् यस्येह प्रणश्यति ।
न तस्य जीवितेनार्थो न धनेन न बन्धुभिः ॥

जिघ्रन्तु तावद् सत्य-सुमनसः पुण्यं परिमलम्—

सत्यमेकाक्षरं ब्रह्म सत्यमेकाक्षरं तपः ।
सत्यमेकाक्षरो यज्ञः सत्यमेकाक्षरं श्रुतम् ॥

अथ दम-कुसुम-गन्धमादाय प्रवहति गन्धवहोऽनेन नन्दयन्तु सुधियः आमानम्—

दमस्तेजो वर्धयति पवित्रं दम उच्यते ।
विपाप्मा निर्भयो दान्तः पुरुषो विन्दते महत् ॥

स्वकीयं सर्वजयिनं गन्धं विकिरदिदं ज्ञान-कुसुमं शोभतेतमां तेन सफलीकुर्वन्तु स्व विचक्षणवराः—

न स्त्री न पुमांश्चैव तथैव न नपुंसकः ।
केवलं ज्ञानमात्रं तद् तस्मिन् सर्वं प्रतिष्ठितम् ॥

एषा हि सच्चरित्रता वल्लरी कियत् सौन्दर्येण शोभमाना सर्वमपि संसारमेदयते—

वृत्तं यत्नेन संरक्षेद् वित्तमायाति याति च ।
अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥

चेद् गुण कल्पमितो न गृहीतं तदा जीवनमेव मुधा, गृह्णन्तां तावत् सत्वरम्—

गुणेषु यत्नः क्रियतां किमाटोपैः प्रयोजनम् ।
विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ॥

महाभारतस्य रमणीयताया वर्णनं केन प्रकारेण कर्तुं शक्यमस्ति । तत्तु वस्तुतो हि कमनीयताया उद्गममही एव भूत्वा विभाति । क्वचित् तत्र अहिंसाया शोभा, क्वचिद् दयाया आभा, क्वचित् तपसः प्रभा, क्वचित् दानस्य बन्धुरता, क्वचिद् विद्याया मञ्जुलता, क्वचिच्च त्यागस्य पेशलता, क्वचिच्च मनोपवासादीनां कृश समृद्धेन पूर्णेन च ताल्पर्येण परिस्फुरन्ती विलोक्यते । इदमेव तपोवनं जगत् यत्र गीता-गङ्गापि प्रवहमाना प्राणिमात्रस्य त्रिविधमपि तापं हरति ।

महाभारतं हि उज्ज्वलानां चरित्राणां महाकान्तारमिव भाति । तत्रोशीनर विश्वामित्र-च्यवनप्रभृतिप्रभूतनृपर्षिवर्यगाथाम्पेयाश्च उत्तङ्कोत्तथ्यात्र्यादीनामुपा-

स्थानानि भूयिष्ठानि तत्र राजन्ते। तन्मनोभिरामा महाचित्रशालेव शोभते मानसिक धार्मिक भक्तिविषयकचरित्र चित्र-सहस्रैर्विभूष्यमाणत्वात्।

महाभारतस्य पात्राणि सन्ति स्वाभिमानशालीनि। प्रेमपरायणः पुरुषस्तत्र प्रेम्णि धर्मनिष्ठो धर्मे, ज्ञानवान् ज्ञाने पुरुषार्थी पुरुषार्थे, भाग्यवादी भाग्यवादिताया, कारुणिकश्च करुणाया तत्र सिंह इव गर्जन् श्रुतो भवति।

महाभारत दर्पण इव शोभते। संसारवृत्तयः सर्वा अपि तत्र प्रतिबिम्बिता भवन्त्य प्राप्यन्ते। महर्षिणा व्यासेन लोकनयनान्मीलनाय 'को मार्गः श्रयणीयः कश्च न' इत्येतदवबोधनाय संसार-स्वरूपस्यावगमनाय च एष महान् श्रेयस्करो ग्रन्थः सृष्टः।

अधःस्थितेन श्लोकेन केनापि कोविदेन ग्रन्थमेनमधिकृत्य या श्लाघना या च शुभकामना कृता तामेव श्लाघना तामेव शुभकामनां विदधाना वयं महर्षि व्यासचरणयोर्नमस्कारसहितं समर्पयाम उपक्रममिमम्—

> पाराशर्यवचः सरोजममलं गीतार्थगन्धोत्कटं
> नानाख्यानककेसरैर्हरिकथासम्बोधनाबोधितम्।
> लोके सज्जनषट्पदैरहरहः पेपीयमानं मुदा
> भूयाद् भारतपङ्कजं कलिमलप्रध्वंसि नः श्रेयसे॥



# श्रीमद्रामायणी गङ्गा पुनाति भुवनत्रयम्

श्रुतयो यत् परमतत्त्वं 'ब्रह्म' इत्येतेन नाम्ना गृणन्ति तदेव ब्रह्मतत्त्वं श्रीमद्रामायणमपि 'राम' इत्येतयाभिधया गायति। वेदवेद्यः परमपुरुषोत्तमः श्रीरामो भूत्वा भुवि यदावततार वेदः एव तदा श्रीमहर्षिवाल्मीकिवदनात् श्रीरामायणरूपमादाय प्रादुर्बभूवेत्येषा हि साम्यता रामायणमधिकृत्य चिरादास्तिकानां समाजे प्रवर्तमानास्ति। तस्माद् रामायणं नाम काव्यं तदेव गौरवं गाहते यद् वेदः। यो ह्यस्य वेदसमपूज्यस्य काव्यस्य कवयिता सोऽपि महर्षिः प्राचेतसः 'आदिकवि' इत्येतयाभिख्यया लोकविश्रुतः। आदिकवित्वादसौ विश्वस्य सर्वेषामपि कवीनां गुरुः। तस्याननेन्दुस्रवत्कवितासुधां निपीयैव कवयः काव्यरसेन रसिकानां चेतांसि सततं चिरन्तनादनेहसः परिप्रीणयितुं क्षमा अभूवन् इत्येतदवलोक्यैव कश्चन मनीषी तमादिकविमेवं स्तवीति " "पीत्वा यद्वदनेन्दुमण्डलगलत्काव्यामृताब्धेः किमप्याकण्ठं कविनूतनाम्बुदमयी कादम्बिनी वर्षति।"

महर्षेर्वाल्मीकेः काव्यमिदं या या विशिष्टता संश्रयति तास्ता सर्वा विशिष्टता लक्षणकारैर्बुधवरैः काव्यस्य लक्षणत्वेनाभ्युपगताः। अत एव कृतिः काव्यं भवितुं शक्नोति यस्यां रामायणसमुल्लसिता विशिष्टता विभाति। रामायणं हि मानवीयजीवनस्य व्याख्यानमस्ति। तच्छ्रेयोमार्गप्रदर्शकं ज्योतिर्विद्यते। तत् सांसारिकव्यवहारोपदेशकाचार्यो वर्तते। तत्सदाचारमर्मप्रदर्शनपरं किमप्यद्भुतमेव सरसं धर्मशास्त्रमास्ते। तन्मानवमानसगतभावानां प्रदर्शनकारिणी काव्यनिर्वचनैः प्रदर्शनी विलसति। तद् भारतीयायाः संस्कृतेः समुज्ज्वलानां स्वाभाविकानाञ्च चारुतराणां चित्राणां विचित्रमेव किमपि विशालं चित्रभवनं विभाति। तत्र नीतिशास्त्रस्यार्थशास्त्रस्याध्यात्मशास्त्रस्य च चतुर्विधानामपि पुरुषार्थानाम् हृदयहारीणि सजीवानि अभिनयमानानि विलोकितानि जायन्तेऽतस्तत् कौतुकवर्द्धनं पेशलमेव प्रेक्षागृहमस्ति। यदि येन ललितेन प्रकारेण मानवस्याभ्यन्तरां प्रकृतिं विशिनष्टि तेनैव बन्धुरेणोपक्रमेण बाह्यप्रकृतेर्दृश्यान्यपि प्रमापयति तस्मात् तन्मधुरमेवानुपमं विधानं सृष्टेर्विलक्षणाह्लादैकमयी सृष्टिश्चकास्ति। बृहद्धर्मपुराणस्य—

'पठ रामायण व्यास काव्यबीज सनातनम् ।
यत्र रामचरित स्यात् तदह तत्र शक्तिमान् ॥
रामायण पाठित मे प्रसन्नोऽस्मि कृतस्त्वया ।
करिष्यामि पुराणानि महाभारतमेव च ॥"

इत्येतौ श्लोकौ रामायणस्योच्चतमशिखरासीन गरिमाणमुच्चैरुन्मीलयन्तौ श्रूयेते । श्रीस्कन्दपुराणञ्च तन्महिम्नि—

"रामायण महाकाव्य सर्ववेदेषु सम्मतम् ।
सर्वपापप्रशमन दुष्टग्रहनिवारणम् ॥
धर्मार्थकाममोक्षाणां हेतुभूत महाफलम् ।
अपूर्वं पुण्यफलद शृणुध्व सुसमाहिता ॥
रामायण नाम पर तु काव्य
सुपुण्यद वै शृणुत द्विजेन्द्रा ।
यस्मिञ्छ्रुते जन्मजरादिनाशो
भवत्यदोष स नरोऽच्युत स्यात् ॥"

इति यदाह तत्सर्वथैव सत्यम् । यतस्तस्वाध्यायेन मानवस्य मन कुपथाद् दूरीभूय सत्पथे प्रवर्तते । मानवस्तद्भाव्य सश्रुत्य वा पापे जुगुप्सते पुण्ये च धिय निवध्नाति ।

रामायण वस्तुतो भारतस्य राष्ट्रिय शिरस्ति । यस्मिन्नहनि भारते 'राम' इति न श्रुत स्यात् तस्मिन् दिने भारतमपि मृत भवेद । इमा शोचनीयामवस्थां गतमपि भारत राम स्मरद् राम गायद् राम भजद् यद् दृश्यते वा लभ्यते तत्र कारण रामायणमेव । रामायणस्य प्रचार प्रसारो वा देशे सर्वत्र वर्तते तस्य प्रभावो देशस्यास्य ग्रामे ग्रामे गृहे गृहे व्याप्तोऽस्ति विततोऽस्ति च । अशिक्षां गमिता अपि भारतीया नार्य पर्वसूत्सवेषु व्रतेषु अन्येषु च धार्मिकेष्ववसरेषु रामकथां गायन्त्यो रामचरित्रपरका गीतिमुच्चैर्गृणन्त्य सहर्ष समवेता भवन्ती दृश्यन्ते यत्कारण तदपि रामायणमेव । अत साम्प्रतमपि येन भारतमिद जीवति येन भारतीया सभ्यता श्वसिति येन च भारतीया संस्कारा प्राणवन्त सन्ति तद् रामायणमेवादिकवे । इद वाल्मीकिरामायणमेवास्मद् देशे कालिदास भवभूति मुरारि जयदेव तुलसीदास मैथिलीशरण राधेश्यामञ्चाजीजनत् ।

रामायणस्य समुपलभ्यमाना शतशष्टीकाश्च तस्य लोकप्रियतां विद्वत्प्रिय

तान्बोद्धुं प्रेरयन्ति। सुविदितासु तदीयासु टीकासु रामवर्मणस्तिलकाख्या, माहेश्वरतीर्थस्य तत्त्वदीपिकाभिधा, गोविन्दराजस्य शृङ्गारसंज्ञिका, रामानन्दतीर्थस्य रामायणकूटनामधेया, अहोबलस्य वाल्मीकिहृदयनाम्नी, अप्पयदीक्षितस्य रामायणतात्पर्यसंग्रहाह्वा वरदराजमैथिलभट्टस्य विवेकतिलकाभिधेया, विश्वनाथस्य धर्माकूतात्पर्यतरंगिणीनामिका च टीका किञ्च नागेशस्य रामीया व्याख्या इत्येता विद्वदानन्दवर्धिन्य उत्तमाष्टीका मता भवन्ति।

महर्षिवाल्मीकी रामायणं येन रूपेण येन विग्रहेण वा जुगुम्फ तदीयं तन्मूलं रूपं कालेन किमपि रूपान्तरं नीतं न सम्प्रति तद्रूपं हि साद्यमुपलभ्यते। विदुषामेतद् यदिदानीं रूपं यदवाप्यते तद् ईशवीयद्वितीयशतकाभ्यर्णे अनुरूपलेभे। परं नेदं मतं सर्वसम्मतं बहूनां तु कथनमिदं यत् तद्रचना बुद्धात् प्रागेव सञ्जाता। तत्र बौद्धधर्मादिति सङ्केतोऽपि न संलक्ष्यते, तत्र बहवः आर्षाः प्रयोगाः प्राप्यन्ते तत्पाणिनिभासकौटिल्यपतञ्जलिप्रभृतयोऽपि स्मरन्ति विदन्ति च तस्मात् तस्य रचनाकालो न कदापि ईशवीयद्वितीयशतकाभ्यर्णवर्ती। तद्रचना तु अवश्यमेव ततश्चिरात् प्राक् जातेति प्रतीयतेऽस्य साम्प्रतिकेऽपि समये रामायणं यद्रूपं बिभर्ति तस्यापि रूपस्योत्पत्तेः प्रायेण पञ्चविंशतिशतकानि व्यतीतानि। दशरथजातकप्रभृतिकथाः अश्वघोषस्य कृतयः, विमलसूरेः पउमचरियकाव्यमन्ये चानेके बौद्धधर्मसम्बन्धिनो ग्रन्था रामायणीयं प्रभावं धारयन्ति तेनेदमेव सिद्ध्यति यद् रामायणस्याधुना यद्रूपं विलोक्यमानं भवति तदपि बुद्धोदयात् प्रागेव व्यवस्थितं स्थिरताञ्च नीतमभूत्।

अद्यत्वे रामायणस्य चत्वारि प्रामाणिकानि संस्करणान्युपलब्धानि भवन्ति। तानि चेमानि—औदीच्यं, गौडीयं, पश्चिमोत्तरीयं, दाक्षिणात्यञ्च। एषु संस्करणेषु पर्याप्तः पाठभेदः प्राप्यते। कतमच्च संस्करणं नितरां प्रामाणिकमभिप्रेतम् निश्चयपूर्वकं वक्तुं न सुशकम्। ऐतिहासिकं समीक्षणं विधाय विद्वांस इमं निश्चयं यान्ति यद् रामायणे समये समयेऽनेकप्रक्षिप्तांशाः स्थानं लब्धवन्तः। याकोबीमहोदयस्य कथनमिदमपि वर्तते यद् रामायणं मूलतः काण्डपञ्चकमेवासीत्। न तत्रासी बालकाण्डोत्तरकाण्डयोः सत्तासीत्। तत्काण्डद्वयमपि तु पश्चात्कालेन तत्र समावेशमनुलेभे। भवतु नाम किमपि, इदं हि चतुर्विंशतिसहस्रश्लोकनिबद्धं रामायणं संस्कृतसाहित्यस्य श्रेष्ठेषु ग्रन्थेष्वस्ति। ग्रन्थस्यास्य नैजानुपमवैशिष्ट्यवत्वात् न ग्रन्थान्तरमेतदीयां समतामधिगन्तुं प्रभवति।

रामायण नाम काव्य विविधविषयविभूषित याव्यमस्ति। तत्र क्वचिद् दर्शनानामाभा, क्वचिद् विज्ञानस्य भा, क्वचिद् आयुर्वेदस्य द्युति, क्वचिन्मनोविज्ञानस्य च्छवि, क्वचिद् ज्योतिष प्रभा, क्वचित् तन्त्रशास्त्रस्य त्विट्, क्वचिच्चान्यान्यविषयाणां विभा समुद्दीप्यते।

'त्वं गति' परमा देव सर्वेषां न परन्तप। वाल० १५, २५
वधाय देवशत्रूणां नृणां लोके मन कुरु॥
स हि देवैरुदीर्णस्य रावणस्य वधार्थिभि। अयो० १, ७
अर्थितो मानुषे लोके जज्ञे विष्णु सनातन॥
सर्वाँल्लोकान् सुसहृत्य सभूतान् सचराचरान्। सु०, ५१, ३९
पुनरेव तथा स्रष्टु शक्तो रामो महायशा॥
एतत् तदुक्तमव्यक्तमक्षर ब्रह्मसम्मितम्। लङ्का, ११९।२२
देवानां हृदय सौम्य गुह्य राम परन्तप॥
भवान् नारायणो देवश्चतुर्बाहु सनातन। उत्तर, ८, २६
राक्षसान् हन्तुमुत्पन्नो ह्यजय्य प्रभुरव्यय॥"

इत्यादिश्लोकैर्दार्शनिकताया,

"एवमुक्त स रामेण महात्मा हरियूथप। यु० ९१, २४
लक्ष्मणाय ददौ नस्त सुषेण परमौषधम्॥
स तस्य गन्धमाघ्राय विशल्य समपद्यत। यु० ९१, २५
तदा निर्वेदनश्चैव सरुढव्रण एव च॥"

इत्यादिभिरायुर्वेदस्य,

"त्रिशङ्कुर्लोहिताङ्गश्च बृहस्पतिबुधावपि। अयो०, ४१, ११
दारुणा सोममभ्येत्य ग्रहा सर्वे व्यवस्थिता॥
अवष्टब्धञ्च मे राम नक्षत्र दारुणग्रहै। अयो०, ४, १९
आवेदयन्ति दैवज्ञा सूर्याङ्गारकराहुभि॥"

इत्यादिभिर्ज्योतिःशास्त्रस्य,

"लोहितानि च वासांसि स्रुव कार्ष्णायस तथा।
स तत्राग्नि समास्तीर्य शरपत्रै सतोमरै॥
छागस्य कृष्णवर्णस्य गल जग्राह जीवत। (युद्ध०, ७३, २३–२६)

सद्यैव समिद्धस्य विधूमस्य महार्चिषः ॥
बभूवुस्तानि लिङ्गानि विजयं प्रत्यदर्शयन् ।"

इत्यादिभिस्तन्त्रशास्त्रस्य,

"कच्चिदात्मसमाः शूराः श्रुतवन्तो जितेन्द्रियाः । अयो०, १००, १५
कुलीनाश्चेङ्गितज्ञाश्च कृतास्ते तात मन्त्रिणः ॥
मन्त्रो विजयमूलं हि राज्ञां भवति राघव । अयो०, १००, १६
सुसंवृतो मन्त्रिधुरैरमात्यैः शास्त्रकोविदैः ॥"

इत्यादिभिः राजनीतिशास्त्रस्य,

"सोऽहं त्वामागतो द्रष्टुं प्रस्थितो विजनं वनम् । अयो० ७६, २२
भरतस्य सन्निधौ ते नाहं कथ्यः कदाचन ॥
ऋद्धियुक्ता हि पुरुषा न सहन्ते परस्तवम् । ,, ,, [illegible]
तस्मान्न ते गुणाः कथ्या भरतस्याग्रतो मम ॥"

इत्यादिभिश्च मनोविज्ञानस्य शोभाः शोभमाना लोचनपथेऽवतरन्ति ।

अस्मिन् काव्ये एवं विधानि बहूनि स्थलानि विभ्राजन्ते यान्यस्माकं पुस्तकोऽर्थशास्त्रस्य सुन्दरतां प्रस्तुवन्ति । पुरातनं भारतं जनानामामुष्मिकमभ्युत्थानमेव प्रति न केवलं निदधावपि तु तत् तेषामैहिकं प्रेय-श्रुमम्—च प्रति नितान्तं प्रीतिं जग्राह तदुद्दिश्यानारतं स्वकीयं चेत आचकर्ष । संसारस्य सुखसर्वमूलमर्थस्ते । नार्थं विना कुतोऽपि जगति सुखम् । जीवनं हि अर्थमन्तरेण जगति पदमेकमपि न चलितुं क्षमते । पुत्र-कलत्रमित्रादयः सर्वेऽपि धनवति रज्यन्ति । अर्थादेव धर्म-कार्याणि सम्पद्यन्ते । मानवीयजीवनस्य विकासार्थं यानि साधनान्यपेक्ष्यन्ते तेष्वर्थसाधनं नैजं महत्त्वमुपादेयत्वञ्च निदधाति । रामायणस्य "अयोध्यायां तदा न कोऽप्येतादृगासीत् योऽल्पसंनिचयः स्यात् । तत्र सर्वेऽपि कुण्डलिनः, स्रग्विणः, प्रचुरभोगवन्तः, सुगन्धवन्तः, यज्वानः, देवतातिथिपूजकाः, सुवाससः, सुवेषाः, व्यवहारकुशलाः, पुत्रपौत्रवन्तः, भूभवनप्रभृतिविविधप्रचुरपरिच्छेदशालिन आसन्" इत्यादिकं वर्णनं स्पष्टमेव देशस्यास्मदीयस्यार्थिकीं समृद्धिसुव्यवस्थितिमुद्भावयति । अर्थवान् देशस्तदा भवति यदा तत्र वाणिज्यमुत्कर्षकोटिस्थितं स्यात्, बहुविधानां पण्यानां निर्माणं स्यात्, तत्र नानाशिल्प-कलाकुशलता प्रवृत्ता स्यात्, कृषिः गुरुतरा स्यात्, गावो भूयिष्ठाः स्युः । प्राचीने भारते इमानि सर्वाण्यपि अर्थकराणि साधनानि अबोभवुः । रामायणस्य—

(क) "स त कैलासशृङ्गाभं प्रासादं रघुनन्दन"
(ख) "सा हिरण्यं च गाश्चैव रत्नानि विविधानि च"
(ग) 'सिक्तसम्मृष्टरथ्या हि तथा च वनमालिनी"
(घ) "नानापण्यसमृद्धेषु वणिजामापणेषु च"
(ङ) "अलङ्कारविधिं सम्यक् कारयामास वेश्मन"
(च) "दीपवृक्षांस्तथा चक्रुरनुरथ्यासु सर्वशः"
(छ) "वैहारिकाणां शिल्पानां विज्ञातार्थविभागवित्"
(ज) "स्थापय निष्ठितांश्चैव वृद्धान् परमधार्मिकान्"

इत्यादिका पङ्क्तयः प्राचीनस्य भारतस्यार्थनिष्ठामर्थशास्त्रनिष्णाततामर्थसनु-
ष्ठानाञ्चाद्घोषयन्त्य केन न श्रोत्रजना श्रूयन्ते ?

काव्यमेतदादितोऽन्तपर्यन्तं धर्ममाचरितुं धर्मं रक्षितुमुपदिशति । इह सम-
स्तमपि जगत् पित्राज्ञापालनरूपधर्मस्य रक्षणार्थं रामं गहने विपिने घोरघोरतरा-
ण्यसह्यानि कष्टानि सहमानं, पत्यनुगमनरूपं धर्मं पातुं शिरीषादपि मृदुरं
मिथिलेशस्य तनया महाराजस्य दशरथस्य स्नुषा सीता दारुणदुःखप्रदे कानने
कण्टकाकीर्णपथे चलन्ती, ज्येष्ठभ्रातृसेवारूपं धर्मं गोपायितुं वनमधिवसन्तं रामं
सेवमानं सुमित्रानन्दनं योगिनामप्यगम्यं सेवाधर्मं स्वीकुर्वाणं त्रिविधदम्भान
हनुमन्तं, रामस्य वनवासित्वात् सकलान्यपि राजसुखानि अवधूय नन्दिग्रामे
नितान्तकठोरं तपश्चरन्तं रामपादुकार्चापं सम्पादयन्तं भरतं, लोकस्याराधनरूप-
धर्मं ग्रन्तुं प्राणेभ्योऽपि प्रियतरामुत्पत्तिपरिपूतां जानकीमपि मुञ्चन्तं राजानं दशर-
थनन्दनं रामं समीक्षते ।

इदं हि रामायणं भृगु–नृग–निमि–पुरूरवो–ययाति–कल्माषपाद–मान्धातृ–
इक्ष्वाकुसगरस्यवृत्रासुरैल–बुधप्रभृतीनां बहूनामुपाख्यानानि सग्राह्य पुराणेति-
हासयोरपि गुरुतरं कार्यं सम्पादयद् दृग्गोचरं भवति । इदं हि पाठकानां पुरोऽसं-
ख्यातानि दृश्यानि मनःपावनकारीणि प्रस्तौतीति । क्वाप्यत्र समुद्र–मन्थनस्य
कौतूहलावहं दृश्यं, क्वापि गङ्गानयनार्थं तपश्चरतो भगीरथस्य भव्यं दर्शनं, क्वापि
कार्तिकेयस्यावतारः, क्वापि कश्यपः क्वापि च रेणुकामाता क्वापि च त्रिशङ्कु-
विश्वामित्रादिकाः स्वां स्वां दिव्याभामां विकिरन्तः सचेतसां चेतांसि भृशं रमयन्ति ।

समुदाचारशिक्षया समवाप्स्यर्थं चेच्चेतः समुत्कण्ठते तदा रामायणस्य
सविधे आयान्तु । सा दृष्टिस्तथा प्रदाय करिष्यति जीवनं शिष्टाचारसम्पन्नं विनय-

विभूषितश्च। जीवनस्य सफलतायाः कृते लोकाचार-व्यवहारविज्ञताऽपि अपेक्ष्यते। विना लोकाचारज्ञानं शास्त्रेष्वपि कुशलो जनो नाभीष्टमवाप्तुमर्हतीति न च लौकिकमभ्युत्थानमत एव तु पञ्चतन्त्रादिनीतिग्रन्थाः "अपि शास्त्रेषु कुशला लोकाचारविवर्जिताः..." इत्यादिरलोकज्ञस्यापि मूर्खत्वमभिधानाच्च कथां संश्राव्य जनान् सर्वान् आचार-व्यवहाराभिज्ञतालाभाय प्रेरयन्ति। "ततः प्रणम्य शिरसा तं विप्रं देववर्णिनम्"; "भगवन् स्वागतं तेऽस्तु किं करोमि तवानघ"; "पितुः समीपं गच्छन्तं प्राञ्जलिः पृष्ठतोऽन्वगात्", "कच्चिन्मया नापराद्धमज्ञानाद् येन मे पिता"; "अथ सीता समुत्पत्य वेपमाना च तं पतिम्" इत्यादिकाभिः सदाचार-शिक्षाप्रदायिकाभिः पङ्क्तिभिरलङ्क्रियमाणो दृश्यते ग्रन्थोऽयं सर्वथा।

रामायणाध्ययनेन तदनुशीलनेन च देशस्यास्मदीयस्य पुरातनस्थानानां ज्ञानं जायते, तदीयानि प्राचीनानि नामानि ज्ञातानि भवन्ति, अस्मद्देशस्य विस्तारः सीमा च विदिता भवति। भूगोलविद्यायां ये हि विपश्चितो रुचिं निदधति तैर्ग्रन्थमिममनुसन्धानाभिरुच्या दृष्टपार्थेऽपि बहूनि पुरातनानि स्थानानि तत्रस्थानानां नामानि नद-पर्वतादिकाश्च बहवः पदार्थाः प्रकाशं नीताः सन्ति। ग्रन्थस्यास्याध्ययनादेव कनिङ्घमस्य 'एन्शेन्ट्ज्योग्राफी', डे-महोदयस्य 'ज्याग्राफिकल्डिक्शनरी'; 'एशियाटिकसोसाइटीजर्नल'स्य च एको महत्त्वपूर्णो लेखो जन्म ग्रहीतुमशकत्।

> धर्मार्थकामाः खलु जीवलोके समीक्षिता धर्मफलोदयेषु।
> ये तत्र सर्वे स्युरसंशयं मे भार्येव वश्याभिमता सपुत्रा॥
> यस्मिंस्तु सर्वे स्युरसंनिविष्टा धर्मो यतः स्यात् तदुपक्रमेत।
> द्वेष्यो भवत्यर्थपरो हि लोके कामात्मता खल्वपि न प्रशस्ता॥
> गुरुश्च राजा च पिता च वृद्धः क्रोधात् प्रहर्षाद्यदि वापि कामात्।
> यद् व्यादिशेत् कार्यमवेक्ष्य धर्मं कस्तं न कुर्यादनृशंसवृत्तिः॥
> न तेन शक्नोमि पितुः प्रतिज्ञा-
> मिमां न कर्तुं सकलां यथावत्। (अयो० २१, ५७–६०)
> स ह्यावयोस्तात गुरुर्नियोगे
> देव्याश्च भर्ता स गतिश्च धर्मः॥"

इत्यादिभिः श्लोकैः रामायणं धर्मार्थकामानां स्वरूपं त्रिवर्गमूल्यञ्च महनीयेन विधया कौशलकल्पितया रीत्या प्रदर्शयतीति पश्यन्तु प्रेक्षावन्तः। दैव-पुरुष-

कारविषयिणी या चर्चा राम-लक्ष्मणयो सवादेऽत्र प्रवृत्तास्ति सापि ध्यानपूर्वक पठनीयास्ति।

"क कस्य पुरुषो बन्धु किमाप्य कस्य केनचित्।
एको हि जायते जन्तुरेक एव विनश्यति॥
तस्मान्माता पिता चेति राम सज्जेत यो नर।
उन्मत्त इव स ज्ञेयो नास्ति कश्चिद्धि कस्यचित्॥
न ते कश्चिद् दशरथस्त्व च तस्य न कश्चन।" अयो० १०८ स०

इत्यादिभि श्लोकैर्जाबालिर्नास्तिक यन्मतमुद्भावयामास तस्य प्रत्याख्यान राम समीचीनतया कृतवान्। स आह—

"निर्मर्यादस्तु पुरुष पापाचारसमन्वित।
मान न लभते सत्सु भिन्नचारित्रदर्शन॥
कुलीनमकुलीन वा वीर पुरुषमानिनम्।
चारित्रमेव व्याख्याति शुचिं वा यदि वाऽशुचिम्॥
सत्यमेवेश्वरो लोके सत्ये धर्म सदाश्रित।
सत्यमूलानि सर्वाणि सत्यान्नास्ति पर पदम्॥
× × × सोऽह पितुर्निदेश तु किमर्थं नानुपालये।
सत्यप्रतिश्रव सत्य सत्येन समयीकृतम्॥"

रामायणमनिर्वेदे हि स्पृहयति। तदाह—

"अनिर्वेद श्रियोमूलमनिर्वेद पर सुखम्।
अनिर्वेदो हि सतत सर्वार्थेषु प्रवर्तक (सु०, १२ स०)
करोति सफल जन्तो कर्म यच्च करोति स॥"

जीवन सर्वथैव रक्षणीयमित्यत्र तदाह—

'विनाशे बहवो दोषा जीवन् प्राप्नोति भद्रकम्" (सु० १३ स०)

दण्डमुद्दिश्य तदाह—

"अपराधिषु यो दण्ड पात्यते मानवेषु वै।
स दण्डो विधिवन्मुक्त स्वर्गं नयति पार्थिवम्॥" (उत्तर० ७९ स०)

क्षत्रियबलाद् ब्रह्मबल ज्याय इत्यत्र तदाह—

"ब्रह्मदण्डेन तच्छान्तमग्नेर्वेग इवाम्भसा"

"धिग् बलं क्षत्रियबलं ब्रह्मतेजोबलं बलम् । ( बाल० ५७ स० )
एकेन ब्रह्मदण्डेन सर्वास्त्राणि हतानि मे ॥"

यथा रामायणग्रन्थो महान् धर्मग्रन्थो महान् राजनीतिग्रन्थो महान् इतिहासग्रन्थो महाँश्च तत्तद्विषयप्रतिपादको ग्रन्थमात्रं न महान् काव्यग्रन्थोऽपि विद्यते। तत्र शब्दार्थयोर्ललितः सन्निवेशः, गुणानां माधुर्यप्रसादादीनां मधुरमधुरगुम्फनं, किञ्च अलङ्काराणां मर्मज्ञतया समुपस्थापनं जनैराप्यते। रसानन्दरेर तु काव्यरसास्वादनमेव न जायते तत्तु नवीय आत्मैव। सोऽपि कविसाध्यो रसस्तत्र सर्वत्रास्वाद्यमानो भवति। स्थाने स्थाने महतां भावानां चन्द्रिका स्वकीयं प्रभुत्वं वितन्वन्ती समवाप्यते। अत्र हि केचन श्लोकाः काव्यस्यास्य काव्यत्वं प्रदर्शयितुमुद्ध्रियन्ते—

"सा विह्वलाशोकलताप्रताना वनस्थली शोकलताप्रताना ।
जाता दशास्यप्रमदावनस्य कपेर्बलाद्धि प्रमदावनस्य ॥" (सु० १४, २०)

"ततः स मध्यंगतमंशुमन्तं ज्योत्स्नावितानं मुहुरुद्वमन्तम् ।
ददर्श धीमान् भुवि भानुमन्तं गोष्ठे वृषं मत्तमिव भ्रमन्तम् ॥" (सु० ५, १)

"लोकस्य पापानि विनाशयन्तं महोदधिं चापि समेधयन्तम् ।
भूतानि सर्वाणि विराजयन्तं ददर्श शीतांशुमथाभियान्तम् ॥" (सु० ५, २)

मानवो हि कामं भवतु कियान् अपि धीरो गम्भीरः कष्टसहिष्णुश्च परं विपदमनुच्छिन्ना परम्परा तमपि धैर्यात् समयति—

"न मद्विधो दुष्कृतकर्मकारी मन्ये द्वितीयोऽस्ति वसुन्धरायाम् ।
शोकानुशोको हि परम्पराया मामेति भिन्दन् हृदयं मनश्च ॥
पूर्वं मया नूनमभीप्सितानि पापानि कर्माण्यसकृत् कृतानि ।
तत्रायमद्यापतितो विपाको दुःखेन दुःखं यदहं विशामि ॥
राज्यप्रणाशः स्वजनैर्वियोगः पितुर्विनाशो जननीवियोगः ।
सर्वाणि मे लक्ष्मण शोकवेगमापूरयन्ति प्रविचिन्तितानि ॥
सर्वं तु दुःखं मम लक्ष्मणेदं शान्तं शरीरे वनमेत्य क्लेशम् ।
सीतावियोगात् पुनरप्युदीर्णं काष्ठैरिवाग्निः सहसोपदीप्तः ॥"
( अर० ६३ स० )

इत सीतामपि पश्यन्तु—

"अनन्यदेवत्वमियं क्षमा च भूमौ च शय्या नियमश्च धर्मे।
पतिव्रतात्वं विफलं ममेदं कृतं कृतघ्नेष्विव मानुषाणाम्॥"
(सु० २८ स०)

"मोघो हि धर्मश्चरितो ममायं तथैकपत्नीत्वमिदं निरर्थकम्।
या त्वां न पश्यामि कृशा विवर्णा हीना त्वया सङ्गमने निराशा॥"

सम्प्रति प्रकृति श्रियमपि तत्र पश्यन्ताम्—

"चक्रवाकयुता नित्यं चित्रप्रस्थवनान्तरा।
मातङ्गमृगयूथैश्च शोभते सलिलार्थिभि॥
वातविक्षिप्तविटपान् यथामत्तान् द्रुमानिमान्।
लता समनुवर्तन्ते मत्ता इव वरस्त्रिय॥" (किष्कि० १ स०)

"खर्जूरपुष्पाकृतिभि शिरोभि पूर्णतण्डुलै।
शोभन्ते किञ्चिदालम्बा शालय कनकप्रभा॥" (अ० १६ स०)

"स्यामिश्रित सर्जकदम्बपुष्पैर्नवं जलं पर्वतधातुताम्रम्।
मयूरकेकाभिरनुप्रयातं शैलापगा शीघ्रतरं वहन्ति॥" (कि० २८ स०)

"विद्युत्पताका सबलाकमाला शैलेन्द्रकूटाकृतिसन्निकाशा।
गर्जन्ति मेघा समुदीर्णनादा मत्ता गजेन्द्रा इव संयुगस्था॥"

"चञ्चच्चन्द्रकरस्पर्शहर्षोन्मीलिततारका।
अहो रागवती सन्ध्या जहाति स्वयमम्बरम्॥" (कि० ३० स०)

सवादा सूक्तयश्च काव्येऽस्मिन् प्रयोगे स्वकीयपाच्छदया विचित्रया सर्वेषां मनांसि चोरयन्ति नितराम्। आदिकविना तन्मद्विवेशोऽपि रमणीयतया विहित। वस्तुनोऽस्य ग्रन्थरत्नस्य महिम्नो वर्णनं न कदापि सम्भवम्। यस्य काव्यस्य प्रणेता वाल्मीकि, रामस्य च लोकपावनलीला यत्र गीतास्तस्य महत्त्वं केन नाम पूर्णतया शक्यते। सत्यमेवोक्तमिदम्—

"वाल्मीकिगिरिसम्भूता रामाम्भोनिधिसङ्गता।
श्रीमद्रामायणी गङ्गा पुनाति भुवनत्रयम्॥"

## ज्योतिःशास्त्रस्य लोकोपकारित्वं महत्त्वञ्च

वेदस्य निर्मलं चक्षुर्ज्योतिःशास्त्रमकल्मषम् ।
विनैतदखिलं श्रौतं स्मार्तं कर्म न सिद्ध्यति ॥

अस्ति वेदस्य षट्स्वङ्गेषु ज्योतिःशास्त्रं नाम अङ्गं नितान्तमहत्त्वमनुत्तमञ्च । यज्ञानां प्रतिपादनायैव वेदाः प्रवृत्ता अजायन्त । तेषां हि यज्ञानां विधानं चेद् समुचिते काले विधीयते तदा तत्फलं लभ्यते । ज्योतिःशास्त्रं यज्ञविधानस्य शुभतरं कालं निर्दिशति तस्माच्छास्त्रं तत् कालविधायकशास्त्रमित्येनेन च नाम्ना भुवि सर्वत्र प्रख्यातं वर्तते । शास्त्रस्यास्य कालविधायकत्वमभिलक्ष्याभिहितमपि—

"वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्वा विहिताश्च यज्ञाः ।
तस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेद स वेद यज्ञान् ॥"

मानवः स्वभावेनैव स्वकल्याणाभिनिवेशी प्राणी वर्तते । सोऽमङ्गलेषु द्वेष्टि मङ्गलेषु च स्निह्यति । स सदा सुखानि आकाङ्क्षति । कामयते चात्मानं समुन्नत-मैश्वर्यभाजनस्थानासीनञ्च द्रष्टुम् । सोऽभिलषति यत् तदीयं कार्यं शुभे समये मङ्गलवर्षिण्यां वेलायां प्रारब्धं स्याद् येन स मनोऽभिलषितं मङ्गलं प्राप्नुयात् । आपदस्तं न निपीडयेयुर्दुःस्वप्ना घटना, भयावहाः स्थितयो, मनोरथविध्वंसिनः प्रभूताः, अनिष्टकारिण्यो दारुणा घटिकाश्च न तं निपातयेयुरित्येतदर्थं स तद्विषये कुतूहलतया ज्ञानमधिगन्तुं वाञ्छति येन तदागमनात् प्रागेव सावधानो भवन् तन्निवारणाय श्रमः सम्पादयेत । सकलस्यापि भाविनोऽनेहसो ज्ञानमयीं करतलामलकवत् कर्तुमुत्कण्ठते । ज्योतिःशास्त्रं मानवस्यैतामुपरिनिर्दिष्टामाकाङ्क्षां सर्वथैव पूरयति । तच्छास्त्रं मानवं प्रति तदीयं भाविकालं सम्यग् ज्ञापयति । कस्मिन् काले का घटना घटेत; कस्मिन् काले कामां कामालाभदायमानस्य सम्मानलाभः; कस्मिन् काले नदीनां मात्स्योदयो भवेत्; कस्मिन् काले शत्रुरोगादिकं तं स्पर्शेत्; जगति कस्मिन् कस्मिन् काले का का ईतिर्भीतिश्च समागच्छेत्, कदा वर्षा, कदा शैत्यं, कदा मौसमं परिवर्तनं, कदा युद्धं, कदा युगान्तरकारिणी स्थितिः, कदा भयानकोऽनर्थः, कदा किं किं जायेतेत्यादिकं निखिलमपि शास्त्रमिदं समीचीनतया सर्वाङ्गीणतया बोधयति तस्माद् कारणाच्छास्त्रमेतद् यावद्दिन

करोति न तावदन्यत् किमपि शास्त्रम्। लोकपरमोपकारित्वादिदं शास्त्रं सर्वेषां मानवानां नितान्तप्रियशास्त्रमस्ति। जगत् यादृशीं प्रीतिमत्र निदधाति न तादृशीमन्यत्र अतः सर्वत्र सर्वदैव सर्वेषामपि प्राणिनां शास्त्रमिदं पूज्यं शास्त्रमस्ति। लोके शास्त्रमिदं स्वकीयशुभविधायकं मित्रमवगच्छति। दुःखानां निवारकत्वात् सुखानां विधायकत्वाच्च तस्य, सर्वेऽपि जगतीतलस्य मानवास्तस्मिन् आदरधियं प्रदर्शयन्ति। वस्तुतोऽनन्तहितकारित्वाच्छास्त्रमेतत् परमोपादेयं शास्त्रमस्ति। तन्महिम्नो वर्णनं तन्महत्त्वस्य प्रतिपादनं कठिनमेव।

ज्योतिःशास्त्रं पुरातनतमं शास्त्रमस्ति। शास्त्रस्यास्य बीजानि वेदेषु दृष्टानि भवन्ति। तत्र "एका च मे तिस्रश्च मे पञ्च च मे सप्त च मे"--इत्यादिमन्त्रेषु गणितसिद्धान्तः किञ्च "इयं वेदिः परो अन्तः पृथिव्या अयं यज्ञो भुवनस्य नाभिः" रित्यादिषु मन्त्रेषु रेखागणितस्य बीजं विलोक्यते तदेवं शास्त्रस्यास्योद्भवभूः श्रुतय एव सन्ति। विदुषां सर्वेषां सुविदितमेवैतद् यद् वेदचतुष्टयस्यापि प्रतिवेदं भिन्नं ज्योतिःशास्त्रमवाप्यते। ऋग्ज्यौतिषम्, यजुर्ज्यौतिषम्, अथर्वज्यौतिषं सामज्यौतिषञ्च। तत्र ऋग्ज्यौतिषं षट्त्रिंशच्छ्लोकैरुपनिबद्धं याजुषज्यौतिषमेकोनचत्वारिंशत्पद्यैरलङ्कृतम्, आथर्वणज्यौतिषञ्च द्विषष्ट्युत्तरशतमितपद्यमण्डितम्। साम्प्रतं त्रय एव ज्यौतिषग्रन्था समुपलभ्यन्ते। सामज्यौतिषं तु लुप्तप्रायम्। कश्चिल्लगधाचार्यो नाम मुनिरेतान् ग्रन्थान् ज्योतिःशास्त्रसम्बन्धिनोऽग्रन्थत्—इति श्रूयते। तत्र याजुषज्यौतिषस्य टीकां सोमाकरो नाम विद्वाश्चकार सुधाकरद्विवेदी च प्रामाणिकं भाष्यं लिलेख।

वेदाङ्गज्यौतिषस्य प्रवर्तका अष्टादश महर्षयो बभूवुः। अस्मिन् विषये श्लोक एव प्रसिद्धः—

> "सूर्यः पितामहो व्यासो वसिष्ठोऽत्रिः पराशरः।
> कश्यपो नारदो गर्गो मरीचिर्मनुरङ्गिरा॥
> लोमशः पौलिशश्चैव च्यवनो यवनो भृगुः।
> शौनकोऽष्टादशश्चैते ज्योतिःशास्त्रप्रवर्तकाः॥"

ज्यौतिषशास्त्रस्य साहित्यं बृहद् विशदम्। तत्र सूर्यपितामहादिकाना सिद्धान्तग्रन्था, गौरीकाल्जातकादयो दैवग्रन्था, पराशरजैमिनिकृतार्षग्रन्था, वराहमिहिरकृतबृहज्जातकादयः पौरुषग्रन्था वैदिकज्यौतिषसंहितादिकाश्च प्रचुरा ग्रन्था

विराजमानाः सन्ति। तस्मादेतच्छास्त्रस्य माहिम्नं महीयो विपुलञ्च। अस्त्येतच्छास्त्रं स्कन्धत्रयात्मकम्—

"सिद्धान्तसंहिताहोरारूपं स्कन्धत्रयात्मकम्।" इति।

ज्यौतिषशास्त्रस्यानेके प्रकाण्डपाण्डित्यवन्त आचार्या बभूवुः। तत्र वराहमिहिरः, आर्यभट्टः, ब्रह्मगुप्तः, लल्लाचार्यः, उत्पलाचार्यः, श्रीपतिः, भोजदेवः, भास्कराचार्यः, केदारः, गणेशदैवज्ञः, ज्ञानराजः, कमलाकरश्च सन्ति भुवनविदिता आचार्याः। सर्वैरप्येते आचार्याः ज्योतिःशास्त्रविषयकान् उत्तमोत्तमान् ग्रन्थान् प्रणिन्युः। ज्योतिर्विदामाधुनिकः संसारो यत्किंचिदेभ्यो विद्वत्तल्लजेभ्यः संलब्धवान् तेन स स्मृहणीयं परमगौरवं भजते। वराहमिहिरस्य बृहज्जातक-लघुजातक-बृहत्संहितादिग्रन्थाः, भास्कराचार्यस्य सिद्धान्तशिरोमणिप्रभृतिग्रन्थाः, गणेशदैवज्ञस्य ग्रहलाघवादिग्रन्थाः, कमलाकरस्य सिद्धान्ततत्त्वविवेकादिका ग्रन्थास्तु स्वप्रभया दिव्यया दैवज्ञानां जगन्ति प्रकाशयन्त्येव तदतिरिक्ता लघु-बृहत्पाराशरीजैमिनिसूत्रभृगुसंहिता-मीनराजजातकनाडीग्रन्थप्रभृतय आर्षग्रन्थाश्च ज्योतिःशास्त्रिणो हि प्रीणयन्ति नितराम्। ढुण्ढिराजस्य जातकाभरणम्, अनन्तस्य जातकपद्धतिः, नृहरेः जातकसारः, दिवाकरस्य पद्मजातकम्, बलभद्रस्य होरारत्नं, गोविन्दस्य होराकौस्तुभञ्च प्रायश्च ज्योतिर्विद्भिरनुशील्यन्ते। केरलमतप्रतिपादका ग्रन्थाः, रमलचिन्तामणि-रमलामृतप्रभृतयो रमलग्रन्थाः; ताजिकभूषण-पद्धति-ताजिकतन्त्रसार-ताजिकपद्धति-ताजिकनीलकण्ठीप्रभृतिग्रन्थाः किञ्च प्रश्नज्ञानसदृशाल्पग्रन्था हि बहवो ज्योतिःशास्त्रस्य माहित्ये प्रथिता सन्ति। शकुनशास्त्रमपि संहितास्कन्धभूतमेव। तत्र आग्रदेवाभजस्य जैनसूरस्य वृषनिञ्चयचर्या नाम कृतिः सुप्रसिद्धैव। सूर्यदासपुत्रेण स्वरसारनामकः स्वरशास्त्रस्य च ग्रन्थो विरचितः। ज्यौतिषे फलादेशे सामुद्रिकशास्त्रस्य महनीयता केन न ज्ञायते। एतस्मिन् विषये राजकृतं हस्तसञ्जीवनमतिविश्रुतम्।

गणितशास्त्रं ज्योतिर्ग्रन्थात् व्यतिरिक्तं न। तस्याप्यन्तर्भावस्तत्रास्ति। अङ्कगणितं बीजगणितञ्चेत्येतद् द्वयमपि ग्रहविज्ञानस्याङ्गत्वेन मतम्। आर्यभट्टः, ब्रह्मगुप्तः, भास्कराचार्यश्चैते त्रयो विपश्चिद्वरा ग्रहतन्त्रस्य रचयितारः सन्ति। गणितस्य दशमलवपद्धतिर्ग्रहतन्त्रस्याङ्गभूतैव विद्यते। तां दशमलवपद्धतिमस्मद्देशस्य विद्वांस एव प्रथममाविष्कृतवन्तः। गणितशास्त्रे गणिताध्याय आर्यभट्टीयस्य द्वयेतौ द्वावपि ग्रन्थौ महत्त्ववन्तौ स्तः। ब्रह्मगुप्तकृते ब्राह्मस्फुटसिद्धान्ते कुट्टका-

ध्यायश्च गौरवमतिशयमावहति। अङ्कगणितसम्बन्धी लीलावतीसंज्ञको ग्रन्थश्च परमोपयोगिषु ग्रन्थेषु गण्यते। भास्कराचार्यस्य सिद्धान्तशिरोमण्याख्यसन्दर्भे बीजगणितमतीव प्रकृष्टतां गाहते एवमेव अङ्कगणितवन्न भास्कराचार्यब्रह्मगुप्तयोः रवोत्कृष्टतायां सर्वत्र सुविदितम्। गणिततन्त्रस्य धन–ऋण–गुण–भागाकाराख्याः भत्वारोऽपि विषयः वर्ग–घन–वर्गमूलघनमूलाभिधाश्च विधिविशेषा भास्कराचार्यब्रह्मगुप्तकृतेषु ग्रन्थेषु सविस्तरं प्रतिपादिता सन्ति। शून्यविषये त्रैराशिकविषमे विषयस्तत्राकलिता सन्ति। बीजगणितमपि परां कोटिमारोहते। उभावप्येताचार्यौ सरलसमीकरणसिद्धान्तं सविशदं विवृण्वानौ दृश्येते। यज्ज्यामितिशास्त्रमत्र देशे यज्ञप्रक्रियासु बहुतरं साहाय्यं प्रददौ तदपि तत्र वैशद्येन निरूपितम्। अस्मद्विद्वत्प्रणीतेष्वेषु ज्योतिःशास्त्रविषयकेषु सोऽपि सिद्धान्तं नि·पन्नतां नीतो य पाइथोगोरससिद्धान्त इत्येतेन नाम्नाधुना प्रसिद्ध। त्रिकोणमितितन्त्रे च भारतीया विद्वांसोऽधिकारं निहितवन्त। इत्थं हि ज्योतिःशास्त्रसंसारे स्वकीयाभिरताभिरताभिर्निशिष्टताभिरन्वितत्वात् परमोपादेयं परमहितकारकञ्च वर्तते।

अङ्कविद्याया इह देशे महत्युन्नति पुरासीत्। यूरोपीयः कश्चित् शिक्षकप्रवरो लिखति स्वपुस्तके यद् भारतीयानां त्रिकोणमितिशास्त्रमतिप्राचीनमस्ति। तदीये सूर्यसिद्धान्तग्रन्थे त्रिकोणमितिविषयिका· या क्रिया प्रदत्ता सन्ति ता यूनानीयक्रियाभ्यो गरीयस्य। स एव तत्र लिखति यद् यूरोपीया विद्वांसो हि नास्यां विधायां षोडशाच्छतकात् प्राक् अभिज्ञतामवापु। स एव विद्वान् अध्यापको ब्रवीति यद्भारतीया एव रेखागणितशास्त्रस्याद्या विद्वांसः सन्ति। डीओफेण्टसाख्यस्य यूनानीयस्य पण्डितस्य जातस्य २२६० वर्षाणि गतानि। तद्रचितानि पुस्तकानि सन्ति साक्षीणि यत् स पण्डितो भारतीयाचार्यप्रणीतग्रन्थानधीत्यैव गणितविषयिका विद्यां स्वदेशे समुत्थापयामास। इतिहासेषु सन्त्येवंविधा उल्लेखा बहवो येभ्यो यूनानारवदेशनिवासिनां विद्वद्वराणां गणितज्यौतिषविद्याध्ययननिमित्तेन भारतप्रत्यागमनं विदितं जायते। श्रूयते यत् अरबदेशीय· खलिफआलमानसरहारूनअलरसीदनामा सम्राट्, जातस्य यस्य १२०० वर्षाण्यतीतानि, महम्मदबिनमूसाभिधेन विदुषा बीजगणितं गणितञ्च अरबीभाषायामनूदितं कारयामास।

"हिस्ट्रीऑफसंस्कृतलिट्रेचर" इत्येतन्नामके ग्रन्थे प्रो० मैक्समूलरः कथयति यत् अङ्कशास्त्रज्ञानार्जनं यूरोपीया भारतीयेभ्य कृतवन्तस्तस्मात् ते तेषां सन्त्य·

धनगाः। अन्यैश्च बहुभिर्नैनियरविल्लियमप्रभृतिभिर्विद्वद्भिर्माननीयानां पण्डितानां गणितशास्त्रपारंगततां प्रशंसद्भिरिदं स्पष्टमेवाभिहितं यत् प्राचीना देशा भारतीयेभ्यो गणितविद्यामगृह्णन्। याश्च सामुद्रिक-स्वरोदय-शीघ्रस्वरविज्ञानविषयिकाश्च विद्याः भारतस्यातिप्राचीन एव काले मासु विवेद यूरोपीय विद्वांसोऽद्य तद्विद्यासम्बन्धिनो भारतीयविद्वत्प्रणीतान् ग्रन्थान् विलोक्य विस्मयं गच्छन्ति। किञ्च तेऽपि एतादृशीषु विद्यासु सम्प्रति रुचिं दर्शयन्तो दृश्यन्ते। अस्मद्देशस्य हि उक्तविषयकान् ग्रन्थानर्घान्य प्रतीच्याः प्रत्यः स्वस्वदेशभाषासु च तद्विषये पुस्तकानि प्रकाशयन्तोऽधुना प्राप्यन्ते। तानि पुस्तकानि प्रेक्ष्य तेषां विदुषां तच्छास्त्रज्ञानार्जनसम्बन्धिन्याः प्रगाढाया अभिरुचेः परिचयः प्राप्तो भवति।

एवं भारतभूमेर्योर्गणितज्यौतिषफलितज्यौतिषयोराविष्कारस्य महनीयं गुरुत्वं कार्यञ्चकार तयोरुत्थानार्थमपि तं स्तुत्यं प्रयत्नमपि विदधौ येन न केवलं ते द्वे विद्ये अपि तु तदीयानि सर्वाण्यपि अङ्गोपाङ्गानि च सर्वतः परां कोटिमारुरुहुः। आधुनिका वैज्ञानिकास्तु तेषां सर्वेषां विषयाणामवगमनेऽपि न सामर्थ्यं निदधाना दृश्यन्ते। यद्यपि तैर्यन्त्राणां माहात्म्यमधिगम्य गणितज्यौतिषे मनागुन्नतिः कृतास्ति परं फलितसम्बन्धिन्यां सूक्ष्मतायां तेषां गतिस्त्वद्यत्वेऽपि न जातास्ति। प्राचीने काले ज्योतिःशास्त्रं न पूर्णोन्नतमासीदिति केचन एकदेशदर्शिनो मनीषिणो वदन्ति। भारतीयज्ञानानवगाहनहेतोरेव ते तद् ब्रुवन्ति। यदा हि ग्रह-नक्षत्र-राशिचक्र-भचक्र-[illegible]-विषुवरेखा-गोलकार्द्धोदीचीनादिदिशाभेद-क्रान्ति-केन्द्रस्थाननिरूपण-सुमेरु-कुमेरुच्छायापर्योपग्रह-कक्ष-धूमकेतूल्कापिण्ड-निर्घात-मध्याकर्षणशक्ति-सूर्य-महासूर्यादिभेदपृथिव्याद्याकृतिग्रहणनिर्णयप्रभृतिनिःकल्पगम्भीरविषयास्तेषां सिद्धान्तश्च प्राचां ग्रन्थेषु विलोकिता भवन्ति तदा केन प्रकारेणेदं वक्तुं युक्तं यत् प्राचीने काले भारतीया अस्मिन् ज्यौतिषशास्त्रे न पूर्णामुन्नतिं कृतवन्तः।

वेबरमहाभागो ज्योतिःशास्त्रस्य प्राचीनतामधिकृत्य ब्रूते—"शास्त्रमिदं भारतवर्षे, यदा ईसामसीहस्याजननस्य २७८० वर्षाणि व्यतीतान्यभूवंस्तदानीमपि, प्रचलितमवास्त"।

काउन्स्टजेर्णस्र्जार्नमहोदयः स्वकीये 'थिओगोनीऑफ दी हिन्दूज़'इत्येवमभिधेये ग्रन्थे लिखति यत् कलियुगस्यारम्भादेव भारतवर्षे ज्योतिःशास्त्रस्यासीद् प्रचारः।

मारशलमहोदय 'इम्पिरियलगजेटियर' मध्ये "अनेकविषयेषु भारतीयाना ज्योतिशास्त्रं यवन-दर्शनात् ज्योतिशास्त्रमुन्नतमकरोत" इत्येतदुल्लिखति।

श्रीकोलब्रुको नाम विद्वान् 'एल्फिन्स्टोन्स हिस्ट्री ऑफ इण्डियायाम्' "अयनगतिमुद्दिश्य पृथिव्या स्वपरिधौ दैनिकावर्तनमधिकृत्य चन्द्रगतिं भारतीयैः पण्डितैर्यादृशीयम्नन्दवर्णनमाकृतम् तादृशमत्यद्भुतम्"इति वदति। एवमेव प्रख्यातो विलसनो थामास अभणति—"भारतीयैर्विद्वद्भिर्ज्योतिर्विद्यायामलौकिका उन्नतिः कृता। द्वादशराशि-निर्धारणम्, ग्रहाणां गतिः, पृथिव्याः शून्ये अवर्तनम्, अष्टे क्रमगणक्रिया, चन्द्रगतिः, पृथिवीचन्द्रयोर्दूरत्वनिर्णयः, चन्द्र-सूर्ययोः कालनिर्णयः अन्ये चैवंविधा विषया आर्यज्योतिर्विदां पारम्परितां प्रमाणयन्ति"।

विष्णुपुराणे प्रोक्तम्—

'स्थालीस्थमग्निसंयोगादुद्रेकि सलिलं यथा।
तथेन्दुवृद्धौ सलिलमम्भोधौ मुनिसत्तमः॥
न न्यूना नातिरिक्ताश्च वर्धन्त्यापो ह्रसन्ति च।
उदयास्तमनेष्विन्दोः पक्षयोः शुक्लकृष्णयोः॥
दशोत्तराणि पञ्चैव अङ्गुलानां शतानि वै।
अपां वृद्धिक्षयौ दृष्टौ सामुद्रीणां महामुने॥"

आर्यग्रन्थेष्वेवंविधानामुल्लेखानामवलोकने सिध्यति स्पष्टमेव यद्भारतीया विपश्चितो ग्रहाकर्षणे समुद्रजलवृद्धेश्च हेतुं सम्यग् विदन्ति स्म। महर्षय एव पुरा वर-निर्णयक्रमविनिर्णयं समयं मुहूर्तरूपा निबध्नन्ति स्म। संवत्सरारम्भस्तो हि तस्मिन् दिवसे तिथि नक्षत्र समानं स्यादित्येव नियमः प्राचीना भारतीया आचार्याः सूर्यपरिभ्रमणकालेऽस्मिन्विदधुरम्य, यं हि यूरोपाया अपि उपरिनिर्दिष्ट नियमविस्तारं मन्यन्ते, अनुपश्चिर प्रोक्त निरूपयामासु।

"सूर्यसिद्धान्ते भेदेऽप्युक्तम्—

सर्वतः पर्वतारामग्रामचैत्यचयैश्चितः।
कदम्बकुसुमग्रन्थिः केसरप्रसरैरिव॥

नक्षत्रकल्पेऽभिहितम्—

"करस्थफलवद् विश्वं दर्शितं परितो सदा।"

पृथिवी नारङ्गवद् गोलाकारेति वचो निशम्य अर्वाचीना अधीना कस्य न धर्मतो मानसं 'पृथिव्या गोलाकारवस्तु भ्रमणस्य विद्वांसश्चिर प्रागेव प्रतिपादितवन्त' इति विचार समुत्पद्येत। वर्तमाने हि युगानां पुरो भुवः स्वरूपवर्णनप्रसङ्गेन गोलक प्रतिष्ठाप्यते यः यदा बालस्य सर्गेऽपि भूगोलस्य सदृक्ष्य मित्यादि अध्यापयन्तः प्राचीना विद्वांसो विलोक्यन्ते तदा को न विचारवान् विस्मयेत प्राचां पण्डितानामेतत्त्वशिक्षा-विषयविज्ञानं समस्तात्।

वर्तमानेऽस्मिन् प्रचलितायाः शिक्षापद्धत्याः प्रधानोऽयं दोषो यद् सा विद्यार्थिनं शिक्षायाः पारदर्शिनं न कुरुते। सा यत्रापि भ्रमं विदधाति तत्र न तमपि पूर्णं भ्रमं सम्प्रदर्शयति। न तत्र उद्दीप्यमाना सफलता परिदृश्यते। यथा च स स्वभ्रमनिवारणाय न प्राच्यानां दर्शनानां न च अर्वाचीनानां दर्शनानामेवान्यतमस्याध्ययनमनुतिष्ठति नोभयोरपि गुणेषु विद्यमानं तारतम्यमेव ज्ञातुं प्रयतते, न च सत्यमिति यत्र न भ्राम्यति। एतस्माच्च कारणात् तदीयं ज्ञानं न शुद्धं न पूर्णं जायते। तथानुसन्धानविहीनज्ञानार्जनेन न कोऽपि लाभो भवति। नात्र संशयः।

आर्यभट्टो लिखति—'चला पृथ्वी स्थिरा भाति' अन्येषु च ग्रन्थेष्वेवमेवे-क्तो लभ्यते—

भपञ्जरः स्थिरो भूरेवावृत्यावृत्य प्रातिदैवसिकौ।
उदयास्तमयौ सम्पादयति नक्षत्रग्रहाणाम्॥

एतत् पद्यं प्रेक्ष्य को न विस्मयविधुरीत यत् प्राञ्चो विपश्चितः पृथिव्या गतिमधिकृत्य पूर्णं ज्ञानं निदधतिस्म। यदा च 'भूगोलो व्योम्नि तिष्ठति' इत्यादि अथ च—

नान्याधारं स्वशक्त्या वियति च नियतं तिष्ठतीहास्य पृष्ठे
निष्ठं विश्वं च शश्वत् सदनुजमनुजादित्यदैत्यं समन्तात्।

इत्यादि भास्कराचार्यस्योक्तिः पठ्यते तदा कस्माच्च आधारं विना पृथिव्याः स्थिते रर्वाचीनमभिज्ञानं विदितं स्यात् को न तद्विषये नैव निश्चयत्वे अवदर्न? यदा च मत्स्यपुराणे—

पर्वकाले तु सम्प्राप्ते चन्द्रार्कौ छादयिष्यसि।
भूमिच्छायागतश्चन्द्रं चन्द्रगोऽर्कं कदाचन॥

इत्येतत् पद्यं धीदयते, किन्तु यदा ज्योतिर्विदां ग्रन्थेषु—

छादको भास्करस्येन्दुरधःस्थो घनवद् भवेत्।
भूच्छाया प्रमुखश्चन्द्रो विशत्यर्थो भवेदसौ ॥

इत्येतद्विधानि वाक्यानि दृश्यन्ते तदा को न मतिमान् जनः प्राक्तनानां भारतीयानां ग्रहण-विज्ञानाभिज्ञतां विज्ञतो जानीयात्? को न तेषां तद्विषयकज्ञानस्य पारगामितायां विश्वासं निदधीत?

तदेवं ज्योतिःशास्त्रस्योन्नतिः पुरा कीदृशी कियती चासीदित्येतद् यावदेवान्विष्यते तावदेव धी दाढर्यमुपैति। सा तस्मिन् सम्बन्धे निश्चयमिमं प्रयाति यद् भारत प्राचीने गम्भीरे हि विज्ञानशास्त्रे परामेवोन्नतिमदीदशत्।

यूरोपाख्यमहाद्वीपस्य निवासिनो विद्वद्वेली-प्लेफेयर-केशेनीप्रभृतयो मुक्तकण्ठतयोररीकुर्वन्तीदं यत् पञ्चसहस्रवर्षप्यापिनि कालात् प्राग्वर्तिनि कालेऽपि भारतीया ज्योतिःशास्त्रे विस्मयावहं कौशलमदर्शयन्। तेषां तत्कालप्रणीता ग्रन्था इदानीमपि प्राप्यन्ते ते तेषां ज्योतिर्विदत्वं हि उच्चैः प्रकटीकुर्वन्ति। तस्मात् भारतमेव ज्योतिःशास्त्रमादावाविश्चकारेति निश्चप्रचतयाभिधातुं शक्यते।

वर्तमानसमयस्य सुविदितो ज्योतिःशास्त्राध्यापकः कोलब्रुकः सप्रमाणं लिखति यत् अतितरां प्राचीने काले ज्योतिषगणनाया प्रधानमहायिकां पृथिव्या अयनांशगतिं किंवा क्रान्तिपातस्य वक्रगतिं भारतवर्षीया पण्डितसत्तमा एव प्रादुर्भावयाम्बभूवुः।

प्राचीना आर्यजातिरेव शास्त्रस्यास्य आद्यगुरुरिति एकदेशदर्शिनो यवना अपि स्वीकुर्वन्ति। अरबीय"तारिकलहुकम", "फुलाशतुलहिसाब" इत्यादिग्रन्थेषु तेषामुक्तविचारसम्बन्धीनि प्रमाणानि च लभ्यन्ते। ते अरबीया विद्वांसः स्वग्रन्थेषु आर्यभट्टम् 'आज्दभर'इत्येतेन किन्तु भास्कराचार्यं 'बागर' इत्येतेन नाम्नोल्लिखन्तोऽधिगच्छन्ते। पुनर्विचारैः सिद्ध्यतीदं यत् एतादृशानां गम्भीराणां वैज्ञानिकानां तत्त्वानां वैज्ञानिकानां शास्त्राणां चादिगुरुर्भारतमेवासीत्। भारतस्येमां श्रेष्ठतां सर्वेऽपि ईसामसीहमतावलम्बिनः किन्तु 'मुसल्मान' इत्येतेन नाम्ना ख्याता सर्वेऽपि यवनाः स्वीकुर्वन्ति। एतस्मात् कारणात् भारतस्यादिगुरुत्वं ज्योतिःशास्त्रेऽपि सर्वविश्वसम्मतमस्ति।

गणितज्यौतिषमन्तरेण फलितज्यौतिषस्याभ्युदयं न सम्भवम्। अतः भारतस्य गणितशास्त्रोन्नतेः कारणं फलितशास्त्रमेव प्रतीयते। अयवनानां यूरोपीय-

संवादानां ह्यध्ययनेन बुद्धिमन्तोऽनायासेन ज्ञातुं शक्नुवन्ति यस्मात्प्रतं यूरोपनिवासिनोऽन्तरिक्षविद्यात –मिटिऑरॉलॉजीन–स्वकीयां दृष्टिमाकृष्य फलितज्यौतिषस्यापि कियतानुरागेण प्रगता सन्ति। अधुनातस्य यूरोपस्यैषा फलितज्यौतिषशास्त्रगृह्णनैवास्मदीयमिदं फलित-गणितज्यौतिषविषयकं सिद्धान्तं पूर्णरूपेण दृढीकरोति। वस्तुत पुरातनं भारतं ज्योतिर्विद्यायां यामुन्नतिमधिजगाम तामुन्नतिं प्रतीच्या देशा सम्प्रत्यपि न गता सन्ति तदर्थं तु शतं वर्षाणि अपेक्ष्यन्ते। अन्या दिशायानद्यपर्यन्तं याप्युन्नतिस्तैर्दर्शितास्ति ता ते भारतीयज्योतिर्विज्ञानावलम्बनेनैव दर्शयितुं क्षमा अभूवन्।

महाकर्षणशक्तेराविष्कारं न्यूटनोऽकरोदिति यत् ते ब्रुवन्ति तदपि न सत्यम्। भारतमेव प्रथमं तामाविश्चकार। श्रीभास्कराचार्यः प्राह तद्विषये—

"आकृष्टशक्तिश्च मही तया यत् स्वस्थो गुरु स्वाभिमुखं स्वशक्त्या।

आकृष्यते तद् पततीति भाति समे समन्तात् क्व पतन्त्वियं खे॥"

आर्यभट्टश्च ब्रूते—

"आकृष्टशक्तिश्च मही यत् तया प्रक्षिप्यते तत् तया धार्यते" एवंस्थिते कथमेतत्स्वीकर्तुं शक्यं स्याद् यद् न्यूटनस्तदाविष्कर्तास्ति। अस्तु। किमधिकेन पल्लवितेन। ज्यौतिषशास्त्रस्योद्भवभूर्भारतमेवास्ति। भारतमेवाद्यो गुरुर्यो हि सकलमपि विश्वंप्रति ज्योतिर्विद्यामपीपठत्। ज्योतिर्विद्या लोकस्य परमोपकारिणी विद्यास्ति सा परमोपादेया महत्त्वशालिनी चेत्यत्र न स्वल्पोऽपि सन्देहः।



## शब्दानुशासनम्

आदिमकालादद्यतनसमयं यावद् भारते ये केऽपि विद्वांसः सञ्जाता. सन्ति वा तेषां सर्वेषामपि मतमिदं यत् संसारे यावदपि ज्ञानं प्रावर्तत तावतः सर्वस्यापि आदिस्रोतोऽस्ति श्रुति । अत एव स्वायंभुवो मनुः 'सर्वज्ञानमयो हि स' इत्यचकथत् । एतेन व्याकरणशास्त्रस्याप्याऽऽदिमूलं वेद इति निष्पन्नम् । वैदिक-मन्त्रेषूपलभ्यमानास्तत्तत्पदविषयिण्यो व्युत्पत्तयोऽप्युपर्यभिहितमभिधानं परिपु-ष्णन्ति—

१. यज्ञेन यज्ञमयजन्त देवा । ऋग् १।१६४।५०, यजयाच'''इति नङ् ।
२. ये महासि सहसा सहन्ते „ ६।६६।९ सहघातो असुन् उणादौ ।
३. धान्यमसि धिनुहि । यजु. १।२०। धिनोतेर्धान्यम्, महाभा० ।
४. केतपू. केतं न पुनातु । यजु ११।७। विवप् च ।
५. तीर्थैस्तरन्ति । अथर्व १८।४।७। पातृतुदिव'' इति थक्० उ० ।

व्याकरणशास्त्रस्य प्रमाणभूत आचार्य पतञ्जलिर्व्याकरणाध्ययनप्रयोजनानि वर्णयन् 'चत्वारि शृङ्गा', 'चत्वारि वाक्', 'उत त्व', 'सक्तुमिव', 'सुदेवोऽसि'— इत्येतन्मन्त्रपञ्चकमुद्धरति स्म । व्याख्याञ्च तदीया व्याकरणशास्त्रपरकाञ्चनार । पतञ्जलेरपि प्राचीनतरो यास्कोऽपि 'चत्वारि वाक्' इत्येतस्य मन्त्रस्य व्याख्या व्याकरणशास्त्रपरकामेव कुर्वाणोऽवाप्यते । व्याकरणमित्येतत्पद यस्माद्धातोर्नि-ष्पद्यते तस्यापि मूलार्थो यजुषि 'दृष्ट्वा रूपे व्याकरोत् सत्यानृते प्रजापतिः' इत्ये-तस्मिन् वाक्ये प्रयुक्त प्राप्यते ।

तदेव हि व्याकरणस्य वेदप्रादुर्भूतता सिद्धयति सम्यक् । व्याकरणशास्त्रस्यो-त्पत्तिमधिकृत्य तु न निश्चयतया किमपि कथनं सम्भवम् । इदन्तु वक्तु शक्यं यदुपलब्धवैदिकपदपाठेभ्य प्राक् व्याकरण शास्त्रे पूर्णता गतं बभूव । प्रकृतिप्रत्ययधातूपसर्गसमासवाक्यपदविभागश्च कृत्स्नतया निर्धारितो जातो यदा तस्यानेहसो गतस्यानेकसहस्राब्दी व्यतीता । वाल्मीकिरामायणस्य रचनाकाले व्याकरणशास्त्रस्याध्ययनमध्यापनञ्च सुव्यवस्थिततया प्रचलितमासीदित्येतद्धि—

नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम्।
बहु व्याहरतानेन न किञ्चिदपशब्दितम्॥

इत्यादिश्लोकेभ्यो विदितं जायते। भारतयुद्धकालवर्तिनि यास्क-निरुक्ते बहूनां व्याकरणाचार्याणामुल्लेखो दृश्यते। आचार्यः शाकटायनस्तु नैजं व्याकरणं यास्कादपि प्राक् लिलेख। पतञ्जलिमुनिर्लिखति—

"पुरा कल्प एतदासीत् संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माधीयते"।

एतेनापि व्याकरणं प्रति लोकस्य प्रवृत्तिः चिरादासीदिति ज्ञायते।

यदा हि कापि भाषा व्यवहारगतिमिता भवति तदा तस्या भाषाया ज्ञानं व्याकरणमन्तरेण न प्रतिपत्तुं शक्यं भवति। व्याकरणमेव भाषायाः स्वरूपसंघटनं सर्वात्मना कुरुते। तस्माद् व्याकरणमेव भाषा-ज्ञान-लाभाय सर्वेषामपि शास्त्राणां शब्दशास्त्राणां मध्ये मूर्धन्यं स्थानमध्यास्ते। व्याकरणस्य नितान्तमेवोपादेयतां श्रेष्ठताञ्च तत्र तत्रावलोक्यैव तन्महिम्नि बुधैर्लिखितमिदम्—

यद्यपि बहु नाधीषे तथापि पठ पुत्र व्याकरणम्।
स्वजनः श्वजनो माऽभूत्सकलं शकलं सकृच्छकृत्॥
शब्दशास्त्रमनधीत्य यः पुमान् वक्तुमिच्छति वचः सभान्तरे।
बन्धुमिच्छति वने मदोत्कटं हस्तिनं कमलनालतन्तुना॥

व्याकरणानि बहुभिर्वैयाकरणैर्महर्षिभिः प्रणीतानि। तेषु व्याकरणकर्तृषु विद्वत्तमेषु—इन्द्र, चन्द्र, काशकृत्स्न, आपिशलिः शाकटायन, पाणिनिः, अमर, जैनेन्द्रः इत्येतेऽष्टौ सन्ति सुप्रथिताः। न केवलमेतेषामष्टानामेव व्याकरणकर्तॄणां व्याकरणान्यपि तु अन्येषामपि आचार्याणां व्याकरणानि श्रूयन्ते यथा— कौमारं, सारस्वतं शाकलञ्च व्याकरणम्। व्याकरणकारान् अष्ट च व्याकरणान्यधिकृत्यैतच्छ्लोकद्वयं प्रथितमस्ति—

इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः॥
ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतं चापिशलं शाकलं पाणिनीयकम्॥

साम्प्रतं सर्वत्र प्राधान्येन पाणिनीयं व्याकरणमेव प्रचलितं वर्तते। इदं हि पाणिनीयं व्याकरणं नितरामेव सुसमृद्धं सुसम्बद्धं सुललितं सर्वाङ्गीणं व्यापकञ्च विद्यते। श्रीमत्पतञ्जलिप्रभृतिमूर्तीनां विचारविदग्धानां तु मतमिदम्—

पाणिनितः प्राचीनमेवंविधं सर्वतोमुखं व्याकरणं नासीदेव। इन्द्रचन्द्रादयस्तु आदिशाब्दिका एव बभूवुर्न च व्याकरणकर्तारः। शाब्दिकत्वं तु शब्दशास्त्रपारङ्गतत्वम्, शब्दशास्त्रप्रचारकत्वमित्यादिभिरनेकैः प्रकारैर्व्यवहर्तुं शक्यमस्ति। शब्दशास्त्रपदेन च न केवलं व्याकरणमपि तु कोश-मीमांसादिकमपि गृह्यते। शब्दपदेन च पदं वाक्यञ्चोभयमपि सङ्ग्रहीतुं शक्यमतो वाक्यार्थनिर्णायिका मीमांसापि शब्दशास्त्रम्। ये चैतेऽष्टशाब्दिका कीर्तितास्तेषु विभिन्नप्रकारकमेव शाब्दिकत्वं प्रमाणान्तरैः सिद्ध्यति। ते हि शब्दकोशरूपव्याकरणनिर्मातार एव सिद्ध्यन्ति। इदं हि स्वीयं मतं प्रकाशयन्त श्रीमन्तः सत्यव्रतसामश्रमिमहाशया मन्यन्ते यत् पाणिने. पूर्वं कस्यापि व्याकरणस्य सत्ता नानुमातुं शक्या भवति। दृढतरप्रमाण–दर्शनाभावात्। अत पाणिनिरेव प्रथमो व्याकरणकर्त्ता स्वीकार्य।

पाणिनिरेव प्रथमो व्याकरणकर्त्तेत्यत्र न सर्वेऽपि विद्वद्वरा श्रद्दधते। तेषां कथनमिदं यद्यपीदानीं पाणिनीयव्याकरणात् प्राक्तनं किमपि व्याकरणं सर्वाङ्गपूर्णं न प्राप्यत इति सत्यं किन्तु पाणिने पूर्वं किमपि व्याकरण नासीदेवेति नाभ्युपगन्तुं शक्यम्। सन्ति तत्र कानिचन साक्षीणि तत्त्वानि, तैः सिद्धं भवति यत् पाणिनिमहर्षेः प्रागपि व्याकरणस्य सत्तासीदेव। तथाहि पाणिनिरेव 'आङि चाप' इति तृतीयाविभक्तेरेकवचनमाङ्शब्देनाह, न च तृतीयैकवचनं तेन 'आङ्' इति पठितं, किन्तु 'टा' इति। तत्र 'आङिति टासंज्ञा' प्राचाम् इत्येव व्याख्यातारो ब्रुवते। तेनेदमेव सिद्ध्यति यत् प्राचीनेषु व्याकरणेषु तृतीयैकवचनं 'आङ्' इत्येव श्रुतमासीत्, तत् स्वपरिभाषायां ङित्वप्रयुक्तानि कर्माणि परिहर्तुं पाणिनिना 'टा' रूपतां प्रापितम्, परं प्राक्तनव्याकरणसंस्कारवशात् तस्यापि स्मरणरक्षणार्थञ्च सूत्रम् 'आङ्' अपि निरदेशि तेन। तथैव 'औङ आप' इत्यपि। न हि प्रथमा-द्वितीययोर्द्विवचने 'औङ्' प्रत्यय पाणिनिना स्वव्याकरणेऽभ्युपगत, अपि तु 'औ', 'औट्' इति। प्राक्तनव्याकरणसंस्कारवशात्तु सूत्रे 'औङ' इत्यप्युच्चारितम्। अन्यच्च–'कर्मणि द्वितीया' 'कर्तृकरणयोस्तृतीया' इत्यादिषु द्वितीयातृतीयादिनाम्ना विभक्तय पाणिनिना विहिता, न तु द्वितीयातृतीयादिसंज्ञा स्वशास्त्रे कृता,, तत्रापि प्राक्तनव्याकरणप्रसिद्धिभिरेवात्र व्यवहार इति व्याचक्षते व्याख्यातार'। अन्यच्च 'तितुत्रतथसिसुसरकसेषुच' इति दशसु कृत्प्रत्ययेषु इण्निषेध' पाणिनिना पठित। न चैतेषु यद्व प्रत्यया पाणिनिशास्त्रे कृत्प्रत्ययेषु पठ्यन्ते–तस्माद् व्याकरणान्तरस्था अप्यत्रानूदिता इत्येव वक्तव्यं स्यात्। किञ्च स्तम्भु–स्तुम्भुप्रभृ-

शब्दानुशासनस्य ( व्याकरणस्य ) यानि प्रयोजनानि पतञ्जलिर्महाभाष्ये निजगाद तत्र चेद् मनागपि दृक्पातः क्रियेत तदा व्याकरणस्य महनीयता तदीयोपादेयता तन्महत्ता च सम्यगवबोद्धुं शक्या भवति। अपिर्यतो यद् वेदानां रक्षायै व्याकरणाध्ययनमपेक्ष्यते। यो जनो लोपागमवर्ण-विकारज्ञो भवति स एव वेदान् साधु रक्षितुमर्हति। तथाहि—वेदे 'जहार' इत्येतस्य क्रियापदस्य स्थाने 'जभार' इत्येतत् क्रियापदं प्रयुज्यते। व्याकरणानभिज्ञस्य दृष्टया 'जभार' इत्येतत्पदं न शुद्धम् स 'जहार' इत्येतदेव शुद्धं मत्वा 'जभार' इत्येतत्पदमनुच्चार्य 'जहार' इति प्रयोक्तुमुपक्रान्तो भविष्यति। फलश्चैतदीयमिदं स्याद् वेदोऽनेकपरिवर्तितपदवान्। अयं हि महाननर्थो व्याकरणज्ञानशून्यतया निपातितो भवेत्। तस्माद् व्याकरणाध्ययनमतितरामपेक्ष्यते।

व्याकरणस्याध्ययनेन विभक्ति-विपरिणामस्य च बोधो जायते तस्माद् व्याकरणमवश्यमध्ययनीयमस्ति। न सर्वलिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्राः सन्ति निगदिताः। ते चावश्यं यज्ञगतेन यथायथं विपरिणमयितव्या भवन्ति। नावैयाकरणस्तान् यथायथं विपरिणमयितुं शक्नोति। तथाहि 'अग्नये त्वा जुष्टं निर्वपामि' इत्येतदस्ति वेदवाक्यम्। इदं हि वाक्यमग्निदेवताकं वर्तते। निर्वापकालेऽग्निदेवतामुद्दिश्य मन्त्रोऽयं पठितो भवति परं यदा सूर्यदेवतां लक्ष्यीकृत्य निर्वाप कृतो भवति तदा 'सूर्याय त्वा जुष्टं निर्वपामि' इत्येतेन विपरिणामेन पठनीयो भवति मन्त्र एषः। इमं हि विपरिणामं वैयाकरण एव सम्यग् यथायथं कर्तुं पारयति।

ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च—इत्येतस्मादपि हेतोर्व्याकरणस्याध्ययनं परमापेक्षितं भवति। वेदस्य षडङ्गत्वात् षट्स्वङ्गेषु च व्याकरणस्य प्रधानत्वात्।

सुलभतया यथार्थज्ञानं व्याकरणं विना न भवितुमर्हति अतोऽपि व्याकरणस्य पठनमपेक्ष्यते। इदन्तु विदितमेव वर्तते यद् जिज्ञासुनावश्यमेव शब्दस्य कार्य्यं ज्ञानम्। शब्दस्य ज्ञानं व्याकरणं विहाय न केनाप्यन्येन सुलभेनोपायेन शक्यम्।

सन्देहनिवृत्तिनिमित्तेनापि व्याकरणमध्येयमस्ति। याज्ञिकाः पठन्ति— "स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेतेति तस्यां सन्देहोऽयम्—स्थूला चासौ पृषती च स्थूलपृषतीतिकथनमभिप्रेतं किंवा स्थूलानि पृषन्ति यस्याः सा स्थूल-

प्रसर्गनिष्पन्नमिष्टम्। अवैयाकरणस्तु न स्वरतोऽध्यवस्यति। यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिः। अथान्तोदात्तत्वं ततस्तत्पुरुष इति।

एतेन विवेचनेन व्याकरणस्योपादेयत्वं तन्महत्त्वञ्च समुपस्थापयन् आचार्यपतञ्जलिस्तस्यान्यानि च कतिपयानि महत्त्वानि प्रस्तौति। स आह यद् व्याकरणं हि यो नरो न जानाति स शुद्धमपि वक्तुं न प्रभवति। शुद्धोच्चारणलाभाय व्याकरणस्य पठनं कर्त्तव्यम्। अशुद्धोच्चारणकर्त्ता भवति शिष्टसमाजे निन्दितः। तस्माद् विदुषा सततं हि उच्चारणस्य शुद्धता समुपासनीया।

अध्ययनं तदैव लाभप्रदं भवति यदर्थविचारणपूर्वकं क्रियते। अर्थविचारणया कृते व्याकरणस्य ज्ञानमपेक्षितं जायते। यदध्ययनं विनार्थावबोधं कृतं जायते तदध्ययनं मन्दमध्येतारं दुनोति। तदध्ययनं तु तदर्थं भारस्वमेव जायते। यतः यत् किमपि पठितं तत्र ज्ञातं किं पठितमिति चिन्तायां स खिन्नमना जायते। अतस्तस्यात्मा जुगुप्सते। कथनस्य प्रयोजनमिदमेव यद् यत् किमपि पठनीयं जनेन तदर्थबोधपूर्वकं पठनीयम्। बोधपूर्वकं पठनं तदैव सम्भवं भवितुमर्हति यदा व्याकरणस्य ज्ञानं स्यात्। इत्थं हि विद्वान् पतञ्जलिर्व्याकरणस्य महत्त्वं विवृण्वानोऽग्रे पुनराह—सावधानेन शब्दप्रयोगे प्रवीणेन भवितव्यम्। कः शब्दः केन प्रकारेण प्रयोक्तव्य इत्येतद् यो जानाति स स्वकीयेनैकेनापि शब्देन नैजं प्रभावं जनताया मानसे समुपस्थापयितुं शक्नोति। अनन्तरं स तां दिशं नेतुमर्हति यां दिशमेति तस्या आवर्जनं तस्येष्टं भवति।

व्याकरणज्ञ एव समुदाचारस्य विधिं साधु प्रयुङ्क्ते। कथनस्यास्य भावोऽयं यत्समुदाचारं व्यवहारं वा पदस्योच्चारणं कीदृशं कार्यमित्येतदपि वैयाकरण एव वेत्ति यतः स ह्रस्वदीर्घप्लुतोच्चारणेषु कस्मिन् अवसरे दीर्घं ह्रस्वं वा प्लुतमनुच्चारणं कर्तव्यमित्येतद् वैयाकरणत्वाद् जानाति तस्मात् व्याकरणस्याभिज्ञता तु संसारे प्रतिपदमपेक्ष्यते।

अथ च व्याकरणविद् एव प्रयाजान् सन्धान् सविभक्तिकान् विधाय यष्टुमर्हति एतस्मादपि कारणात् व्याकरणज्ञानापेक्षितास्ति।

यो हि विद्वान् उच्चारणं तथा करोति यथा न किमपि पदं न कोऽपि स्वरो न च किमप्यक्षरमस्फुटं स्यात् स एव यज्ञकर्मण्यधिकारी भवितुमर्हति। एतादृशस्याधिकारस्य लाभायापि व्याकरणस्य ज्ञानमर्जनीयमस्ति।

शब्देन सह तादात्म्ये सति शब्दस्य परब्रह्मभूतेनार्थेन सहापि तादात्म्यं भवितुं शक्नोति इत्येतस्मादपि हेतोर्व्याकरणस्य ज्ञानं ग्राह्यमस्ति।

वाक्यगतस्य अर्थस्य यथायथबोधनिमित्तेन च व्याकरणं पठनीयम्। यावदर्थस्य समीचीनतया ज्ञानं न जायते तावद् न श्रुतेन वा लिखितेन वाक्येन किमपि कार्यं सिद्ध्यति। वस्तुतस्तदनवगतार्थं वाक्यन्तु निरर्थं वच इव निरर्थकमेव। अतः सिद्धमिदं यदर्थावबोधनाय व्याकरणज्ञता काङ्क्ष्यते।

वचस शुद्धत्व व्याकरणाधीनमस्ति। व्याकरणं वस्तुतस्तितउरिव वर्तते। यथा तितउना वस्तु निर्मलीक्रियते, तद्द्वारेण तृण-कणादिका दूरीक्रियन्ते तथैव व्याकरण-साधनेन वैयाकरणो विचक्षण अपशब्दान् अपसार्य स्वकीयं वाक्यं शुद्धं सुशब्दललितं विधत्ते गृह्णाति च तस्य साहाय्येन यथार्थमर्थम्। सुशब्दप्रयोगेण यथार्थार्थावगमनेन च शब्दार्थयोर्मध्ये ऐक्यभावनाया निर्माणं जायते। तस्या ऐक्यभावनायाश्च फलमिदं मधुरं समुत्पद्यते यत् स वैयाकरण सुधीरनुभवतीद यत् तस्य वस्तुभि सर्वं सार्धमैक्यमेव। न स. किञ्च वस्तु भिन्नभिन्नपदार्थस्तद्-द्वयमपि वस्तुत एकमेवाभिन्नमेव। यत् स तदेव वस्तु, यद् वस्तु तदेव स-इत्येतेन ऐक्यानुभवेन भवति स ब्रह्मज्ञानवान्। पुनस्य परमपदस्य लाभस्य साधनभूतं यद् व्याकरणशास्त्रमस्ति तस्याध्ययनमतोऽवश्यमेव कर्त्तव्यम्।

किञ्च प्रायश्चित्तीया मा भूम इत्येतदर्थं, कृत्तद्धितप्रत्ययानां ज्ञानार्थमथ च विभक्तिज्ञानमधिगम्य सुदेवैर्भवितुमपि व्याकरणमध्येयमवश्यम्।

आचार्यपतञ्जलिवर्णितव्याकरणाध्ययनप्रयोजनानि हि उपर्यभिहितान्येतानि व्याकरणस्य महत्तां तदीयामनन्यगामिनीञ्चोपादेयतामुच्चैरुद्घोषयन्ति।

शब्द किञ्च शब्दशक्तिमधिकृत्य यादृशं गभीरं व्यापकं विस्तृतं सूक्ष्मतमञ्च विमर्शनं संस्कृतव्याकरणे विदधदवाप्यते न तादृशं विचारं भुवि कस्या अपि भाषाया व्याकरणं कुर्वत् समवाप्यते। जगति एतादृशं कतमद् व्याकरणं विद्यते यस्य साहित्यं संस्कृतव्याकरणस्य साहित्येन सदृशं स्यात्। न किमपि व्याकरणं तत्तुलामधिरोढुं प्रभवति। प्रथमन्तु यावन्ति व्याकरणानि संस्कृतभाषा निदधाति न तावन्ति व्याकरणानि काप्यन्या भाषा निदधाति। अस्या संस्कृतभाषाया एषा हि व्याकरणबहुलता संस्कृतभाषाया प्राचीनतमतां च साधयति। किञ्च संस्कृत-व्याकरण सुविशद यावन्तो व्याख्याग्रन्था भाष्यग्रन्था आलोचनाप्रधा-नग्रन्था अन्यविधाश्च ग्रन्था, प्रणीता अभूवन् न तावन्तस्तादृशा ग्रन्था कस्या

कापि अन्यस्यां भाषायां विरचिता यत्रादन्त इत्येतत् सत्यं सर्वविदितम्। कस्या हि भाषायाः व्याकरणे अष्टाध्यायी-महाभाष्य-वार्तिक-काशिका-प्रदीप-परिभाषेन्दुशेखर-कारिका-मनोरमा-सिद्धान्तकौमुदी-बृहद्वैयाकरणभूषण-वाक्यपदीय-लघुशब्देन्दुशेखर-वैयाकरणभूषण-व्युत्पत्तिवाद-स्फोटवाद-स्फोटनिर्णयप्रभृतयो हि सदृशा ग्रन्थाः दृश्यन्ते ? कस्या हि भाषाया व्याकरणे पाणिनि-पतञ्जलि-कात्यायन-कैयट-भर्तृहरि-नीलकण्ठ-नागेश-वररुचि-जयादित्य-पुरुषोत्तमदेव-भट्टोजिदीक्षित-हरिदत्त-वामन-अप्पयदीक्षितप्रभृतयः संख्यातीताः संख्यावन्तः सज्जनाः ? कस्या हि भाषायाः व्याकरणोपरि लिखितस्यैकस्यैव ग्रन्थस्य पुनावन्तष्टीकाष्टीकाग्रन्थाः प्राप्यन्ते यावन्तष्टीकाष्टीकाग्रन्थाः अस्याः संस्कृतभाषाया अष्टाध्यायीनामकस्य ग्रन्थस्य ?

संस्कृतव्याकरणमत एव तु संसारस्य सर्वोपरि विद्वांसो मुक्तकण्ठतया प्रशंसन्ति। प्रो० मोनियरविलियम्सो वदति—

संस्कृतव्याकरणं मनुष्य मानवमस्तिष्कस्य प्रतिभाया आश्चर्यावहं निदर्शनमस्ति यद् न कोऽपि देशो नेमं समयं यावदपि पुरो निधातुमशकत्।

प्रो० मैक्समूलरो वदति—भारतीयानां व्याकरणं संसारवर्तिनीनां सर्वासामपि जातीनां व्याकरणेभ्यो गरीयो महीयश्च।

कोलब्रुकः शंसति—व्याकरणस्य ते नियमा नितरां सतर्कतापूर्वकं कृता अभूवन्। शैली च तदीयानितरां प्रतिभाढ्या। सर डब्लू० डब्लू० हण्टरोऽपि वदति—संसारस्य व्याकरणेषु पाणिनीयं व्याकरणं श्रेष्ठं तिलकस्थानमावहति। एतद्धि यथाशुद्धता भाषया धात्वन्वयसिद्धान्तः प्रयोगविधयश्च अद्वितीयाः अपूर्वाश्च सन्ति···वस्तुतः संस्कृतव्याकरणं मानवमस्तिष्कस्य परमाद्भुतः आविष्कारः।

प्रो० टी० शेरबात्स्की कथयति—संस्कृतव्याकरणं मानवीयप्रतिभायाः सर्वोत्तमेषु रचनास्वन्यतमा रचना राजते।

संस्कृतव्याकरणं स्वां भाषां स्वकौशलेन यथैव विचित्रतां यथैव रमणीयतां यथैव विविधतां नयति। तत्कारणात् संस्कृतभाषा कौतुकागार इव नैकैरनल्पैर्विपुलैः परमाश्चर्यकैर्विचित्रविचित्रैः सुन्दरसुन्दरैः पदवैचित्र्यैः सदा प्रदर्शनीव, परमलघवधैर्यैर्निर्मुक्तैः, संस्थानैर्विपुलैः रत्नैरतुलैरनल्पैः पद्म-विद्रुमादिभिरगाधपैयाभिः कुमुद्वः पुञ्जभिरो रत्नाकर इव, सज्जतास्ति।

तथाहि संस्कृतव्याकरणं सन्धिभिः संस्कृतभाषा नितरामेव मनोज्ञां विदधति,

तन्नमामैस्तां विचित्रेणैव प्रकारेण गुरुता नयदपि लघुता प्रापयति । तत्कारकैः स्वभाषाया वाक्यानि नितरामेव नवनवतया पेशलानि-विदधत् समुपलब्ध भवति, तत् तेषां सहायतया वाक्यस्थान् भावान् अद्भुतेनैव विधिनाभिव्यनक्ति, तत् तान्यवलम्ब्यैकमेवार्थं विविधया रीत्या प्रकाशयितुमुपक्रमते। अत्रास्मिन् विषये त्रिचतुरुदाहरणाना समुपन्यासो न स्यादनुचित —वक्ता लेखको वा 'कृष्णो देवताभ्यो गरीयान्'इत्येतद् वाक्यम् 'अनिदेवान् कृष्ण' इत्येतेन प्रकारेणापि वक्तु लेखितु वा स्वतन्त्र । 'त्वदीय प्रतिवस्तु मा सवदती'त्येत भाव कीदृशेन भव्येन रूपेण प्रकटीकारयत्यहो सस्कृतव्याकरणं स्वकीय-कारकव्यवस्थासहायतया 'सर्वं मामनुते'इति । कपिला विद्युत् वातजनितप्रत्यूहानामागमन सूचयतीत्येत-द्विधमर्थं नियतपरिमितपदैश्चारुतरविधिपूर्वक सस्कृतव्याकरणं कारकविषयिण्या स्वीयया व्यवस्थया प्रकाशयितुमुपक्रमे 'वाताय कपिला विद्युत्' इति । यत्रानिर्दौर्लभ्यादत्यल्पमात्य मुञ्जानेभ्यो दीयते तदुपहासार्थं सस्कृतव्याकरण भाषाया वाक्य कीदृशेन सौष्ठवेन सन्निवेशयति तदपि दृश्यताम्—

"सर्पिषोऽपि स्यात्" इति । वस्तुत सस्कृतव्याकरणस्य तु प्रतिप्रकरणं नानाविधैर्वैचित्र्यैः संख्यानीताभी रमणीयताभीरम्यमस्ति यत्सौन्दर्यावलोकनात्तु कदापि न चित्त तृप्यति । सन्धिषु 'सन्छम्भु', 'सञ्छम्भु', 'सन्शम्भु', सञ्शम्भुरित्यादीनि विचित्रतावहानि रूपाणि, सुवन्ते 'अमुमुयङ्', 'अदमुयङ्', 'अदद्र्यङ्' इत्यादीनि किञ्च 'गवाक्', 'गवाग्', 'गोअक्'-'गोअग्', 'गोऽक्'—'गोऽग्', 'गवाङ्-गोअङ्-गोऽङ्' इत्यादीनि परमकौतुककारीणि रूपाणि भजमानानि पदानि पर्यवेक्ष्य को न सुधी प्रमोदतितराम् । तिङ्प्रकरणं तु किमपि विस्मयकारि ललितमेव नन्दनकाननं तत्र भाति । तत्र विचित्रविचित्रा धातुतरव शोभन्ते । तेषा तरूणा कुसुमानि स्वकीयेन दिव्येन सौरभेण स्वकीयेन नानाविधेन रूपसौन्दर्येण स्वकीयया अनुपमयाभया सर्वेषामपि मनासि नितरामेव परिप्रीणयन्ति । तत्र प्रायेण वाञ्छितमिदं जायते यदेकमेव सुममनेकानेकानि आश्चर्यसागरनिमग्नकारीणि सहस्रनामानि बिभर्ति । दृश्यता साम्प्रतम् एक-एव गुपूधातुर्लिट्येकवचने प्रथमपुरुषे कियन्ति रूपाणि प्रदर्शयति—'गोपायाञ्चकार', 'गोपायाम्बभूव', 'गोपायामास', 'जुगोप' । सम्प्रति 'ऊर्णुञ्' धातोर्लुङि प्रथमपुरुष एकवचन एव केवल वीक्ष्यताम्—'और्णुवीत्', 'और्णावीत्', 'और्णवीत्', 'और्णविष्ट', और्णुविष्ट इति । 'धूञ्' धातो. केवलं लटि प्रथमपुरुष एकवचनेऽधुना रूपाणि

इत्येनस्माद् गामीत्यर्थे खप्रत्यये कृते कियन्ति रूपाणि भवन्तीति वीक्षन्तां विपश्चित -अवारपारीण -अवारीण, पारीण -पारावारीण इति। अयमनयोरतिशयेन पटुरित्येतस्मिन् अर्थे तरपि पटुतर इति ईयसुनि पटीयान् इति च भवति। सर्वेष्वतिशयेन प्रिय इत्येतस्मिन् अर्थे प्रियशब्दादिष्ठनि प्रेष्ठ इत्येवंविधानि अनेकानेकचमत्कारपूर्णानि रूपाणि दृग्गोचराणि जायन्ते। स्त्रीप्रत्ययप्रकरणमपि श्वामनिद्वयीं लक्ष्मीं प्रदर्श्य विज्ञानामपि समेषां चेतांसि सर्वाधिकभावेन स्वां दिशमावर्जयति। अहह तत्र पाणिगृहीतीं पाणिगृहीतां चन्द्रमुखीं सुकेशीं सुजघनां क्षत्रियां कठीं करभोरूं युवतिं गोपीं कामुकीं कामुकामन्याश्च गार्ग्यायणीन्द्राणीमनार्यामनार्वीप्रभृतिपुनीतावदातविभाविभाविता पुरो निधाय व्याकरणमुपकरोति जगद् भृशम्। वस्तुतस्तद्व्याकरणमहिम्नो गानं केन विधिना कार्यं येन पुण्या गिरो धूयन्ते। नमो नमो व्याकरणवाङ्मयाय।



## ( ८२ )

## साहित्यशास्त्रम्

महत्त्वम्—साहित्यशास्त्रं शास्त्रान्तराणीव परमोपादेयं शास्त्रम्। वैदिकानां लौकिकानाञ्च शास्त्राणां सर्वाङ्गीणतया ज्ञानं तावत् भवितुमर्हति यावत् साहित्य-शास्त्रस्य ज्ञानं न वर्तते। वेद-वेदाङ्गादिषु 'उत त्वः पश्यन् न ददर्श वाचं' … जायेव पत्य उशती सुवासाः'; 'द्वा सुपर्णा सयुजा सखाया' इत्यादिकानि सन्ति-महत्त्वानि वाक्यानि एतादृशानि येषां भावान् न साहित्य-शास्त्रानभिज्ञो ज्ञातुं प्रभवति अथ च यो जनः साहित्यशास्त्रे न निष्णातोऽस्ति स व्यञ्जनाप्रतिपाद्य-मानान् अर्थान् अपि नाववोद्धुं शक्नोति। एवं स्थिते तस्य गतिस्तेषु स्थलेषु केन प्रकारेण स्यात् यानि व्यङ्ग्यार्थविलसितानि व्यञ्जकपदावलिपेशलानि च स्थलानि विद्यन्ते तस्मात् साहित्यशास्त्रस्यानिवार्यत्वेनाध्येतव्यतापेक्ष्यते। शास्त्रस्यास्यानेकस्वकीयविशिष्टता. त्रिलोक्यैव राजशेखरः शास्त्रमिदं वेदाङ्गमिव मन्यते। स ब्रूते "उपकारकत्वादलङ्कारः सप्तममङ्गमिति, ऋते च तत्स्वरूपपरि-ज्ञानाद्वेदार्थानवगति"। स साहित्यविद्यां स्वतन्त्रविद्यामेव न मन्यते अपि तु तर्कत्रयीवार्तादण्डनीतिनामधेयानां चतसृणामपि विद्यानां निष्यन्दमवगच्छति। स्वकीयाया काव्यमीमांसायां लिखति स—"पञ्चमी साहित्यविद्या" इति याया-वरीयः; "सा हि चतसृणामपि विद्यानां निष्यन्दः"।

शब्दार्थकाव्यस्वरूपरसगुणरीतिदोषध्वनिभावालङ्कारादीनां विषयाणां निरू-पणं प्रतिपादनं वा शास्त्रस्यास्य प्रयोजनम्। 'रसास्वादनं किंवा सद्यः परनि-र्वृति'—इत्येतद्धि तत्त्वज्ञस्य प्रमुखं लक्ष्यमस्ति यः कोऽपि वेदादिशास्त्रीयं मर्म मर्मविधनयाधिजिगमिषति, किंवा आत्मकल्याणकामनया यद्वा यशोऽर्थसम्प्राप्ती-च्छया अथवा लोक-व्यवहाराभिज्ञतावगमनवाञ्छया आहोस्वित् मनःपरितोषणा-काङ्क्षया वा अमङ्गलविनाशनलालसया काव्यं चिकीर्षति तत्र च शब्दार्थयोर्मध्ये सौन्दर्यमाधित्सति तस्य कर्तव्यमात्रमिदं यदसौ साहित्यशास्त्रं शरणं गच्छेत्।

शास्त्रमिदं स्वजन्मसमयादेव नितरां लोकप्रियतां गतं तस्मादेतत् काव्या-लङ्कार-काव्यशास्त्र-क्रियाकल्प-साहित्यविद्यालङ्कारशास्त्रसाहित्यशास्त्रादिकनिधय-नामभिः समम्मानं सानुरागञ्च समाहृतमभूत्।

**उद्गम** —साहित्यशास्त्रस्योत्पत्तिमधिकृत्य काव्यमीमांसाकारो राजशेखरो यामाख्यायिकां समुपस्थापयति सा कथयति यत् श्रीकण्ठ परमेष्ठिवैकुण्ठादिभ्यश्चतुःषष्टये शिष्येभ्य उपदिदेश। एतेन कथनेन शास्त्रस्यास्याविर्भावो भगवत शङ्करात् विदितो जायते। परमेतादृशीषु आख्यायिकासु न साम्प्रतिको वैज्ञानिकवर्ग श्रद्धत्ते। काव्यसौन्दर्यस्याधायकानि यानि गुणरीतिरसालङ्कारादितत्त्वानि साहित्यशास्त्रं विविनक्ति तानि सर्वाण्यपि तत्त्वानि मूलत वेदेषु प्राप्तानि भवन्ति तस्मात् साहित्यशास्त्रमपि स्वोत्पत्त्यर्थमुपादानानि सामग्रीं वा वेदेभ्य एव लेभे—इत्येतदेव सत्यमस्ति। वेद स्वयमेव 'अमरकाव्यम्' इत्यनेन नाम्ना भुवनविदित—"देवस्य पश्य काव्यं न ममार न जीर्यति"। एवं स्थिते साहित्यशास्त्रस्य जन्मदात्री श्रुतिरेव सिद्ध्यति। इदं त्ववधेयम् यद् वेदाङ्गादिषु केवलं साहित्यशास्त्रस्य तत्त्वानि समुपलभ्यन्ते न च तानि शास्त्राणि प्रधानतयाऽप्रधानतया वा तस्य शास्त्रीयं निरूपणं कुर्वाणानि दृष्टानि जायन्ते। तदीयं शास्त्रीयं निरूपणन्तु भरतमुनिसमयात् प्रारब्धं भवति। भरतमुने समयमधिकृत्य विदुषां सन्ति भिन्नभिन्नानि मतानि। तस्य ( भरतस्य ) कालो विक्रमात् प्राग्द्वितीयशतकमारभ्य तदर्वाग्वर्ति शतकद्वयं यावद् यो नियतो तस्यान्तराले सुधीभि प्रायेण विविच्यते। अत साहित्यशास्त्रस्य विभाग प्रारम्भस्त्वभूत् भरतसमयात् परं तद्विभागस्यावसानं हि ईशवीयाष्टादशशतकेऽभवत्। तस्येतिहास वर्षाणां सहस्रद्वयम् अभिव्याप्य वितत उपलभ्यते। तस्मात् तद्विरचनानेहा तावान् महान् स्वीक्रियते सुधीभि। विद्वांसस्तं चतुर्षु भागेषु विभजन्ते—

१ आदिम काल ( अज्ञातकालाद् भामहं यावत् )

२ रचनात्मक ( भामहात् आनन्दवर्धनं यावत्—६०० तमवैक्रमाब्दात् ८०० तमवैक्रमाब्दपर्यन्तम् )

३ निर्णयात्मक ( आनन्दवर्धनात् मम्मटपर्यन्तम्—८०० तमाब्दात् १००० तमाब्दपर्यन्तम् )

४ व्याख्यात्मक ( मम्मटात् विश्वेश्वरपण्डितं यावत्—१००० तमवत्सरात् वैक्रमाब्दात् १७५० तमाब्दपर्यन्तम् )

प्रारम्भकाले भरतभामहावेव मुख्यावाचार्यौ प्राप्येते। भरत स्वकीये नाट्यशास्त्रे रसं नाट्यस्य तत्त्वानि सुन्दरतया वर्णयन् दृग्गोचरो भवति। स तत्र केवलं चतुरोऽलङ्कारान् दश गुणान् दश दोषांश्चोल्लिखन् प्राप्यते।

तदीयं नाट्यशास्त्रं वस्तुतो बीजभूतमेव। गच्छता कालेन विद्वांस आचार्यास्त-द्वताद् विषयान् वितेनुः। भरतानन्तरं मेधाविरुद्रप्रभृतयः कतिपये विद्वांसोऽप्या-सन् परं न तेषां ग्रन्था उपलभ्यन्ते। भामह एव साहित्यशास्त्रस्यातः प्रथम आचार्यो मतः। काव्यालङ्काराभिधस्तदीयो ग्रन्थः साहित्यशास्त्रस्य मुख्यः प्रथमो वा ग्रन्थः स्मृतः। रचनात्मकः कालः साहित्यशास्त्रस्य महत्त्वमयः कालो गण्यते। अस्मिन् काले नवाभा रचना वस्तुतः साहित्यशास्त्रस्य गौरवशालिन्यो रचनाः सन्ति। एतस्मिन् काले साहित्यसंसारे अलङ्कार-रीति-रस-ध्वनिनामकाश्च-त्वारः सम्प्रदाया वीप्सिता अभूवन्। अलङ्कार-सम्प्रदाये भामहोद्भट-रुद्रटाः, रीति सम्प्रदाये दण्डिवामनौ, रससम्प्रदाये लोल्लट-शङ्कुक-भट्टनायकप्रभृतयः, ध्वनि-सम्प्रदाये च आनन्दवर्धनः समवायन्त। निर्णयात्मकः कालोऽपि महीयान् कालः साहित्यजगति मतो भवति। एतस्मिन् काले बहवः साहित्यशास्त्रसागरवारीणा उदपद्यन्त। ध्वन्यालोक-लोचनटीकाकारः अभिनवमार्गनिर्माता आचार्यो अभिनवगुप्तः, वक्रोक्तिजीवितकारः कुन्तकः, व्यक्तिविवेककारो महिमभट्ट काल-स्यास्य प्रधाना आचार्याः सन्ति। रुद्रभट्ट-भोज-राज-धनिक-धनञ्जया अपि काल-मिममधिवसन्तु। आचार्यकुन्तको वक्रोक्तिं प्रतिपाद्य प्राधान्येन, वक्रोक्तिसम्प्र-दायं प्रतिष्ठापयामास, महिमभट्टः स्वच्छतया ध्वनि-सिद्धान्तं निराचकार। व्याख्यात्मक कालोऽपि नैजं महिमानं निदधाति। कालोऽयं दीर्घतमः। प्रायेण ७५० वर्षाण्यभिव्याप्य सन्तिष्ठते। अस्मिन् काले हेमचन्द्र विश्वनाथ-जयदेवा-दिकाः साहित्यस्य सर्वाण्यङ्गानि समीचीनतया वर्णयामासुः प्रतिपादयामासुश्च। रुय्यकः अप्पयदीक्षितः अन्ये च कतिपये अलङ्कारानेव रुचिं दर्शयामासुः। शारदातनय-शिङ्गभूपाल-भानुदत्तप्रभृतयः साहित्यिकसिद्धान्तविवेचने प्रशंसनीय-मुद्योगं चक्रुः। रूपगोस्वामी दिशायामस्यां यं प्रयत्नं कृतवान् सोऽपि श्लाघ-नीयः। राजशेखर-क्षेमेन्द्रामरचन्द्रादिका विद्वद्वरेण्याः कविशिक्षाविषये ग्रन्थान् अग्रथ्नन्।

आचार्य-मम्मटस्य तु साहित्यसंसारे अवतारो वाग्देवतया अवतारत्वेन कल्प्यते। १००० तमे शतके प्रादुर्भूता प्रतिभैषमलौकिकी साहित्यशास्त्र-सम्बन्धिनः सिद्धान्तान् विषयांश्च समन्वयात्मिकायां शैल्या निरूपितवती। आचार्य आनन्दवर्द्धनो यदि ध्वनिविरोधिनः सिद्धान्तान् प्रत्याख्याय ध्वनि-सिद्धान्तस्थापनद्वारेण साहित्यशास्त्रस्य सत्तां शास्त्रजगति दर्शयामास, तदा

आचार्यमम्मटः काव्यप्रकाश प्रणीय साहित्यिकाना समक्षे स्वस्मात् प्राग्वर्तिनां सहस्राधिका सज्ञातानामाचार्याणां कृती सम्यगवगाह्य तासा सारभाग निहितवान्, साहित्यिकान् विषयाश्च सर्वान् दोषविरहिताया सर्वाङ्गसुन्दरायां भाषायां प्रस्तुतीकृतवान् किञ्च रसध्वनिगुणालङ्कारादीनां सर्वेषां महत्त्वमुपादेयत्वं वैशिष्ट्यञ्च यद् यदस्ति तत् तत् सकलं साधुतया दर्शितवान्।

इत्थं तत्तत्सम्प्रदायगता आचार्या सर्वेऽपि साहित्यशास्त्रं प्रतिष्ठापयितुं तस्य शास्त्रत्वं साधयितुं तस्य सर्वाणि चाङ्गानि निष्पादयितुं निरूपयितुञ्च पूर्णमनोयोगपूर्वकं प्रयासं विदधुः। तेषां प्रयासादविरामाद् यस्य साहित्यस्य बीजानि नवानि वा वदादिषु विकीर्णान्यासन्तानि शास्त्रीयं रूपमधिजग्मुः।

काव्यस्यात्मा—साहित्यशास्त्रिणामग्रे 'काव्यस्यात्मा कः ?' इत्येव प्रश्न उपस्थित आसीत्। एतादृशं किं तत्र वस्तुतः प्रधानमस्ति येन काव्यत्वस्याधानं जायते—इत्येतस्या समस्याया समाधानार्थमनेके मनीषिणः प्रचक्रमिरे। केचन अलङ्कारमेव काव्यस्य जीवनं मन्यन्तेस्म तदितरे गुणान्, तदन्ये रीतिं, तदपरे च ध्वनिं काव्यस्य प्राणभूतत्वेन विचारयन्तिस्म। काव्यस्यात्मानमधिकृत्य सञ्जाताया समीक्षाया विभिन्नता नवनवसम्प्रदायान् उत्पादयामास। एषां सम्प्रदायानां मध्ये ध्वनिसम्प्रदाय एव 'काव्यस्य आत्मा कः' ? इत्येतस्य प्रश्नस्य युक्तिसहतं बुद्धिग्राह्यं समुचितं युक्तं चोत्तरं दातुमक्षमत। एष सम्प्रदायः 'काव्यस्यात्मा ध्वनिः' इत्येतत् स्वकीयं मतं बलीयसीभिर्युक्तिभिर्गरीयोभिस्तर्कैः पुष्टतरैश्च प्रमाणैः प्रतिपाद्य तस्य युक्ततां साधयामास। स ध्वनिविरोधे समुपस्थापिता वैयाकरणवदान्तिमीमांसकनैयायिकाना युक्तीर्निराकृतवान्, किञ्च ये केऽपि साहित्यशास्त्रिणोऽलङ्कारं वा गुणं वा रीतिं वा वक्रोक्तिं काव्यस्यात्मत्वेन किंवा प्राणत्वेनोपपादयामवभूवुस्तत्सामपि सर्वांस्तर्कान् सवाश्च युक्तीश्चिच्छेद। ध्वनिमतं वस्तुतस्तु रसमतस्यैव विकसितं स्वरूपमस्ति। आचार्यभरतः प्राधान्येन रूपकं (दृश्यकाव्यम्)-मत्र दृष्ट्वा निधाय तद्दीयां मीमांसाञ्चक्रे। आचार्यानन्दवर्धनादिका ध्वनिसम्प्रदायस्य आचार्याः किञ्च ध्वनिपरिपोषकाः पण्डितप्रवरास्तद् विचारं हि व्यापकदृष्ट्या कृतवन्तः। रसो न वाच्यो भवितुमर्हति, स व्यङ्ग्य एव भूत्वा स्थातुं शक्यः—इमां विचारधारामुपसारयितुम् आनन्दवर्द्धनो ध्वन्यालोकमवतारयामास। काव्ये व्यङ्ग्यमेव प्रधानं तत्त्वमित्येतत् तदीयं मतमाचार्यमम्मटाऽभिनवगुप्तश्चान्वमन्येताम्। मम्मटस्तु व्यङ्ग्यस्य विशिष्टतां साधयितुं च प्रयत्नञ्च

कार स तु न केवलं ध्वनिमतं सुदृढतया प्रतिष्ठापयामास अपि तु साहित्यशास्त्रमपि शास्त्राणां श्रेण्यामानयामास । तत्रार्वाचीनश्च साहित्ये रसगङ्गाधरकारः पण्डितराजो जगन्नाथस्तत्राभिनिविवेश ।

रस—रससम्प्रदायस्य प्रथम आचार्यो भरतः स्वकीये नाट्यशास्त्रे षष्ठे सप्तमे चाध्याये रसस्य भावस्य च यथाविस्तरं प्रस्तुतञ्चकार तत्साहित्यसंसारेऽपूर्वमेव वस्तु । भरतस्य 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः'—इत्येतद् रससूत्रे भिन्नभिन्नतया व्याख्यां कुर्वन्त आचार्याः प्राप्यन्ते । व्याख्याकारेष्वाचार्येषु चत्वारः सन्ति मुख्याः ते सन्ति इमे—(१) भट्टलोल्लटः, (२) शङ्कुकः, (३) भट्टनायकः (४) अभिनवगुप्तः ।

भट्टलोल्लटः उत्पत्तिवादी अस्ति । स रसं विभावादैः कार्यं मन्यते । तन्मतेन रसः अनुकार्ये (सीता-रामादौ) अधितिष्ठति । अनुकारित्वात् स नटे प्रतीयते । विभावस्तमुद्भावयति, अनुभाव उद्भावितं तं प्रत्याययति सञ्चारिभावश्च प्रतीतिपथं नीतं तमुपचिततां प्रापयति—इत्येतद् स रसं लक्ष्यीकृत्य स्वमतं प्रकटीकरोति । मीमांसाशास्त्रानुयायी आचार्योऽयम् ।

अस्ति शङ्कुकः अनुमितिवादी । स रसं नानुकार्यनिष्ठं मन्यते । तद्विचारेण स नटगतो भवति । अभिनयनकौशलेन तांस्तान् भावानुभावान् प्रदर्शयन्तं नटं रसं सन्तं सामाजिको रसस्य स्थितिं नटेऽनुमिमीते । वासनावशात्पुनश्चासौ (सामाजिकः) अनुमीयमानं रसमास्वदते—इत्येतद् रसविषयकं मतं शङ्कुकस्यास्ति । अयमाचार्यो न्यायशास्त्रानुगामी ।

भट्टनायकोऽस्ति भुक्तिवादी । तस्य रसविषये विचारोऽयम्—रसस्य निष्पत्तिर्न अनुकार्ये न च अनुकर्तरि भवति स तु सामाजिकेनानुभूयते । रसस्य अनुकार्यगततया वा अनुकर्तृगततया अङ्गीकारेण तु सम्बन्धः सामाजिकेन सह स्थापित एव न भवितुमर्हेत् । एवं स्थिते सामाजिकस्तस्मात् कं लाभं लभेत ! तदुत्पत्तिः सामाजिकगतत्वेनापि स्वीकरणं नौचित्यम् । तदुत्पत्तेः सीतादिविभावजन्यत्वात् । सीतादिकाः रामस्येति विभावादिका भवितुं शक्नुवन्ति न च सामाजिकान् प्रति । साधारणीकरणव्यापारेण सीता-रामादिसम्बद्धव्यक्तित्वं दूरीभवति तत्र (सीतारामादौ) सामान्यकान्तात्वादिरूपमेवावशिष्यते तस्मात् तेऽनुकार्याः-सीतारामप्रभृतयोऽपि—विभावादिकाः भवितुं सामाजिकानां कृतेऽपि सामर्थ्यमनुभवन्ति । इदं हि साधारणीकरणं भावकत्वव्यापारेण निष्पद्यते । साधारणी-

करण्याद् यदा सामाजिकान् प्रति परकीया परकीयत्वविहीना भवन्तः स्वकीयत्वे परिणमन्ते तदा भोजकत्वव्यापारात् ते सामाजिकास्तं विभावादिकं भोक्तुमारभन्ते । इत्थं हि रसः सामाजिकानुभूतिगतो जायते । रसमुद्दिश्य भट्टनायकस्येदमस्ति मतम् । सांख्यशास्त्रानुगामी आचार्य एषः ।

अभिनवगुप्तस्य वादोऽभिव्यक्तिवादनाम्ना विख्यातः । तस्य मतमिदम्—सामाजिक-हृदयस्थितः स्थायिभाव एव रसानुभूतेर्निमित्तं भवति । सामाजिकस्य मनसि वासनारूपेण रत्यादिस्थायिभावा ये स्थिता भवन्ति ते साधारणीकरण्येन समुपस्थाप्यमानाभ्यो विभावादिसामग्रीभ्य उद्बुद्धा जायन्ते ततश्च ते तन्मयीभावतया ब्रह्मास्वाद इव आनन्दाधायका भवन्ति । सामाजिकस्तदुपभोगावसरे नितान्तमेव वेद्यान्तरसम्पर्कशून्य सञ्जायते ।

आचार्योऽभिनवगुप्तो न भावकत्व न च भोजकत्व नाम व्यापारमाद्रियते । स केवल व्यञ्जनाख्यव्यापारं रसाभिव्यञ्जकताप्रयोजनेन स्वीकुरुते । व्यञ्जनाव्यापाराङ्गीकरणात् स साहित्यशास्त्रानुगामी वर्तते ।

ध्वनिः—अनुपदमेवाभिहितं यद् रसो न वाच्यो भवति । काव्ये विभावानुभावसञ्चारिणामेव कथन क्रियते । तेषा संयोगात् स प्रतीतिमायाति किंवा तस्य-ध्वननमेव भवायत एव ध्वनिकारस्तं 'रस' इति नोक्त्वा 'रसध्वनि' रिति वदति । ध्वनि क इत्यत्र स ब्रूते—

"यत्रार्थ शब्दो वा *तमर्थमुपसर्जनीकृतस्वार्थौ ।*
व्यङ्क्त काव्यविशेषः स ध्वनिरिति सूरिभि कथित ॥

'तमर्थम्' इत्येतदंशं स अध स्थिताभ्या श्लोकाभ्यां व्याचष्टे—

"प्रतीयमान पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
यत् तत्प्रसिद्धावयवातिरिक्त विभाति लावण्यमिवाङ्गनासु ॥
सरस्वती स्वादु तदर्थवस्तु निष्यन्दमाना महतां कवीनाम् ।
अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम् ॥"

यद्यपि ध्वनिशब्दस्य अर्थो वाच्यातिशायि व्यङ्ग्यमित्येव सामान्यतः, परं व्युत्पत्तिभेदेन ध्वनिरित्येतत्पद व्यञ्जके शब्दे, व्यञ्जकेऽर्थे, रसालङ्कारवस्तुरूप-व्यञ्जनायां काव्ये च प्रयुज्यते ।

स च अयं ध्वनिः साहित्यशास्त्रे लक्षणामूलाभिधामूलभेदेन द्विविध कृतः । लक्षणामूलो ध्वनिरपि अर्थान्तरसंक्रमितवाच्यात्यन्ततिरस्कृतवाच्यभेदेन पुनर्द्वि-

विधः। अयं लक्षणामूलध्वनिर्लक्षणामाश्रित्य प्रवर्तते। अभिधामूलध्वनिरपि असंलक्ष्य-संलक्ष्यक्रमभेदेन प्रथमं द्विविधः, पुनश्च संलक्ष्यक्रमभेदो ध्वनिः शब्द-शक्त्यर्थशक्त्युभयशक्त्युद्भवभेदेन त्रिविधः। वस्त्वलङ्कारगतत्वेन शब्दशक्त्युद्भवो ध्वनिर्द्विविधः, अर्थशक्त्युद्भवो ध्वनिश्च द्वादशविधः। उक्तञ्च द्वादशविधत्वमुद्दिश्य दर्पण एवम्—

वस्तु वाऽलङ्कृतिर्वापि द्विधार्थः सम्भवी स्वतः।
कवेः प्रौढोक्तिसिद्धो वा तन्निबद्धस्य चेति षट्॥
षड्भिस्तैर्व्यज्यमानस्तु वस्त्वलङ्काररूपकः।
अर्थशक्त्युद्भवो व्यङ्ग्यो याति द्वादशभेदताम्॥

उभयशक्त्युद्भवो ध्वनिरेक एव। सङ्कलय्य सर्वान् इमान् भेदान् ध्वनिरष्टादशधा। ध्वनेर्मुख्या भेदास्तु एत एव। अवान्तरभेदेन तु सहस्रशो भवन्ति। ते हि सहस्रशो भेदा ध्वनेर्व्यापकतां ज्ञापयन्ति।

काव्यम्—ध्वनिवादिनः काव्यं भेदत्रये विभजन्ते—यस्मिन् काव्ये व्यङ्ग्यस्य प्राधान्यं भवति तत् ते 'उत्तमम्', यस्मिन् काव्ये व्यङ्ग्यार्थो वाच्यार्थान्नाधिको रमणीयो भवति तत् 'मध्यमम्', किञ्च यत्र व्यङ्ग्यरहितगुणालङ्कारसहितशब्दार्थानां सन्निवेशो भवति तत् काव्यं ते 'अवरम्' इति आमनन्ति। उक्तञ्च मम्मटेन काव्यप्रकाशे—

"इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः।"
"अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्।"
"शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्।"

अवरं नाम काव्यमव्यङ्ग्यत्वात् अभिनवगुप्त-विश्वनाथप्रभृतयः काव्यकोटौ न निदधति। ध्वनिषु रसध्वनेः सर्वोत्तमत्वात् यत्र तस्य सौन्दर्यं परिस्पन्दते पण्डितराजो जगन्नाथस्तत्काव्यम् उत्तमोत्तमकाव्यमिति मन्यते।

काव्यस्य लक्षणं साहित्याचार्यैरनेकविधं कृतम्। अत्र केषाञ्चन प्रख्यातनाम-धेयानामाचार्याणामभिमतानि काव्यलक्षणान्युद्ध्रियन्ते—

(१) शब्दार्थौ सहितौ काव्यम्—भामहः
(२) काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वर्तते—वामनः
(३) शब्दार्थौ काव्यम्—रुद्रटः
(४) अदोषौ सगुणौ सालङ्कारौ च शब्दार्थौ काव्यम्—हेमचन्द्रः
(५) शब्दार्थौ निर्दोषौ सगुणौ प्रायः सालङ्कारौ च काव्यम्—वाग्भटः

( ६ ) गुणालङ्कारसहितौ शब्दार्थौ दोषवर्जितौ—विद्यानाथ प्रतापरुद्रे

( ७ ) शब्दार्थौ वपुरस्य तत्र विबुधैरात्माभ्यधायि ध्वनि –विद्याधर एकावल्याम्

एतेषां काव्यलक्षणानां दर्शनेन ज्ञायते इद यत् एते काव्यलक्षणकारा भामह-वामनप्रभृतय आचार्या काव्यत्वस्य स्थितिं शब्दार्थयोरुभयोरपि स्वीकुर्वन्ति। नागेश 'काव्यत्वस्य प्रयोजक रसास्वादस्य जनकत्व शब्दार्थयोरुभयोरपि इष्ट मवतास्येतदभिधाय पण्डितराजजगन्नाथस्य काव्यत्वधर्म शब्दनिष्ठ एवेत्येतन्मतेऽरुचिं दर्शयन् काव्यस्य शब्दार्थोभयनिष्ठमित्येतत्स्वीकुर्वाणानां काव्यप्रकाशकारादीनां मते श्रद्धा प्रदर्शयति। पण्डितराज 'रमणीयार्थप्रतिपादक शब्द काव्यम्' इत्यत स्काव्यलक्षण करोति। भामहवामनरुद्रटादीनां दृष्टि शब्दार्थयोरेव स्थितासीत्। ते वस्तुत काव्यत्वस्य मार्गणे न सफलप्रयासा अभूवन्। काव्य कला हि कलासु शिरोमणि। सा कलानां सामा। न चमत्कारपूर्णौ सुललितौ शब्दार्थौ एव काव्यत्वोद्भावने सामर्थ्यं निधत्त। तौ तु तदुद्भावने सहायकमात्रौ प्रमुखौ। अत एव आनन्दवर्द्धन काव्यस्य स्वरूप किमित्येतदधिकृत्य प्राह—"काव्यस्यात्मा ध्वनिरिति" राजशेखरश्च 'शब्दार्थौ शरीर रस आत्मा" इति निजगाद, कुन्तकश्च वक्रोक्तिजीवितकार शब्दार्थौ काव्यमिति न प्रीणयितु शशाक। स काव्यस्य महत्त्वा तदीया सर्वातिशायिगौरवशालिता सम्यग् जानाति स्म। अत एव स आह—

"शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।
बन्धे व्यवस्थितौ काव्य तद्विदाह्लादकारिणि॥
शब्दार्थौ सहितावेव प्रतीतौ स्फुरत सदा।
सहिताविति तावेव किमपूर्वं विधीयते॥
साहित्यमनयो शोभाशालितां प्रति काव्यसौ।
अन्यूनानतिरिक्तत्व मनोहारिण्यवस्थिति॥"

इत्थ कुन्तक काव्यस्य लक्षण सविस्तर प्रतिपाद्य तत्स्वरूपमवगमयितुमयतते स्म।

विश्वनाथाय अपि न भामहादीनां काव्यस्य स्वरूपमरोचत। स तु तदेव काव्य मेने यद्रसात्मकमत स आह—'रसात्मक वाक्य काव्यम्" इति। आचार्य क्षेमेन्द्रोऽपि काव्यत्वमभिज्ञातु पूर्ण प्रयत्नमकार। स न काव्यत्व शब्दार्थयोर्न अलङ्कारेषु न गुणेष्वेव प्राप्तुमशकत्। तद्विचारेण काव्यत्व ततोऽतिदूरे वसति अत स तत्र नैज विचारमेवमभिव्यानक्—

"काव्यस्यालमलङ्कारैः किं मिथ्या गणितैर्गुणैः ।
यस्य जीवितमौचित्यं विचिन्त्यापि न दृश्यते ॥
अलङ्कारास्त्वलङ्कारा गुणा एव गुणाः सदा ।
औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम् ॥"

मम्मटं विहाय प्रायेण सर्वेऽपि काव्यलक्षणकाराः काव्यस्य यद् यत् स्वरूपं प्रोचुस्तत्र सर्वत्र सहृदयहृदयः क्वचित् कश्चिदभावमनुभवति । किमपि लक्षणमेतादृशं यत्र काव्यस्य स्वरूपं स्पष्टं भवत्येव न, किमप्येतादृशं यत्र सामान्यकाव्यस्य कृते स्थानमेव न वर्तते, किमपि लक्षणमेतादृशं यत्र काव्यत्वस्यांशोऽपि न संलक्ष्यते ।

"तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि ।"

इत्येतन्मम्मटस्य काव्यलक्षणमेव एतादृशं लक्षणं यत् काव्यस्य यथार्थं स्वरूपं पश्यति । मम्मटो ध्वनि-गुणीभूतव्यङ्ग्यचित्रकाव्यभेदान्वीन् काव्यस्य विधाय सर्वविधानि साधारणासाधारणानि काव्यानि यथोचितविधिना आद्रियते स्म । तदीये काव्यलक्षणे तेषां सर्वेषामपि काव्यानामन्तर्भावो जायते यानि विशिष्टानि सन्ति वा अविशिष्टानि सन्ति ।

व्यञ्जना—साहित्यशास्त्रस्य विपुलासु विशिष्टतासु एका हि महीयसी मुख्या च विशिष्टतास्ति तस्य व्यञ्जनावादित्वम् । तदेकत्वस्तु व्यञ्जनाया अभिधालक्षणातात्पर्येभ्यो विलक्षणत्वं भिन्नताञ्चोपपादयन्परतस्तस्या सौन्दर्यस्रोतस्त्वं साधयति । साहित्यपदस्य पदार्थस्ताभयस्यापि उपादेयत्वं सम्यग् वेत्ति परं काम ताभ्यामन्यैरप्रयोजनं सिद्धं स्यात्, कामं शास्त्रान्तरं ताभ्यां वा तयोर्मध्ये एकतरेण कृतार्थं गच्छेत् परं साहित्यशास्त्रस्य तौ द्वावपि (शब्दार्थौ) न प्रयोजनं न तदिष्टं साधयतः । साहित्यं तु न किमपि कथनमभिधया वक्तुमिच्छति । तस्य तु वाचकानि पदानि प्रियाण्येव न । लक्षकपदान्यपि तदीयमभिप्रेतं साधयितुं न पारयन्ति । लक्षकशब्दास्तु तत्रैव प्रयुज्यन्ते यत्र वाचकपदसन्निपातितेनार्थेन यथार्थावगतिर्न भवितुमर्हति । ते कामपि रूढिं वा प्रयोजनमाश्रित्यैव प्रवर्तन्ते । साहित्यमेवंविधां वचनावलिं प्रयुनक्ति एवंविधान् अर्थांश्च अभिव्यनक्ति या वचनावलिर्न वाचकशब्दैः सृष्टा भवति न च तेऽर्था एव तैरर्थैरन्तर्भूता भवन्ति यान् अर्थान् लक्षकशब्दा वाचकशब्दा वा प्रकटी-

कुर्वन्ति । तस्मात् न अभिधा न च लक्षणैव साहित्यस्य कृते पर्याप्ते । अत एव तदुपस्यास्ति व्यञ्जना । आचार्यविश्वनाथस्तस्यापेक्षा समक्षे प्रस्तौति—

"विरतास्वभिधाद्यासु ययार्थो बोध्यतेऽपर ।
सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च ॥"

गुणा —माधुर्यम् , ओज प्रसादश्च एते त्रयो गुणा सौन्दर्यवृद्धि यथा वसर प्रयुज्यन्ते । यत्र यस्य गुणस्य प्रकटनमपद्यते तत्र तैः स एव गुण उप युज्यते । तदुपयोगेन वाग्मी लेखो वा उत्कृष्टता याति, तदुपयोगेन श्रोतरि पाठके वा समुचितोऽमोघ प्रभावो निपतति तस्मात् साहित्यिका गुणान् आराधयन्ति । गुणान् अधिकृ य आचार्यमम्मटो प्रतीति—

'ये रसस्याङ्गिनो धर्मा शौर्यादय इवात्मन ।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणा ॥"

अलङ्कारा —अलङ्कारैः सौन्दर्यस्य वृद्धिर्भवति तस्मात् सौन्दर्यानुरागिण सौन्दर्य वर्धयितु तस्यति तानपि आवर्जयितुमीहन्ते यथा दृष्टिर्वाह्य एव सौन्दर्ये रज्यति, ये हि आन्तर सौन्दर्य यथार्थ सौन्दर्य सत्य हि सौन्दर्य नाभिज्ञातु न सम्भावयितु च शक्नुवन्ति । साहित्यिका स्वमग्रभावनीय साध्यमुपकर्तुमेव तान् प्रयुञ्जन्ति । आचार्यमम्मटोऽप्याह—

"उपकुर्वन्ति त सन्त येऽङ्गद्वारेण जातुचित् ।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादय ॥

उपसंहृति —वदान्त-माल्यादिदर्शनानि वस्तुतो मानवजिनेषमेवोपकुर्वन्ति तानि न सन्ति मानवमात्रोपकारीणि । साहित्यशास्त्रमेव मानवमात्रस्य श्रेय प्रेयश्च सम्पादयति । तदेव मानवस्य क्षमता तदीया मनोवृत्ति सम्यग वेत्ति । तत् तथा यतते येन सर्वेऽपि मानवा सत्पथगामिनो भूत्वा स्वीय परमार्थ लभु शक्नुयु । मानवो मनोऽधिवसति न च धियम । साहित्य तदेव मना विमली करोति । स मानवो यथु रतिशोकक्रोधादिस्थायिभावेषु स्वपिति जागर्ति क्रीडति च किञ्च यान् निर्वेदावेगदैन्यश्रममदादीन् भावान् अहोरात्र जीवन व्यवहरति तान् सर्वान् अपि निरूपयति ।

साहित्यस्य विषय प्रयाजनादेरधिकारिप्रभृतीनां स्वतन्त्रत्वात् तस्य शास्त्रत्व निर्बाधमेव । शास्त्रेषु तत् स्वीयमुत्कर्षमुपादेयत्वञ्चादाय विलसतितराम् ।

—०—

## संस्कृतनाटकमञ्जुता

संस्कृतरूपकं स्वप्रकृत्या प्रवृत्त्या च नाट्यान्तररूपकेभ्यो भिन्नम्। तत्र स्वभावतः एव आदर्शवादि। प्रख्यातवंशानां राजर्षीणां वा धीरोदात्तप्रतापवतां मानवानां चारुचरितानि चरित्राणि चाभिनीय विविधव्यापाराणां घटनाश्च मर्यादं चित्रं विधाय तत्तत्पदार्थानां जीवनवीथीविधायास्तत्तद्वस्तूनां धर्मस्य च समुन्मेषणं न केवलं तस्योद्देश्यं, श्रव्यकाव्यमिव सामाजिकानां मनसि स्थितानां स्थायिभावानां रसात्मके तत्त्वे परिणमनं तदीयं प्रधानतमं लक्ष्यम्। अन्वितिविविक्तापेक्षत्वात् तद् वैदेशिकेभ्यो रूपकेभ्यः स्वकीयामन्वितिगामिनीं विशिष्टतां भजते।

संस्कृतरूपकस्येष्टो रसोऽतस्तत्साधनायै तत्रान्येषां तत्त्वानां समावेशो विधीयते। 'अवस्थानुकृतिर्नाट्यम्' इति मन्वानेनापि संस्कृतनाटककारेण कथावस्तु चरित्रचित्रणादिषु तत्त्वेषु न गौरवमाधीयते। रससाधनानुरूपं यः कोऽपि प्रयत्नस्तेनैव चयनं तद्विरामाय तेनानादरमिष्यते। पात्रचित्रण-संविधानकादि-योजनायां यदैव तेन कश्चिदेवंविधो भावोऽवलोक्यते यो रसानुभूतावन्तरायं विदधाति तदैव सपदि तस्य तथापरिवर्तनमनुतिष्ठति यथा भावुकः रसास्वादनं निष्प्रत्यूहं विदधीत। रसोद्रेकदिशायां संस्कृतनाटकेषु नितरामभिनिवेशोऽवलोक्यते। "काव्यानन्दोऽप्यभिनेयमनाद् रसादेव समुदयते" इत्येतदभिनवगुप्तस्य सुगृहीतस्य वच इह समुज्ज्वलं प्रमाणं जागर्ति भरतमुनिस्तु स्पष्टमेवाचष्टे—

"नहि रसाद् ऋते कश्चिदप्यर्थः प्रवर्तते।"

कथावस्तुनः किं वा पात्रचरित्रादिकस्य पर्युदासत्वेन सन्निवेशनं नाधुनिकान् प्रीणाति। तेषां मतेन संस्कृतरूपककाराणामेष दोषः। परं तथ्यं नेदम्। भारतीयसंस्कृतरूपकस्य मूलभावनाया अनवगमनादेव ते तथा मन्यन्ते। संस्कृतरूपककाराणां तु विचारोऽयं यदभिनेयाद् वस्तुनिर्दिष्टता प्राधान्यं च चमत्कारोत्पत्त्यै रसं निरोधापयेत्। रूपककारेण तु सर्वदा मध्यममार्गावलम्बिनैव भवितव्यम्। उदीरितञ्च—

"न चाति रसतो वस्तु दूरं विच्छिन्नतां नयेत्।
रसं वा न तिरोदध्याद् वस्त्वलङ्कारलक्षणैः ॥" ( दशरूपके )

उपर्युक्तेन वचनेनेदं कदापि अवगन्तव्यं यत् संस्कृतरूपकेषु कथावस्तूपेक्ष्यते। तत्स्वरूपं महत्त्वञ्च संस्कृतनाट्यशास्त्रेऽतिशयसूक्ष्मतापूर्वकमाम्नातम्। भारतीयैः नाट्यरचना कस्या अपि क्षणिकभावनाया वशात् न विधीयते। तदीयं प्रयोजनं प्राचां भारतीयविपश्चितां मतेन नितान्तं गम्भीरं व्यापकं सार्वभौमञ्च वर्तते। 'लोकवृत्तानुकरणम्' नाट्यस्य स्वरूपं स्मृतम्। लोकवृत्तस्य नानाभावसमन्वितत्वात् नानावस्थान्तरात्मकत्वाच्च भारतीया नाट्यमिदमिति कस्यचन सीमितस्य क्षुद्रस्य पृष्ठतो बन्दीकृत्य न निधातुमीहन्ते। भारतीया हि प्राचीना रूपककारा नासन् अर्थगृध्नवो, न ते स्वानि रूपकाणि द्रव्यार्जनाय लिलिखुः। न ते स्वानि दृश्यकाव्यान्यपि स्वोदरभरणार्थमुपजीव्यत्वेन अकल्पयन्। व्यवसायसाधनत्वेन न तानि तैः प्रायुज्यन्त। अतस्तत्र तैर्मर्दनीयानि चरित्राण्येव न्यधीयन्त। मानसगतस्य कालुष्यस्यापनयनं हि सतां कीर्तनेनैव वस्तुतः सञ्जायते। कामक्रोधलोभमोहादिभावाना सन्ति ये क्रीडनकाः, ये हि तेषां 'तिष्ठत' इत्येतद् वचो निशम्य तिष्ठन्ति, 'उपविशत' इति श्रुत्वा उपविशन्ति 'गच्छत' इत्याकर्ण्य गच्छन्ति तेषां जनानामिन्द्रियदासत्वप्रदर्शनेन न कोऽपि लाभो न तेन चरित्रनिर्माणं जायते, न च मनसः संशुद्धिरेव भवति। समाजस्य मध्ये आशाया सञ्चारणाय, मानवजीवनस्य च अन्तराले उदात्तानां भावानामुद्बोधनाय रागद्वेषेर्ष्यादिमतां पुरुषाणां कथाश्चरित्राणि च नैव कदापि सहायकानि भवितुमर्हन्तीत्येतत्सुदृढविश्वासात् तानि न ते आद्रियन्ते स्म। भरतकृतं नाट्यशास्त्रस्यानुशीलनमिदमेव सत्यमस्मत्पुरतः प्रस्तवीति—

"एतद् रसेषु भावेषु सर्वकर्मक्रियासु च।
सर्वोपदेशजननं नाट्यमेतद् भविष्यति ॥" ( भरतनाट्यशास्त्रम् )

नाट्यं लोकहृदयमनुवर्तते। हृदयन्तु लोकस्य न सदैव एकरसमालोक्यते। तत् कदापि कुत्रापि रति निदधाति कदापि च कुत्रापि। कदापि तद् औदार्यं कदापि तत्कार्पण्यं कदापि तद् सौजन्यं, कदापि तद् दौर्जन्यं रममाणमाप्यते। रूपकनाट्यक निसर्गतो विशुद्धस्य हृदयस्योपरितनां कर्मसंस्कारजन्यां मलिनतामपहर्तुं तादृशीमेव साममग्रीमुपयुनक्ति यादृश्या लोकस्य समीहितं सिद्ध्येत् परश्च सततं मङ्गलं स्यात्।

संस्कृतनाटकानि नाट्यशास्त्रीयाणि विधिविधानानि सादरं रक्षन्ति जीवनस्यैकदेशगं चित्रं न प्रस्तुय जीवनस्य चतुरस्रं चित्रं प्रस्तुवन्ति । तानि मानवस्य न केवलं गुणानपि तु तद्गतान् दोषानपि आलिखन्ति ।

अभिज्ञानशाकुन्तले शकुन्तलामालोक्य दुष्यन्तस्य मानसे या भावनोद्गता; अविमारके राजकुमारस्य हृदये ये विकाराः समुत्पन्ना, मृच्छकटिके मदनिकां वीक्ष्य शर्विलको यां दिशां नीतोऽभवत्, मुद्राराक्षसे मलयकेतुर्याभिर्देशनाभिरगृह्यत, रत्नावल्यामादौ वासवदत्ता सागरिकाया यामीर्ष्यां बबन्ध, वेणीसंहारे भीमः क्रोधघृणादिभावैर्यैरपीड्यत तानि सर्वाण्यपि तु मानवीयानि दौर्बल्यान्येव तु विद्यन्ते । नाटककारो हि भारतीयः स्वनाटकेषु मानवस्य सर्वान् अपि सद्-सद्भावान् चित्रयति परं न स गुणश्रेष्ठत्वेन दोषम्, सौजन्यश्रेष्ठत्वेन दौर्जन्यं, अनुक्रोशश्रेष्ठत्वेन निरनुक्रोशत्वम्, अन्यायश्रेष्ठत्वेन अन्यायम्, सदाचारश्रेष्ठत्वेन दुराचारञ्च दर्शयति । प्रतीच्यानां शेक्सपियरप्रभृतिनाटककाराणां नाटकेष्वग्रस्यं हि अन्याय-निर्दयतानृशंसतादुराचारप्रभृतयोऽसद्भावा अन्ततो गत्वा विजयिनो भवन्तः संलक्षिता भवन्ति । अन्याय-दौर्जन्यादिकाः सर्वेऽपि दोषा न मध्ये बलेस्थिता भवन्ति ते अनृतमेव बलमवलम्ब्य उत्थिता भवन्ति तेषामुत्थानस्य मूले न शाश्वतिकी शक्तिरधिष्ठिता भवति तस्मादेव कारणात् अनश्वरबलमवलम्बमानस्य सत्यं भजमानस्य—भावस्य पराजयो न कदापि सम्भवः । संस्कृतनाटककारस्य नाटकेष्वत एव सततं प्रकाशस्य न्यायस्य सत्यस्य करुणाया एव विजयो दृग्गोचरीभवति । संस्कृतनाटककारोऽन्यस्य अन्यायस्य वा अभ्युदयं दर्शयित्वापि नान्ततस्तस्यैव सत्तां समुपस्थापयति स तु अन्ते सत्यस्यैव न्यायस्यैव ध्रुवविजयमभ्युदयं प्रदर्शयति । मृच्छकटिके असत्यस्य विजयं शूद्रको स्वकृत्यान्त्यमङ्कं यावत् दर्शयत्यपि न स्वकीयं प्रकरणं तत्रैव पर्यवसाययति । भवभूतेः उत्तररामचरिते प्रारम्भात् समाप्तिं यावत् काम शोकसन्तापा दृष्टा खलु परं तत्रापि अन्ते न तेषां विजयग्राही प्रकर्षः प्रदर्शितः ।

"अवस्था या तु लोकस्य सुखदुःखसमुद्भवा ।
नानापुरुषसञ्चारा नाटके सम्भवेदिह ॥
सर्वभावैः सर्वरसैः सर्वकर्मप्रवृत्तिभिः ।
नानावस्थान्तरोपेतं नाटकं संविधीयते ॥"

( भरतनाट्यशास्त्रम् )

इत्येतद् यन्नाट्यशास्त्रे प्रतिपादितं तस्याक्षुण्णतया रक्षां कर्तुं संस्कृतनाटकेषु पूर्णेहाचरिता जायते।

दर्शकानां मानसेषु रसस्योन्मेषणं भारतीयस्य रूपककारस्य चरममुद्देश्यम्। अत स कदापि न प्रतीच्यरूपककार इव कथावस्त्वादिव्यापारं रूपकस्य सर्वस्वत्वेनाभ्युपगच्छति।

भारतीया विद्वांसो देशस्य मर्यादां पोषयितुं गरिमाणं च वर्धयितुमनारतं प्रायस्यन्। तेषां सर्वाण्यपि कार्याणि तदर्थमेव जन्म अगृह्णन्, तदर्थमेव ताम्यजीवन् तदर्थमेव तानि स्वजीवनमपि अत्यजन्। तेषां रूपकेष्वपि तस्यैव आदर्शस्य अवदातशोभा प्रस्फुरति।

> वयोऽनुरूपः प्रथमस्तु वेषो वेषानुरूपश्च गतिप्रचारः।
> गतिप्रचारानुगतं हि पाठ्यं पाठ्यानुरूपोऽभिनयश्च कार्यः॥
>
> (नाट्यशास्त्रम्)

पौराणिके वा ऐतिहासिके उपाख्याने यदि रूपककारः क्वापि अनौचित्यमीक्षते तदासौ तद्वर्जनपूर्वकं कथां निबध्नाति। अभिज्ञानशाकुन्तले कालिदासेन दुर्वाससः शापप्रसङ्गः पौराणिककथागतस्य अनौचित्यस्यैव निरासाय समुपन्यस्तः।

भारतीयनाटककाराणां स प्रयत्नः सदा भवति येन नायकस्य चरित्रं पवित्रं सन्तिष्ठेत न कालुष्यस्य लेशोऽपि तन्मनागपि संस्पृशेत्। नायकचरित्रस्य रक्षार्थमिह सदैव प्रयत्नः कृतोऽभूत्। एवंविधस्य प्रयत्नस्य दिशि सङ्केतः साधुतया धनञ्जयस्य निम्नलिखितासु पङ्क्तिषु भवति—

> "यत् तत्रानुचितं किञ्चिन्नायकस्य रसस्य वा।
> विरुद्धं तत् परित्याज्यमन्यथा वा प्रकल्पयेत्॥" (दशरूपकम्)

कथावस्तुनः सरसत्वेऽभिमतेऽपि नौचित्यस्यातिक्रमणं तदर्थमाकाङ्क्षितमिह भारतीयेन संस्कृतनाटककारेण।

रूपकेषु न केवलं राजवंशोत्पन्नानां वा महामानवानां चरित्राणि समुल्लिख्यन्ते अपि तु तत्र सामान्यानामपि जनानां वृत्तमालिख्यते।

> "प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान्।" (सा० दर्पण)

इत्येतद् यदुदीरितं तत्तु नाटकाभिधं रूपकं लक्ष्यीकृत्योक्तम्। न च तस्य प्रकरणवृत्तप्रभृतिष्वपि अपेक्षा भवति। एवमेव न 'केवलं' अभिजाता एव तत्र पात्रत्वेन गृह्यन्ते साधारणा अपि अकुलीना अपि रूपकेषु पात्रत्वेन स्वीकृता

भवन्ति । प्रकरणाख्ये रूपके सर्वविधानामपि पात्राणां सन्निवेशः स्पष्टमेव सर्वै-रवलोक्यते । भाणादिषु रूपकेष्वपि साधारणा एव जना दृश्यन्ते । तेषु तेषु रूपकेषु उपरूपकेषु च नानाविधानामुच्चावचानां पात्राणां सन्निधानादिदं निश्चप्रचभावेन निष्पद्यते यत् संस्कृतदृश्यकाव्येषु सर्वविधानामपि पुंसां कलत्राणाञ्च समावेशः क्रियतेऽत्र च बहुविधानि च चरित्राणि तत्रालिख्यन्ते ।

संस्कृतनाट्यशास्त्रे गीत-नृत्य-वादित्रादीनां कलानां कीर्तनेनेदं सिद्ध्यति यत् पुरातनतरं भारतीयं जीवनं कलानुरागरतं बभूव । भारतीयेष्वेषां कलानुरागिणी रुचिस्तदाप्रभृत्येव अजागः यदात्र वैदिकः कालो विजजृम्भे ।

"यस्यां गायन्ति नृत्यन्ति भूम्यां मर्त्या व्यैलवाः ।" ( अथर्वणि )
इत्येवंविधाः पङ्क्तयः कथनमुपर्युक्तं परिपुष्णन्ति ।

ईशावीयपञ्चमशतकारम्भात् प्रागेव अत्रत्या अभिनयादिकलाः कृत्स्नतया विकासमगुः । शिलालिन-कृशाश्वसंज्ञकौ लेखकौ कलामिमां प्रचारयामासतुरिति को न जानाति ? अजन्ता-मार्ग्रीप्रभृतिस्थानेषु तत्तद्भावविभाविताः कलाः पर्यवलोक्यन्ते, तासां कलानां निर्देशो भरतस्य नाट्यशास्त्रे सर्वैः पर्यवेक्ष्यते । भासकालिदासशूद्रकादीनां रूपकाणां रूपकाणिता एव कला स्फुटतयास्माकं पुर आकलयन्ति ।

संस्कृतरूपकेषु पद्यानां बाहुल्यं विलोक्य, हन्त, प्रतीच्याः कतिपये कोविदा-लोचका जुगुप्सन्ते तत्र । परं तेषामेव बन्धत्र तादृशीं बहुलतां प्रशंसन्त्यपि । तत्र ते प्रमोदन्ति । आङ्गलः कविहार्मसहार्डी विपुलकायस्य स्वीयस्य 'डाइनास्ट' संज्ञकनाटकस्याकारमुद्दिश्य सविस्तरं यल्लिखितवान् तस्य सारोऽयम्—रङ्गमञ्चो-परि अभिनेयं नाटकमपकृष्टमूल्यं भवति । उत्कृष्टमूल्यं तु तस्यैव नाटकस्य कृते जनैः प्रदीयते यद् रङ्गमञ्चोद्देश्येन न प्रणीयते । वस्तुतस्तेनैव नाटकेन श्रेष्ठेन भूयते यदावृतकपाटस्य निकेतनस्याभ्यन्तरे भागेऽध्ययनार्थं विरच्यते ।

संस्कृतनाटककाराः संसारस्यासीमवैचित्र्यानुभूतिमालम्ब्य स्वीयानि पात्राणि घटयन्ति; स न तानि व्यक्तिस्ववैशिष्ट्याद् यथार्थजीवनाच्च स्रंसयति । तदीयं परम्परागतमपि पात्रं न कदापि वैरस्यं जनयति न च तदीयं पात्रं कल्प-नालोकस्थापि पात्रं भवति । तद् भूतलस्यैव प्राणवान् मानवः । दुष्यन्तो भरत-सुतः सम्राडवरथमास्ते परं सत्रपि तादृक् स पुरुष एव न तदितरः ।

'गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं चेतः ।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥"
"अलमस्मि ततो हृदयं तथापि नेदं निवर्तयितुम् ।"
'कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।
बलवत्तु दूयमानं प्रत्याययतीव मे हृदयम् ॥"

इत्येतदादिवचोभिर्नाटककृत् तस्मिन् सम्राजि मानवसुलभदुर्बलताया सद्भावं स्पष्टमेव समुन्मीलयति । एतेन सिद्ध्यति यत् संस्कृतरूपकेषु पात्राणि यद्यपि सन्ति विशिष्टानि परं तानि संसारस्यैव सन्ति पात्राणि न च सुरलोकस्य । अपि किं शर्विलक शकार माथुरक शकुनि कर्ण द्रोण भीष्म दुष्यन्त-सागरिका पद्मावती शकुन्तलादिका भूभुवनस्य प्राणभृतो न भूत्वा लोकान्तरस्य सन्ति ? अपि न एषु निर्दिष्टेषु पात्रेषु त एव दोषा प्रदर्शिता ये मानवेषु निसर्गतः प्राप्यन्ते । एवंविधायां स्थित्यां कथमेतद् वक्तुं सुशकं यत् संस्कृतरूपकेषु अनैसर्गिकता सन्तिष्ठते । वस्तुतस्तत्र मानव एवाङ्कितो न च त्रिदशः । को राक्षसं चाणक्यं चन्द्रगुप्तं वा देवं इति ब्रुवीत ? रामो यद्यपि अस्ति उपमानविहीनः पुरुषः परं संस्कृतरूपकेषु सोऽपि मानवत्वेन चित्रितो न च देवत्वेन ।

"क्षुभिताः कामपि दशां कुर्वन्ति मम सम्प्रति ।
विस्मयानन्द-सन्दर्भ-जर्जरा करुणोर्मयः ॥"
'एषा वसिष्ठ शिष्यागा रघूणां वंशनन्दिनी ।
कष्टं सीतापि मुनयो सत्कर्तारं न विन्दति ॥"

इत्यादिषु रामः किं मानवाद् भिन्नः ? किं न तत्र मानवसुलभदुर्बलता ?

संस्कृतरूपकेषु गृहीतं कथावस्तु रामकृष्णविषयकमेव प्रायेण । तत्रत्यैषा रुचिप्रियता वैरस्य जनयतीति सुजानान् प्रति प्रसन्नराघवकार साधु प्राह—

स्वसूक्तीनां पात्रं रघुतिलकमेकं कलयतां
कवीनां को दोषः स तु गुणगणानामवगुणः ।
यदेतैर्निःशेषैरपरगुणलुब्धैरिव जग-
त्यसावेकश्चक्रे सततसुखसंवासवसतिः ॥"

रामायणे महाभारते च श्रीवाल्मीकिव्यासाभ्यां सकलानामपि वेदशास्त्रादीनां निष्कर्षं सुबोधसरलभावेन सन्निहितं । तत्र ताभ्यां भारतीयाचारविचारमर्यादा-

रीतिर्नीतिर्धर्मव्यवस्थादिकाः साधु सविस्तरं प्रतिपादिता। अतस्तावुभावपि ग्रन्थौ महनीयरत्नौ। संस्कृतानेहसा तौ द्वावपि श्रुतिदर्शनोपनिषदादिभ्यः श्रेयांसौ संवृत्तौ सर्वस्या अपि जनताया कृते, यतस्तयोः सकाशात् सा स्वधर्मकर्त्तव्या-चारादिकं सौकर्येण बोद्धुं शशाक। अनयोः प्रवृत्तिं तथावलोक्य कवयो नाटक-काराश्च स्वां रचनामनुपद्धतीर्विन्देन चक्रुः। काव्यनाटकादीनां रामकृष्णजीवन-गानकारित्वे कारणमेतदेव।

संस्कृतरूपकं पौराणिकधर्मनिष्ठं सौन्दर्यपरं च वरीवर्ति। न तत्र अश्लीलत्व-घृणाजुगुप्सादिव्यञ्जकानि दृश्यानि दृश्यन्ते। वध-समरादिविषयेभ्यो नृशंसघ-टनाश्च तत्र नादरं लभन्ते। न च भवन्ति तत्र याः काश्चन अनृतमूला। तेषां सृष्टि संस्कृति-स्वैरस्यपरायामले श्रवणावरणे कृता भवति। मत-प्रसङ्गादायायिनां तत्त्वानां कथमप्येकं न तानि स्वपदात् भ्रंसयन्ति। न तेषु निन्दनीयधूम्रपानका-लिङ्गनादीनां विकृतीनां च घटनानां समावेशश्च विधीयते। यद्यपि भूयस्यां संख्यायां संस्कृतरूपकप्रणेतारो नाट्यशास्त्रोक्तजन्ममरणादिप्रदर्शनविषयकान् नियमान् आयमानाः एव बाधयन्ते परं क्वचित्ये तान् नियमान् उल्लङ्घयन्तोऽपि प्राप्यन्ते। एवं स्थिते संस्कृतरूपकाणां सर्वथा परम्परागामित्वं सुखान्तत्वनिष्ठत्वं च न सिद्ध्यति। भासकृतमूरुभङ्गं नाम नाटकं शोकपर्यवसायि दृश्यते। बाल-चरिते कंसस्य, प्रतिमायां च दशरथस्य निधनं रङ्गमञ्चे घटमानं दृग्गोचरीभवति। मृच्छकटिक-वेणीसंहार-नागानन्दादिरूपकाणां मध्ये करुणोद्भावीनि दृश्यानि स्थाने स्थाने निषीदन्ति। इदन्त्ववधेयं यत् संस्कृतनाटकं प्रतीच्य नाटकमिव कर्कशेन निराशावादेन, हिंसानां श्रद्धया अमुहारिणीभिर्दुश्चेष्टाभिश्चिन्तनीयया असामुपि-क्तया, रागद्वेषयोस्ताण्डवेन क्रन्दनाना च भीषणेन कुव्यापारेणाच्छन्नं वर्तते। न संस्कृतनाटकानां दृष्टिर्देशान्तरनाटकानां दृष्टिरिव ऐहिकतादर्शिनी न च सा 'मानवस्य सृष्टयप्रदर्शनेन मानवीयं जगत् समुन्नेतुं शक्यते'—इत्यत्र स्तोकमपि विश्वसिति। सा मानवे मानवतायाः स्वरूपमेवावलोकयितुमभिलषति। न चाप-क्लेशमलीमसं स्वार्थादन-पैशून्योद्भावनादिदारुणदुष्कर्मकर्चरं पापीयो जीवनं तस्यै रोचते। सा कर्मवादसिद्धान्ते श्रद्धा विश्वासापि नियतौ विश्रम्भवती।

भारतीयं दर्शनं सुखदुःखयोरन्तराले न भेदमीक्षते। तस्य प्रभावः संस्कृतस्यापि साहित्यस्य भारतीयस्य नृपामान्यस्य च हृदये एतावान् अतितरां निपतति

आस्ते यदिह तादृशाना हिंसामयाना दृश्याना समावेशन न नाटकृद् आका ङ्क्षति न च जनतैव तानि दिदृक्षते ।

संस्कृतरूपकेषु यथाविध समुत्कर्षशाली मनोऽभिरामोऽभिनयो विभाति तथाविध सम्भवत कुत्रापि न विलोक्यते। ईशवीयाब्दारम्भात् प्राक् अर्वाक् च अभिनयनृत्य-सगीतादिकलाशिक्षाप्रदायिनीना सस्थानामिह प्राचुर्यमासीत्। भरतस्य नाट्यशास्त्रमत्र प्रमाणम्। प्राचीनसमयेऽभिनयकला परोत्कर्षं श्रिता-सीत्। इहत्योऽभिनयो मनोविज्ञानाधारे च एनोऽस्ति। अग्निपुराणे नन्दिकेश्वरी यऽभिनयदर्पणे मन्दारमरन्दे चाभिनयकलाया विशद विवेचन विराजते—

उत्पादयन् सहृदय रसज्ञान निरन्तरम्।
अनुकर्तृस्थितो योऽर्थोऽभिनय सोऽभिधीयते॥
विभावयति यस्माच्च नानार्थान् हि प्रयोगत ।
शाखाङ्गोपाङ्गसयुक्तस्तस्मादभिनय स्मृत ॥

इत्यभिनयलक्षणमाकरग्रन्था उपस्थापयन्त आङ्गिकवाचिकाहार्यादिचतु-र्णामप्यभिनयाना वर्णन विदधतोऽवाप्यन्ते।

"आस्यनालम्बयेद् गीत हस्तेनार्थं प्रदर्शयेत्।'

इत्यादिश्लोको हि आङ्गिकाभिनयमधिकृत्य कियन्मधुरमुपदिशति एवमेव—

यतो हस्तस्ततो दृष्टिर्यतो दृष्टिस्ततो मन ।
यतो मनस्ततो भावो यतो भावस्ततो रस ॥

इत्येतत् पद्य च अभिनयस्य रसोन्मेषकर्तां कियत्या मनोज्ञया रीत्योप-पादयति।

भारतीयस्य अभिनयस्य एषा चर्चा पुरातनस्य भारतस्य कलानुरागिता प्रकाशय तीं संस्कृतनाटकस्य तामुत्कृष्टता निदधाति यामद्यतनानि नाटकानि अद्यपर्यन्त नाधिगन्तुमशक्नन्। चिरकाल सञ्जातस्तदैव संस्कृतनाटकानि सर्वाङ्ग पूर्णानि दृष्टान्यभवन्। नासीत् तदीय किमप्यङ्ग न्यून वा कद्रूपम्। तेषा मविधे कान्ता प्रेक्षागृहा पेशलो रङ्गमञ्च, ललितो वेशविन्यास, भास्वराणि भूषणानि अन्यश्च समग्रो नाट्यपरिच्छद प्राचुर्येण प्राबल्येन च व्यराजन्त। भरतकृते नाट्यशास्त्रे द्वितीयेऽध्याये हि एतद्विषयक उल्लेख समवाप्यते।

संस्कृतनाटकानि सार्वजनीनसंस्कृते प्रचारकाणि सन्ति। तानि तस्या मन्देश सर्वत प्रसारयन्ति। तानि विश्व भारतीयां संस्कृतिं प्रति सततमावर्जय-

त्येव संलक्ष्यन्ते । वस्तुतस्तत्र धर्मकामयोः, धर्मार्थयोः, प्रणय-कर्त्तव्ययोः, स्वार्थ-परमार्थयोः समस्या साधु समाहिता सन्ति ।

"धर्मार्थकामाः सममेव सेव्या यो ह्येकसक्तः स जनो जघन्यः"

इत्येतदस्ति तेषां मतं महीयः ।

अनासक्तिविभाविता पुरुषार्थान्विता वरिवस्या, समन्वयकारिणी च मनोज्ञा भारतीयसंस्कृतेर्मानदण्डः । संस्कृतकवयः स्वेषु रूपकेषु तत्प्रतिपादनं नितरां प्रीतिपूर्वकं विधाय विविधपरिस्थितिवीचीविघ्नमि तरन्तीं मानवस्य मानसतरणिं चित्रयन्ति । कामवासनाया का हानिः ? अर्थस्य कापेक्षा ? का च तन्महत्ता ? इत्यादिकं सर्वमपि ते समीचीनतया समादर्शयन्ति । मानवजीवनमुन्नेतुं निर्वोढुञ्च तद् तेषामध्यवसायः सततं दृष्टो भवति ।

मानवस्य मानसं कदापि धर्मं, कदापि च अर्थं आवर्जयति । धर्मेणाकृष्टो भूत्वा मनुष्यः किं किं न दुष्करं वहति । प्रणयेन अर्थेन वा कामेन आकृष्टे भूत्वा कानि कानि च गर्हणीयानि कृत्यानि अनुष्ठातुमात्मानं नियोजयन्ति— इत्येतत् सर्वं रूपकेषु सम्यग् दर्श्यते ।

ज्ञान-कर्म-भक्तीनां मानवस्य मध्येव समारः सुसमीक्ष्यते—इत्यत्र संस्कृत-रूपकाणामास्था अविचला । संस्कृतरूपकाणि शिक्षयन्ति यत् स्वच्छन्दप्रवृत्तिरञ्च प्रेम न परिणामे हितावहम् । कर्त्तव्यस्य अधिकारं जीवयति । धर्मोऽविरुद्धश्च कामः श्रेयस्करः ।

दाम्पत्यप्रणयस्य विशुद्धमुदात्तं च रूपं संस्कृतरूपकेषु दृश्यते—

"व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥"

इत्यादिषु पद्येषु पवित्रप्रणयस्य निरवद्या आभा सुस्पष्टमेव परिलक्ष्यते । अभिज्ञानशाकुन्तले नाटके प्रेयसः श्रेयसश्च सम्बन्धं कविना मधुरं प्रदर्शितम् । शकुन्तला समुपस्थितं श्रेयोऽवज्ञाय दवीयसि प्रेयसि प्रीयते । तदुदर्कं च सन्तापमेव अश्नुते । अनार्जिता सभायां सा अवधूयते । वस्तुतः संस्कृतरूपकस्य दृष्टिः सर्वदैव शुद्धाचारमभिनन्दति । अनेनैव वैशिष्ट्येन नोपदर्शितं तदपि तु

अन्यैरपि वैशिष्ट्यैस्तदलङ्कृतमस्ति। तत् शब्दानां सौष्ठवे, अर्थानां गाम्भीर्ये, भाषाया लालित्ये, वर्णनस्य वैशद्ये, वस्तूनां चारुतया सन्निवेशने, भावानां च अभिव्यञ्जने विश्वस्य नाटकेषु श्रेष्ठम्। सर्वविधसुन्दरतायास्वादेव 'काव्येषु नाटकं रम्यं तत्रापि च शकुन्तला'—इत्येतद् प्रशस्तिश्रीलाभस्य सौभाग्यमुपभुनक्ति।

इत्थं हि संस्कृतनाटकानि स्वसिद्धान्तरचकत्वादनवद्यान्येव सिद्ध्यन्ति।

सुललिताभिनयैः समलङ्कृता
रुचिरभारतसंस्कृतिभूषिता।
स्मृतिपुराणविचारविभाविता
जयति संस्कृतनाटकमद्भुता॥



( २४ )

## भासो हासः

भरतविहितस्य नाट्यशास्त्रस्याध्ययनेनैतद् विदितं भवति यदस्मदीये भारतवर्षे दृश्यकाव्यानां प्रणयनस्य व्यसनं कविषु नितान्तं पुरातनमास्ते। परं नाट्यशास्त्राद् दृश्यकाव्यस्य यावती प्राचीनता सिद्ध्यति तदनुसारेण तावन्ति पुरातनानि रूपकाणि साम्प्रतं नोपलब्धानि जायन्ते। नाट्यशास्त्रे ययोः सुरविजय लक्ष्मीस्वयंवरनामधेययोर्नाटकयोरुल्लेखो दृश्यते तन्नाटकद्वयं, पाणिनिकृताष्टाध्याय्यां 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः', 'कर्मन्दकृशाश्वादिनिः' इत्येताभ्यां पठिताभ्यां सूत्राभ्यां यासां नाट्यसम्बन्धिनीनां कृतीनां सङ्केतः संलभ्यते ताः कृतयः; कंसवध बलिबन्धाख्ययोर्ययोर्द्वयोः रूपकयोः पतञ्जलिः स्वकीये महाभाष्ये स्मरणं विदधानः प्राप्यते ते रूपके, वात्स्यायनः स्वकीये कामसूत्रे येषां कुशीलवाभिनीतानां नाटकानां निर्देशं विदधाति, तानि नाटकानि, कालिदासप्रतिस्पर्धिनां सौमिल्लक-कविपुत्रादीनां च प्रबन्धाः कुतः सम्प्रति सम्प्राप्यन्ते। अत्र त्वनुसन्धानात्मकात् प्रयत्नात् यानि रूपकाणि अनुसंहितानि सन्ति तेषु प्राचीनतराणि भासस्यैव रूपकाणि गण्यन्ते। तस्मादिदानीन्तनोऽध्येता भासमेव आद्यसंस्कृतनाटककर्तृत्वेनाग्रगणयति। मालविकाग्निमित्रे कालिदासेन संस्मर्यमाणत्वाद् भासस्य कालिदासात् प्राचीनतरत्वं सिद्ध्यत्येव। कालिदासात् प्राग् योऽयं भासो भारतभुवं भूषयामास तस्य कालिदासस्येव जीवन-कालमधिकृत्य तु नेदानीं कोऽपि विवादः प्रवर्तते परं यानि त्रयोदश रूपकाणि रूपककारस्यास्य प्रथितानि सन्ति तानि लक्ष्यीकृत्य तु विकटो विवादः प्रवर्तमानोऽस्ति। महामहोपाध्याया गणपतिशास्त्रिणोऽसन्दिग्धतयैव तानि त्रयोदशापि रूपकाणि भासस्यैव कृतित्वेनाभ्युपगच्छन्ति परं सन्दिहानानामभिमतमेतद् यन्नाटकेषु तेषु केवलं स्वप्नवासवदत्तं नाम नाटकं भासप्रणीतं वर्तते। ते स्वकथनपक्षे राजशेखरस्य—

"भास-नाटकचक्रेऽपि च्छेकैः क्षिप्ते परीक्षितुम्।
स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः"॥

इत्येतं श्लोकं निधाय स्वमतं परिपुष्णन्ति। त इदमप्याहुर्यत् अभिनवगुप्ताचार्येणापि अभिनवभारत्यां हेतस्यैव रूपकस्योल्लेखः कृतो नान्यस्येति।

"तानि त्रयोदशापि रूपकाणि न भासकृतानि सन्ति। तेषां रूपकाणां कतिपय एव अंशास्तद्रचिता: प्रतीयन्ते। ज्ञायते यत् कोऽपि केरलवासी कविर्भासप्रणीतान् अंशान् पिपर्तिस्म डॉक्टर बार्नेटोऽपि भासं त्रयोदशानामपि रूपकाणां कर्तृत्वेन न स्वीकुरुते। सिल्वन लेवी नाम फ्रांसीय प्रधी स्वप्नवासवदत्तं नाम रूपकमपि भासकृतं न मन्यते। तत्र कारणमिदं यत् सम्प्रति यत्स्वप्नवासवदत्तं नाम रूपकमाप्यते तत्र स श्लोको नोपलभ्यते यं श्लोकमाधारीकृत्य द्वादशशताब्दीसम्भूतो नाट्यदर्पणकारो रामचन्द्रस्तस्य भासकर्तृतामङ्गीकुरुते। एषां समायाहानां मध्ये केचन तु विश्वसन्ति यत् 'मत्तविलास प्रहसनरचयिता युवराजो महेन्द्रविक्रम दिवा आश्चर्यचूडामणे प्रणेता शीलभद्र इमानि रूपकाणि रचयाम्बभूव। इत्थं रूपकाण्येतान्युद्दिश्य महद् वैमत्यमेव श्रूयते। परमेवविधानां वादानां प्रत्याख्यानं ये विदधति तेषामपि संख्या किन्न युक्त्यो हि सन्ति बलीयस्यः। इदानीन्तनानां पर्यालोचकानां मध्ये भूयिष्ठाः पर्यालोचका त्रयोदशानामपि रूपकाणां कर्ता भास एवेति भाषन्ते। ते तेषां भासकर्तृत्वपक्षे अधोनिर्दिष्टान् विचारान् उपन्यस्यन्ति—

१. नाट्यशास्त्रानुसारनिर्मितनाटकानां प्रारम्भिकभूमिका 'प्रस्तावना' इति कथ्यते परमेषु नाटकेषु 'प्रस्तावना' इत्येतस्य शब्दस्य प्रयोगो न कृतः अपि तु 'आमुखम्' इत्येतत् पदं प्रयुक्तं दृश्यते। न तत्र नाटकस्य न च कवेरेव नाम्नो निर्देशः प्राप्यते—एषा विलक्षणता शास्त्रीयपरम्पराया प्रचलनात् प्रागवर्तिन्येव वस्तुनोऽस्ति।

२. नाटकेषु प्रारम्भो भावशेनोपक्रमेण कृतस्नाशौनैवे पक्रमेण तत्र स्मरणमपि कृत दृश्यते। बहुषु च नाटकेषु आदौ मुद्रालङ्कारेण पात्राणामभिधानं विहितमस्ति। सर्वेषु च नाटकेषु 'इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः' इत्येतदेव किंवा इत्येतत्सदृशं भरतवाक्यं दृष्टं भवति।

३ राजशेखरो भासकृतेषु नाटकेषु स्वप्नवासवदत्तं नाम नाटकं श्रेष्ठमिति यदवोचत तस्य तदभिधानमुपलब्धं नाटकं स्वेन संविधानेन स्पष्टतः परिपुष्णाति।

४. प्राचीना ग्रन्थकारा क्वचिदेतेषां नाटकानां नामानि सङ्केतयन्तः क्वचिच्च तदीयान् श्लोकान् कांश्चन उद्धरन्तोऽवलोक्यन्ते। आलङ्कारिको भामहः प्रतिज्ञायौगन्धरायणनाटकस्य मूलकथामेव न सविस्तरमालोचयाञ्चकार अपितु तत्रत्यमेकं प्राकृतपद्यमपि संस्कृतभाषायामुद्धृतञ्चकार। दण्डी 'लिम्पतीव तमोऽङ्गानि' इत्येतस्मिन् श्लोके विद्यमानस्यालंकारस्य मीमांसां सपाण्डित्यं कुर्वाणो दृश्यते। उक्तश्च श्लोको बालचरिते चारुदत्ते च समुपलभ्यते।

५ आचार्योऽभिनवगुप्तः स्वप्नवासवदत्तं नामग्राहं कीर्तयन् किञ्च तस्यैकं पद्यमपि उद्धरन् समवाप्यते अभिनवभारत्या 'क्वचित् क्रीडा यथा स्वप्नवासवदत्तायाम्' इत्यभिधाय निर्देशो य आचरितः स मुद्रितग्रन्थस्याङ्के द्वितीयस्मिन् नाट्यनिर्देशे प्राप्तो भवति। लोचने हि स्वप्नवासवदत्तस्य श्लोक एष उद्धृतो विद्यते—

सञ्चितपक्ष्मकपाटं नयनद्वारं स्वरूपतोऽनेन।
उद्घाट्य सा प्रविष्टा हृदयगृहं मे नृपतनूजा॥

एष श्लोको मुद्रिते ग्रन्थे नाप्यते परं सम्भवमिदं यदेतत्पद्यमभिनवगुप्तसमये मूलग्रन्थे स्थितं स्यात्।

६. एषु नाटकेषु बहवोऽपाणिनीयाश्च प्रयोगाः प्राप्यन्ते। एतेन एतेषां नाटकानां प्राचीनता सिद्धा जायते। प्राकृतभाषा च या तत्र प्रयुक्तास्ति सापि कालिदासपाटप्राग्वर्तिनी प्रतीयते।

७. भरतकृतनाट्यशास्त्रस्य सिद्धान्तानां कृत्स्नतया अननुगमनं निर्विवादमपि दृश्यानां रङ्गमञ्चेऽभिनयनं च तं युगं सङ्केतयतो यदा भरतस्य नाट्यशास्त्रं पूर्णतयः प्रतिष्ठां न लब्धुं शशाक।

एवञ्च सर्वं विवेचनं नाटकानामेतेषां भासकर्तृत्वं प्राचीनतरत्वञ्च प्रथयति।

भासस्य सन्तीमानि रूपकाणि—

१ स्वप्नवासवदत्तम्, २ प्रतिमा, ३ प्रतिज्ञायौगन्धरायणम्, ४ पञ्चरात्रम्, ५ मध्यमव्यायोगम्, ६ दूतवाक्यम्, ७ दूतघटोत्कचम्, ८ कर्णभारम्, ९ ऊरुभङ्गम्, १० अविमारकम्, ११ अभिषेकम्, १२ बालचरितम्, १३ चारुदत्तम्।

भास स्वनाटकानां कृते कथावस्तु विविधेभ्यः क्षेत्रेभ्यः संजग्राह। तदीयेयं प्रवृत्तिस्तस्य प्रतिभाया मौलिकतामभिव्यनक्ति। तत्र नाट्यकौशलमपि प्रशंसनीयं परं तदीयं तन्नाट्यकौशलं सकलेष्वपि रूपकेषु न समभावेन स्थितमवाप्यते।

येषां नाटकानां कथावस्तु रामायणाद् गृहीतं वर्तते तेषां कथा-सविधानं हि अति-श्लथ दृश्यते। येषु च रूपकेषु महाभारतीयं कथावस्तु स्वीकृतं विद्यते तत्रत्या तदीया नाट्यविदग्धता कथाविधानप्रवीणता च वस्तुतः प्रशस्ततरा श्लाघ्यतरा च शोभते। तत्र तदीयायाः प्रतिभायाः समुज्ज्वलता सम्यग् दृष्टा भवति। इदं चेदत्राभिहितं भवेत् तदौचित्यमेव नितान्तं स्यात् यत् स तेषु रूपकेषु श्लाघनीय-तरामेव सफलतामधिजगाम येषु राज्ञ उदयनस्य कथा गीतास्ति। स्वप्नवासव-दत्तप्रतिज्ञायौगन्धरायणयोः श्रेष्ठत्वे कारणमुदयनगाथैव। तत्कारणात् भासो विद्वज्जगति परामेव प्रियतामविन्दत। कवी रामायणकथां परिगृह्य ययोः प्रतिमा-भिषेकयोः प्रणयनं चकार तत्र कृतानि परिवर्तनानि न सन्ति महत्त्वपूर्णानि, वालिसुग्रीवयोः सकृदेव युद्धे प्रवर्तनं कारणमन्तरैव रामस्य वालि निग्रहणं तारा-विलापस्यानुल्लेखनञ्च वस्तुतस्तु न किमपि कौतूहलं जनयन्ति वर्धयन्ति वा। प्रतिमायां कृता मौलिक्य उद्भावना सन्ति हृदयावर्जिन्य। इक्ष्वाकुवंश्यानां महीपानां येषां दिवङ्गतत्वात् देवायतनेषु प्रतिमा प्रतिष्ठापितास्तेषु भूपस्य दश-रथस्य प्रतिमायाः प्रतिष्ठापनं, रामस्य कुशलतायाः अवगमनाय सुमन्त्रस्य वनम्प्रति प्रस्थानम्, आश्रमागतस्य दशवदनस्य रामकृतमातिथ्यम्, रावणस्य पौरोहित्ये रामस्य पितृश्राद्धाचरणम्, राम-साहाय्याय भरतस्य लङ्कागमनविनिश्चयः, लङ्कातो निवृत्तस्य सीतालक्ष्मणसहितस्य रामस्य दर्शनाय मातृ-पौरादिभिः सह भरतस्य कान्तारगमनमित्येतानि परिवर्तनानि नूनं कविकल्पनाप्रसूतान्येव सन्ति। अवश्यमेवैताः कल्पना मनोभिरामा। महाभारतीयकथात्मकेषु रूपकेषु कवी रुचिविशेष निदधानोऽवाप्यते। अत एव महाभारतकथाविषयकाणि रूपकाणि रामायणकथात्मकाभ्यां रूपकाभ्यां रम्यतराणि।

मध्यमव्यायोगे दूतघटोत्कचे च इतिवृत्ते कवि कतिपयनवकल्पना समुद्भा-वयन् वीक्ष्यते। मध्यमव्यायोगे भीमघटोत्कचयोर्द्वन्द्वयुद्धम् च अनभिज्ञातत्वाद् घटोत्कचेन भीमस्य हिडिम्बायाः सविधे गृहमागमनं नूनं कौतूहलावहम्। दूत-घटोत्कचे दुर्योधनघटोत्कचयोः सवादो वीररसमयोऽतश्चेतोहरो नितराम्। दूत-वाक्ये दुर्योधन-मानमर्दनपरस्य कृष्णस्य वीरवाणी नाटकीयसंवादस्य श्लाघ्या महनीया। ऊरुभङ्गे दुर्योधनस्य चरित्रचित्रणे कवि कमनीयामेव सफलतामवा-प्नुवन् लोचनगोचरीभवति। पञ्चरात्रे कविर्विराटपर्वसम्बन्धिनीं कथां स्वकीयया उत्कल्पनया नूतन एव रूपे परिवर्तयति। तत्र कथाया निर्वहणेऽसौ रुचिविशेषमेव

दर्शयामास। द्रोणेच्छया दुर्योधनस्य पाण्डवान् प्रति अर्धराज्यं प्रदातुं प्रत्याश्रवणम्, कौरवैः साकमभिमन्योः समरार्थमागमनं, भीमस्यायोधनमुवि अभिमन्योर्बन्दीकरणं कवेः कल्पनानां मनोरमाणि निदर्शनानि विभान्ति। बालचरिते यद्यपि कविना नवनवोहाः समुत्पादिताः परं तास्मिन् नाटके तस्मिन् कश्चिद् प्रमादो निपतितः।

अविमारकस्य कथावस्तु न रामायणीयं न च महाभारतीयम्। तत्तु कल्पनाप्रसूतं प्रेमाख्यानकम्। भावावेशस्तत्र क्वचित् क्वचिद् बलीयान् एव भूत्वा मन्तिष्ठते। चारुदत्तस्यापि कथावस्तु मरमम्। चारुदत्तवसन्तसेनयोः प्रणयबन्धनं यत् कविरवानारयत् तदनितरामेव दर्शकमानमानि प्रीणानि।

प्रतिज्ञायौगन्धरायणे यौगन्धरायणस्य स्वामिभक्तं चरित्रं नितान्तमेव मनो मोदयते। यौगन्धरायणेः महासेनस्य बन्दिगृहादुदयनस्योन्मोचनाय उदयनेन सह वासवदत्तायाः परिणयनाय च यां नीतिमवलम्बते सा भृशं स्तुत्या। कवेरेतत् सकलं विधानं तु मनोरममस्त्येव परं महासेनस्य राजनिकेतनदृश्यमपि न केनापि प्रकारेण न्यूनम्। तदपि स्वीयेन सौन्दर्येण सर्वेषां चेतांसि चोरयति एवमेव तृतीयस्मिन् अङ्के विदूषकोन्मत्तकयोश्च संलापोऽपि श्रवणीय एव संवृत्तः। स्वप्नवासवदत्ते पूर्णतयैव प्रभावात्मकता परिस्पन्दमानास्ति। तत्र उदयनवासवदत्तापद्मावतीनां यच्चरित्रं चित्रितं तत्तु सर्वथैव सुन्दरम्। वस्तुतः कविरेतस्य रूपकस्य प्रणयने यादृशीं सफलतां प्रपेदे न तादृशीमन्यत्र। स्वप्नवासवदत्तं न केवलं भासकृतेषु नाटकेष्वेवोत्तममपि तु तत् नाटकजगत्यपि श्रेष्ठेषु नाटकेषु अन्यतमं श्रेष्ठं नाटकम्।

कर्णभारनाटकं यद्यपि साधारणमेव परं तत्र कर्णस्य दानशीलता कविना स्फुटितैव समारम्भेण समुपस्थापिता।

नाटककारस्य भासस्य वैशिष्ट्यमिदं यत् तदीयं कवित्वं नाटकीयतां भृशमुपकुरुते। तदीयानि पद्यानि नाटकीयं घटनाचक्रं गतिशीलं विधत्ते। नाटकेषु यादृशः संवादोऽपेक्ष्यते तादृश एव संवादस्तत्र कविना कुशलतया प्रनिबद्धः। तत्रत्या भाषा तदनुगुणा सर्वभावेन। श्लोकानां सन्दर्भानुरूपा भावात्मकता नाटकेषु प्रभावस्य सञ्चारणे सफलतापूर्वकं यथैव संवृत्तास्ति। वस्तुतो हि कवेर्नाट्यप्रणयनचातुरी किमपि लोकोत्तरं सौष्ठवमवगाहते। तस्य भावमयमना हृदयग्राहिणी विषयाभिव्यञ्जनप्रकारो निरतिशयचमत्कार[illegible]।

"कामेनोज्जयिनीं गते मयि तदा कामप्यवस्थां गते
दृष्ट्वा स्वैरमवन्तिराजतनयां पञ्चेषवः पातिताः ।
तैरद्यापि सशल्यमेव हृदयं भूयश्च विद्धा वयं
पञ्चेषुर्मदनो यदा कथमयं षष्ठः शरः पातितः ॥"

इत्येवंविधाः सरलसरलाः प्रसादप्रसन्ना नाट्यसौन्दर्यसंवर्धनपरा सर्व एव श्लोका भासस्य कृतिषु समोदं क्रीडन्त प्रेक्ष्यन्ते । श्रवणमात्रेण कवेः श्लोकाः समस्ता विदितार्था भवन्ति । तदर्थावधारणे न मनागपि प्रत्यूह समुपस्थितो भवति । दर्शक श्रोता वा श्रव्यकाव्ये तु अर्थस्यावगमनमार्गे समुपस्थितं प्रत्यवायं सोढु शक्नुते परं दृश्यकाव्ये न कदापि । दृश्यकाव्यस्य काव्यत्वं तु तदेवोत्तमत्वेन मत जायते यदविलम्बमेव समर्थमवगमयितु प्रभविष्णु सोभवीति यो हि अभिनेतुरभिलषित. । कवेर्भासस्य श्लोका. सर्वत्रैव तद्विधा. प्राप्ता भवन्ति यद्विधा नाटकेषु आकाङ्क्ष्यन्ते । संस्कृतनाटककारेषु कालिदास एव भासमतिशेते । तस्य नाटकेषु कविता नाट्यश्रियं येनावदातेन विधिना परिपुष्णाति स विधिर्नितान्तमेवाभिनन्दनीयस्तस्मात् कारणात् कालिदास इव न कोऽपि कदाचित् श्रेष्ठो नाटककार । पर नाटकेषु कीदृशी भाषा कीदृशा श्लोका कीदृशा. संवादाः सन्निवेशनीया इत्येतद्विषयिणीं कलां कालिदास स्वप्राग्वर्तिभ्यो भासप्रभृतिकविभ्य एव परिजग्राहेति प्रतिभाति न । भवभूतिर्महान् नाटककार इत्यत्र न संशय परं तदीयं कवित्वं श्रव्यकाव्यानुरूपं यावदस्ति न तावद् दृश्यकाव्यानुकूलमतो भास स्वकीयै नाटकस्थितै श्लोकैः प्राचुर्येण सहृदयानां हृदयानि रमयतीति मन्ये ।

भासस्य तु रूपकाणि विलोक्य स्वान्तं तस्यैवमेव प्रत्ययमिमं प्रपद्यते यद् रूपकाणीमानि रूपकाणामेव समुत्पादनाय सृष्टान्यभवन् न चान्येन केनापि प्रयोजनेन । रूपकस्रष्टृत्वात् तस्य, तदीया गद्यमयी पद्यमयी च रचना सर्वत्र मानवमानसमनायासेन नन्दयति ।

विस्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्ययाद्,
वृक्षाः पुष्पफलैः समृद्धविटपाः सर्वे दयारक्षिताः ।
भूयिष्ठं कपिलानि गोकुलधनान्यक्षेत्रवत्यो दिशो,
निःसन्दिग्धमिदं तपोवनमयं धूमो हि बह्वाश्रयः ॥

अत्र यद्यपि सन्ति समासा परं न ते अर्थबोधनमार्गे नाटकदृष्टु पुरः प्रत्यूहकणमपि उपस्थापयन्ति ।

अधो य श्लोक समुद्ध्रियते तत्र प्रयुक्तोपमा कवेर्मनोविज्ञानविषयिणी उहा प्रतिलक्ष्यते किञ्च तदीया मधुरता बिल्हणस्य चौरपञ्चाशिकां स्मारयति—

अद्यापि हस्तिकर शीकर-शीतलाङ्गीं
बाला भयाकुलविलोल विशालनेत्राम् ।
स्वप्नेषु नित्यमुपलभ्य पुनर्विबोधे
जातिस्मर प्रथमजातिमिव स्मरामि ॥

( अविमारकम् )

इह चौरपञ्चाशिकातोऽपि श्लोक उद्ध्रियते येनोभयोरपि पद्ययोर्मध्ये समानभावेन निगमन्ती मधुरता आस्वादविषया भवेत्—

अद्यापि तामविगणय्य कृतापराध
या पादमूलपतित सहसा गलन्तीं
वस्त्राञ्चल मम कराद्विनमाक्षिपन्तीं
मामेतिरोषपरुष ब्रुवतीं स्मरामि ॥

भासस्य संवादा भवन्ति श्रवणीया । नैसर्गिकतालिङ्गितत्वात् प्रवाहपूर्णभाषाश्रितत्वाच्च तेषा, ते श्रोतृणा मनांसि भृशं प्रीणन्ति—

दुर्योधन —कथ कथ दायाद्यमिति,

वने पितृव्यो मृगया प्रसङ्गत कृतापराधो मुनिशापमाप्तवान् ।
तदा प्रभृत्येव स दारनिःस्पृह परात्मजानां पितृता कथं व्रजेत् ॥

वासुदेव—पुराविद भवन्त पृच्छामि—

विचित्रवीर्यो विषयी विपत्ति क्षयेण यात पुनरम्बिकायाम् ।
व्यासेन जातो धृतराष्ट्र एष लभेत राज्य जनक कथ ते ॥

भासो मानव हृदय विकारावबोधने परमप्रवीणतामधिगच्छति । बाह्यप्रकृतिवर्णनपटुतापि तत्र ललिता वीक्षिता भवति । अलङ्कारेषु स उपमायां स्वभावोक्त्यां च नितरा स्नेह निदधानश्च प्रतिलक्ष्यते । चरित्रचित्रणे तस्य कुशलता नितरामेव श्लाघनीया वर्तते । कवे इमे सर्वे गुणास्तस्य कृतिषु स्पष्टमेव विलोकिता भवन्ति । पद्यानि तदीयानि न शार्करमोदकानि इव । तानि तु सन्ति

भासस्य नाटकेषु मानवजीवनस्य विविधानि बहूनि च चित्राणि दृग्गतानि भवन्ति। तस्मात् तदीयानि नाटकानि मानवलोकस्य कृते नितान्तमेव हितं सम्पादयन्ति। न तत्र वर्णनं प्रचुरमस्ति न च कथावस्त्वंवातिविस्तृतमस्ति अतस्तानि रङ्गमञ्चे सम्यग् अभिनेतुं योग्यानि सन्ति। सर्वत्र च तत्र नानारसानामुन्मीलनं दृश्यते। नाट्यकलादृष्ट्या न तेषु कोऽपि दोषो दृग्गतो भवति। तत्र वस्तु, नेता, रस इत्येतानि त्रीण्यपि तत्त्वानि मञ्जुलानि समुचितान्येव शोभन्ते।

भासं कविं कालिदासः शूद्रकश्च विशेषतोऽनुचक्रतुः। कालिदासस्य भासस्य च रूपकेषु भावसाम्यं सविधानसादृश्यं च पर्याप्तमवाप्येते। शूद्रको मृच्छकटिकप्रणेता भासस्य चारुदत्तमधिधियत्। तदीयं मृच्छकटिकं चारुदत्तस्यैव बृहत्तरं रूपमस्ति।

यदा वयं शाकुन्तले चतुर्थेऽङ्के वृक्षलतादिकं प्रति शकुन्तलायाः कोमलान् भावान् ईक्षामहे तदा स सन्दर्भो भासस्य अभिषेकनाटकीयं तं सन्दर्भं संस्मारयति यो हि मन्दोदरी भावभङ्गिभिर्विभूष्यमाणोऽस्ति। स्वप्नवासवदत्तस्य 'विस्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्यया।' इत्येतद्विधा पङ्क्तय शाकुन्तलस्य 'विश्रामोपगमादभिन्नगतय शब्दं सहन्ते मृगा' इत्येतादृशी पङ्क्ती सानन्दं स्मृतिपथे समारोपयन्ति। इत्थं भासकालिदासयो रूपकाणि परस्परं भावे सविधाने च सान्द्रं साम्यं निदधानानि प्रायेण दृग्गोचरीभवन्ति।

वस्तुतो भासो रूपककारेषु हि धनिद्युतीनेव श्रियं बिभ्राणो शोभतेतराम्। तदुद्दिश्य सत्यमेवोक्तम्—

"सुविभक्तमुखाद्यङ्गैर्व्यक्तलक्षणवृत्तिभि।
परेतोऽपि स्थितो भास शरीरैरिव नाटकै॥"

( २५ )

## कालिदासः

किन्तु परःसहस्रेष्वप्यनेकयुगव्यापिनि संस्कृतवाङ्मये सत्स्वपि काव्येषु या संख्याऽवशिष्यते सापि नाल्पविस्तारा। तस्यां विशालायां संख्यायां विद्योतमानानि सर्वाण्यपि काव्यानि रसमयीकरणीयतानि पर्यवलोक्यन्ते। न तेषु एकतममपि काव्यमेतादृशं यस्य साहित्यिकं महत्त्वं साहित्यसंसारे न स्यात्। कस्मिंश्चित् काव्ये चेत् शब्दानां रमणीयता प्राधान्येन परिस्फुरति तदन्यस्मिन् शब्दार्थयोरुभयोरपि लोकभावनं पावनं स्वरूपं परिलसति, क्वापि भावानां मधुरता विभाति तु क्वापि चारुचमत्कृतता क्रीडन्ति यदि क्वचित् दुर्बोधानां क्लिष्टक्लिष्टानां पदानां पुञ्जता प्रत्युहति तु क्वचित् अलङ्काराणां प्रौढप्रभावाद्भुता वितनुते, कस्मिंश्चिद् यदि गम्भीरा वाग्मिता प्रोल्लसति स्फारस्मेरा तु कस्मिंश्चिदन्यैव कापि दिव्या लक्ष्मीर्विलसति। तदेवं हि सर्वाण्यपि काव्यानि समस्यदुष्प्राप्यतुल्यनीयानि च प्रायेण। तेषां सर्वेषामपि काव्यानां मध्ये कालिदासकृतानि काव्यानि स्वकीयानन्यतुल्यवैशिष्ट्येन सर्वाण्यसमर्द्धविजयिना गुणनिकुरम्बमहिम्ना नैजनिखिललोकरञ्जनकुशलेन प्रकारेण च श्रेष्ठानि सन्ति। इदमेवं कारणं यत् समग्रमपि जगत् कविकुलशेखरं कालिदासं—

> "पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासः।
> अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव॥"
>
> "पुष्पेषु जाती नगरीषु काञ्ची
> नारीषु रम्भा पुरुषेषु विष्णुः।
> नदीषु गङ्गा क्षितिपेषु रामः
> काव्येषु माघः कविकालिदासः॥"

इत्यादिसहस्रशोभामयैर्वचनैरहर्निशं प्रशंसन्नश्रान्ततयाकर्णयन्ते। कस्मात् कारणात् कालिदासः प्रभूततमां लोकप्रियतां भजते कस्माच्च कारणात् स एव सर्वमान्यानधिगतकीर्तिमाननुगत इत्येतदस्ति विचारणीयमेव। अपि किं पाठक

कालिदासो विद्वान् आसीत्, न तादृक् कविषु कश्चिदपि विद्वान् आसीत्, किं स एव नानाशास्त्रपारावारीणो बभूव, न कवीनां मध्ये कश्चिदन्यः कविर्नानाशास्त्र निष्णातः सञ्जातः ? वस्तुस्थितिरेषा न, कालिदासादपि विदुषो विद्वत्तरा किञ्च नानाशास्त्रेषु गम्भीरतरां निष्णाततां निदधाना कवयोऽन्ये बहवो विलोक्यन्ते। त सर्वे एव स्वकीय वैदुष्यप्रतापमेव लोके आरोपयितुं प्रयतमाना प्राप्यन्ते, प्रायेण तेषु भूयिष्ठा जन-समाजे स्वीयं प्रभावमेव विशेषेण संस्थापयितुमुत्सुका लभ्यन्ते न ते जनताया सविधे प्रयाय तया सह स्थातुं भोक्तुं पातुं गातुं वक्तुं हसितुं विलपितुं शयितुं जागरीतुं च स्वमानसे उत्कटां कामनां निदधाना अधिगम्यन्ते। ते सरलायां सुबोधायां गिरायां स्वं भावं जनवृन्दस्य पुरतः स्थापयितुं न चेष्टमाना वीक्ष्यन्ते, तेषां कथनस्याभिव्यक्तिर्न साधारणजनसमुदायं प्रति सम्मानभावनां निदधाति, ते एतादृशीं रचनां समुपन्यस्यन्ति या मानवानां मस्तिष्के तु स्वकीयमाश्चर्यकरं प्रभावं समारोपयति परं न तेषां हृदये स्वीयां स्मीयतां बिन्दुमपि धरति, ते लोकस्य तु बुद्धितत्त्वमावर्जयितुमभिलषन्ति परं हृदयतत्त्वं मनागेव अथवा अल्पमेव स्पृशन्ति—इत्यादीनि सन्ति कारणानि बहूनि यद्वशात् न ते तद् यशस्तां श्लाघां तां प्रतिष्ठाञ्च गाहमाना दृष्टा भवन्ति यद् यशो या श्लाघा याञ्च प्रतिष्ठां कालिदासो विन्दमानो वीक्ष्यते। कालिदास सम्पारं सेवितुं जनुर्जग्राह। स स्वकीयानि काव्यानि सर्वेषामेव कृते—बुधवराणां अबुधानाञ्च कृते—ससर्ज। स स्वकीयवैदुष्यस्य प्रतिष्ठापनाय काव्यानि न चकार स तु लोकाराधनाय—लोक कल्याणाचरणाय—नैजरचनां रचयामास। स तां भाषां प्रयुयोज या जनताया विद्वन्मालाया —उभयो —अपि मानसमावर्जयति। स जनताया सकाशे स्वीयं विद्वत्तेजोऽसह्यं वितनितुं न गतः अपि तु स 'अहं तवैव' इत्येतामात्मीयतां निधातुमुपस्थितोऽभवत्। तस्य भावाभिव्यक्त्याः मधुरता सरलता निरभिमानभावो हृदयाकर्षणनैपुणी च विराजन्ते—इत्यादीन्यनेकानि सन्ति कारणान्येवविधानि यद्धेतो स —

"अस्पृष्टदोषा नलिनीव दृष्टा हारावलीव ग्रथिता गुणौघैः।
प्रियाङ्कपालीव विमर्दहृद्या न कालिदासादपरस्य वाणी॥"

इत्यादिप्राज्यप्रशंसानां स्पृहणीयानां समन्तात् सौभाग्यमुपभुनक्ति।

वस्तुतो न शब्दानामाडम्बरो, न चित्रता, नालङ्कारप्रचुरता, न वर्णनानामतिशयविस्तारो न दुर्बोधा वाक्यावली, न समासानां भूयस्कता न कठोरा

ऊह्या, न च वाचकवाच्यविषयिणी पीनतैव काव्यत्वमादधाति परं तदास्वादनस्य कारणमन्यदेव किमपि भवति । अत एव तु ध्वन्यालोककार आह—

"प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
यत् तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ।"

इयमुक्तिः कालिदासप्रभृतिकवीन् लक्ष्यीकृत्यैव निगदिता आनन्दवर्धनेन । कालिदासस्य काव्येषु नैतिकताया उज्ज्वलतमं रूपं, श्रेयःप्रेयसोः समीचीनः समन्वयः, आत्मतत्त्वस्य हृदयङ्गमं स्वरूपं, जीवननिर्माणकारिणामाचाराणां दिव्यैव धारा सर्वत्र उत्तरला भूत्वा प्रवहति । एवंविधवैशिष्ट्यविद्योतमानत्वात् तेषां, जगती यावन्मात्रायां तत्र रमते न तावन्मात्रायां सा भारविभवभूति-माघश्रीहर्षादीनां कवितायाम् ।

अस्मदीयस्यैतस्योद्गारस्यायं भावो न कदापि यद् भारविभवभूतिप्रभृतीनां कवीनां काव्येषु माधुर्यसौन्दर्ययोः श्रीनं शोभते तथापि सा मन्दमेव विभ्राजते परं तस्या उद्भावनाय यादृशी नैसर्गिकी भाषा कालिदासेन स्वीकृता अभिव्यक्ति-विधा यादृशी तेन शरत्पूर्णेन्दुचन्द्रिकेवाह्लादिनी समुज्ज्वलाऽविर्भाविता, प्रकृते-र्यादृशं समन्वयनात्मभावितमुपवर्णनं निरूपणं तेन विशदीकृतं भारतीयसंस्कृतेस्त-दीयभाण्डागारपरम्परायाश्च चित्ताकर्षकं यादृशं मधुरमुन्मीलनं तेनाभिनीतं, गुणरीतिवृत्त्यलङ्कारादीनां सम्भारो यादृशोचितया सीमया तेनोपात्तः स्पारेण परिमितेन च वाचानिचयेन यादृशं मनोमेघारञ्जनं शुचितरं वर्णनं तेन कृतं नान्यः कोऽपि कविस्तथाविधं तत्त्वं प्रदर्शयन् संलक्ष्यते ।

कालिदासस्य काव्येषु सञ्चरमाणा सुन्दरता याभिर्विशिष्टताभिः अन्येषां कवीनां काव्यगतानि सौन्दर्याणि अतिशेते ताः प्रदर्शयितुमिह प्रयासो विधीयते ।

महाकविः कालिदासो महाकाव्यद्वयं लिलेख कुमारसम्भवम्, रघुवंशञ्च । कुमारसम्भवं कालिदासस्य कलायाः सुन्दरसृष्टिरस्ति । मञ्जुलभावाभिव्यञ्जन-कारित्वादुदात्तभुक्तोत्प्रेक्षणकल्पनाकल्पितत्वात् प्राञ्जलपदविन्यासविलसितत्वाच्च काव्यं कुमारसम्भवनामकमिदं नितान्तं परिभ्राजते । कवेर्मर्मज्ञतायाः रूपं तत्र चारुतरं भवत् प्रेक्षकपथेऽवतरति । कामदहन—पार्वतीतपस्या—शिव-पार्वतीपरिणयप्रक्रिया-प्रसङ्गमूले वासनाजनितप्रेममधुरप्रेम्णः फलं दुःख—क्लेशपरम्परां विहाय नान्यद् किमपि । कामवासनानां दाहमन्तरेण पारमार्थिकप्रेमाधिगमनं न कदापि सम्भवद् ।

तपश्चर्ययैव मनसः शुद्धिर्भवति प्रेम्णि च परिनिष्ठितत्वमुपयाति इत्येष अमर सन्देशः कवेः समग्रमपि विषयप्रति प्रतिष्ठितस्तत्रास्ति ।

महाकाव्ये रघुवंशे दिलीपरघुप्रभृतीनां सूर्यवंशोद्भवानां नृपवराणां चरित्राणि चित्रीकृत्य कविर्देवेषु विप्रेषु गुरुजनेषु भक्तिभावं निधातुं गां सेवितुमतिथिं समानयितुं त्यागार्थं धनं समर्हीतुं लोकानुरञ्जनाय राज्यभारं वोढुं विजेतृषु स्वामित्वं स्थापयितुं जीवनमुन्नमयितुं योग-साधनयात्मानं द्रष्टुं च मानवसमाजमादिशति मस्नेदम् ।

कविः कालिदासो यद्यपि भावं चित्रयितुमिच्छति तं न स अभिधावृत्तिमाश्रित्य धनुमुत्सहते स तदर्थं सततं व्यञ्जनामेव परिपूजयन् दृग्गोचरीभवति गिरिसुतायाः लज्जाशीलतामाभ्यन्तरिकं प्रेम तस्या आनन्दातिरेकोपन्प्रवृत्तिञ्च स न शब्दैः प्रकटीकरोति तद्दिशि स सूक्ष्म मङ्गेन विधातुं व्यञ्जनामाश्रयति । 'लीलाकमलपत्राणि गणयामास पार्वती' इत्येवं परिमितशब्दावलिरेव सर्वं या व्यञ्जनया पार्वतीगतास्तान्, सर्वाननुपरिनिर्दिष्टान् गुणान् विन्दतया समुपस्थापयति ।

'क्षतात् किल त्रायत इत्युदग्रः' इत्यादिश्लोकस्थितैः कतिपयैरेव शब्दैः स "एकातपत्रं जगतः प्रभुत्वम्", "भूतानुकम्पा तव चेदियं गौः" इत्यादिश्लोकद्वये यत्किमपि प्रेक्ष तत्सर्वमेव व्यञ्जनया प्रतिवदन् समवाप्तो भवति ।

"वाच्यस्त्वया मद्वचनात् स राजा" इत्यादौ स 'राजा' 'श्रुतस्य', किञ्च 'कुलस्य' इत्यादानि विचतुराणि परमल्पुल्पपदानि एव प्रयुङ्क्ते परं तैरेव पदैः स "राज्ञः कर्तव्यं यत् स न्यायमाचरेत्, न तु क्वापि पक्षपातं दर्शयेत्, अहमपि तव प्रजानां मध्येऽस्मि, मयि यो दोष आरोपितः स वस्तुतो युक्तोऽयुक्तो वेति त्वया निश्चेतव्यस्ततस्त्वया दण्डनीय आरोपितदोषो जनः । त्वं तु जगति ज्ञानिनां विदुषां मध्ये गीयसे, त्वदीयन्तु तु सत्कुलं यस्मिन् सगरभगीरथदिलीपदशरथ-सदृशा विश्वविदितन्यायाः नृपाः समभवन्, एवं स्थिते कस्मात् त्वयाऽहं त्यज्ये किं त्वदीयैषा जनविरोधाञ्जनप्रवृत्तिर्दिशवर्गोत्तास्ति इत्यादिकं प्रचुरमधुरतर-भावान् व्यञ्जनयाभिव्यक्तीकुर्वन् उपलभ्यते । वस्तुत इह द्विश्रोदाहरणानामुपस्थापनं व्यर्थमेव । कवेस्तु काव्यानि सन्त्येव प्रारम्भादन्तपर्यन्तं व्यञ्जनाप्रधानायां भाषायामेव गीतानि सन्ति ।

कालिदासः शृङ्गारी कविः कविष्वस्ति । स प्रेमपर्युपासको महान् भावुक-हृदयवान् सौन्दर्यसेविषु शिरोमणिः कविरिति सर्वमपि जगज्जानाति । तस्य

दृष्टिः सौन्दर्यस्य कोमला भावना। मध्यगभिज्ञानायैव न, तत्प्रकटीकरणेऽपि सा पारमयोग्या। सौन्दर्यवर्णनेषु तदीयेषु तस्य सरस मन सञ्चरमाण केन न प्रेक्ष्यते? सम्ने यत् सौन्दर्यं बाह्यप्रकृत्यां रमते तदेवाभ्यन्तरिकयामपि प्रकृत्या क्रीडति। न बाह्य सौन्दर्यमाभ्यन्तरसौन्दर्याद् भिन्नम्। स्थान-भिन्नतावशय पर न परमार्थ-तस्त्र द्वैतता—इत्येतज्ज्ञापनार्थं कविना कालिदासेन स्वकीया लेखनी काव्य-रचनाया प्रवर्तिता—

"पुष्प प्रवालोपहित यदि स्याद् मुक्ताफलं वा स्फुटविद्रुमस्थम्।
ततोऽनुकुर्याद् विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुच स्मितस्य॥"
"आवर्जिता किञ्चिदिव स्तनाभ्या वासो वसाना तरुणार्करागम्।
पर्याप्तपुष्पस्तबकावनम्रा सञ्चारिणी पल्लविनी लतेव॥"

इत्यादिश्लोकै कवे सौन्दर्यभावनाया परिचय सरलतयैव जायते।

'मित च सार च वचो हि वाग्मिता' इत्येष गुण कालिदासे विशेषतया विराजते। माघ भवभूतिप्रभृतिकवय एत गुण विदधाना अपि उपेक्षन्ते तम्। ते तु वचन-विस्तार एव प्रसीदन्ति। पुरसुन्दरीणां वर्णनं कविकालिदासेन कृत माघेनापि कृतं पर द्वयोरपि वर्णने महान् भेदोऽवगम्यते। कालिदासस्य वर्णने व्यञ्जनाया श्री समवलोक्यते पर माघस्य वर्णने न। माघस्य वर्णनं विलासमय यदपि कालिदासस्य विलासविरहितमपि वर्णनं न जेतु पारयति—

"जालान्तरप्रेषितदृष्टिरन्या प्रस्थानभिन्ना न बबन्ध नीवीम्।
नाभिप्रविष्टाभरणप्रभेण हस्तेन तस्थाववलम्ब्य वास॥" (रघौ)
"वलयार्पितसङ्गोपलप्रभावबहुलीकृतप्रतनुरोमराजिना।
हरिवीक्षणाक्षणिकचक्षुषान्यया करपल्लवेन गलदम्बर दधे॥" (माघे)

कालिदासस्य गद्य सरलं समासाधिक्यरहित स्वाभाविकमाभाव्यञ्चिय परि-दधद् दृश्यते पर भवभूतेर्गद्ये एषा विशिष्टता न विद्यते, तद् कठिन समासबहुल-मस्वाभाविकञ्च भवति। दृश्यतां कालिदासगद्यम्—

"अयि आत्मगुणावमानिनि, क इदानीं शरीरनिर्वापयित्रीं शारदीं ज्योत्स्नां पटान्तेन वारयति।" (शाकु०)

सम्प्रति भवभूतेर्गद्यमीक्ष्यताम्—

"अहो दलत्प्रवनीलोत्पलश्यामलस्निग्धमसृणमांसलेन देहसौभाग्येन विस्मय-

सिनिमिततातहृदयमानसौम्यसुन्दरश्रीरनादरखण्डितशङ्करशरासन शिखण्डमुग्ध मुखमण्डल आर्यपुत्र आलिखित ।' (उत्तरे)

कालिदासस्य सवादेषु यत् सौष्ठव यत् पाटव यद् आजव शोभते न तत्र यत्र प्राप्यते। अत्र कविद्वयस्य सवादा निधीय त तान् अधीत्य च अनितरा मनोऽभिराम सौन्दर्यमिदि सुधीभिर्निणयनीयम्—

सिंह —अथैकधेनोरपराधचण्डाद् गुरो कृशानुप्रतिमाद् बिभेषि ।

शक्योऽस्य म युर्भवता विनत्तु गा कोटिश स्पर्शयता घटोध्नी ॥

राजा—कथ नु शक्यऽनुनयो महर्षेर्विश्राणनाच्चान्यपयस्विनीनाम् ।

इमामनूना सुरभेरवेहि रुद्रौजसा तु प्रहृत त्वयाऽस्याम् ॥ (रघौ)

वैद्यदूत —विकचोत्पलचारुलोचनस्तव चैद्येन घटामुपेयुष ।

यदुपुङ्गववन्धुसौहृदात् त्वयि पाता ससुरो न वासव ॥

सात्यकि —परितप्यत एव नोत्तम परितप्तोऽप्यपर सुसवृति ।

परवृद्धिभिराहितव्यथ स्फुटनिर्भिन्नदुराशयोऽधम ॥ (माघ)

कालिदासस्य सवादेषु रङ्गमञ्चोपयुक्तातिरेकेण दृष्टा भवति । तत्र कथस्यैव विशिष्टता न पर तत्र कथावस्तुष्वपि गतिशील विलोक्यते। भासकवरपि नाटकाय सवादादादिक चेत् तुलनात्मिकया दृष्ट्या दृश्यते तदा सोऽपि न कालिदासीय सवादात् सुन्दरतर सिद्ध्यति। यतो हि भासस्य शब्दयोजनायां न तादृशी सुग्रन्थिता, सुमधुरता नादमयता च प्राप्यते यादृशी कालिदासस्य सवादादिषु ।

कालिदासस्य कविता सर्वत्र प्रसादगुणगुम्फिता वैदर्भीरीतिललिता च प्राप्यते, दीयन्ताम्—

'किमात्मनिर्वादकथामुपेक्षे जायामदोषामुत सत्यजामि ।

इत्येकपक्षाश्रयविक्लवत्वादासीत् स दोलाचलचित्तवृत्ति ॥ (रघौ)

निश्चित्य चानन्यनिवृत्ति वाच्य त्यागेन पत्न्या परिमार्ष्टुमैच्छत् ।

अपि स्वदेहात् किमुतेन्द्रियार्थाद् यशोधनानां हि यशो गरीय ॥ (रघौ)

अल विवादेन यथाश्रुतस्त्वया तथाविधस्तावदशेषमस्तु स ।

ममात्र भावैकरस मन स्थित न कामवृत्तिर्वचनीयमीक्षते ॥ (कुमारे)

दृश्यकाव्येष्वपि तदीयाया कवितायामेष एव गुण एवैव रीति लक्ष्यते—

उदेति पूर्वं कुसुम तत फल

घनोदय प्राक् तदनन्तर पय ।

निमित्तनैमित्तिकयोरयं क्रम-

स्तव प्रसादस्य पुरस्तु सम्पदः ॥ ( शाकुन्तले )

उन्मत्तानां श्रवणसुभगैः कूजितं कोकिलानां

सानुक्रोशं मनसिजरुजः सह्यतां पृच्छतेव ।

अङ्गे चूतप्रसवसुरभिर्दक्षिणो मारुतो मे

सान्द्रस्पर्शं करतल इव व्यापृतो मारुतो मे ॥ (मालविकाग्निमित्रे)

कालिदासो रससिद्धः कविः । यमपि रसं प्रति स स्वदृष्टिं क्षिपति तं विलक्षणेनैव प्रकारेण अभिव्यनक्ति । शृङ्गारः करुणस्तु तस्य कवितायाः कामपि अद्भुतामेव विच्छित्तिं विभ्राणः पर्यवलोक्यते ।

रामाज्ञया लक्ष्मणः सीतां गहने कानने त्यक्तुमागतोऽस्ति । स सीतां यदा महीपते रामस्य शासनमुज्जगार तदा सीतायाः सञ्जाता या शोकाकुला दशा तां कविशब्देषु पश्यन्तु—

"ततोऽभिषङ्गानिलविप्रविद्धा प्रभ्रश्यमानाभरणप्रसूना ।

स्वमूर्तिलाभप्रकृतिं धरित्रीं लतेव सीता सहसा जगाम ॥

इक्ष्वाकुवंशप्रभवः कथं त्वां त्यजेदकस्मात् पतिरार्यवृत्तः ।

इति क्षितिः संशयितेव तस्यै ददौ प्रवेशं जननी न तावत् ॥"

शृङ्गारस्य संयोगपक्षो विप्रलम्भपक्षश्चोभौ कविना चारु चित्रितौ । संयोगशृङ्गारस्य मधुरतापाने चेन्मनसि कौतूहलं वर्धते तदा कुमारसम्भवस्याष्टमः सर्गो विलोकनीयः । संयोगशृङ्गारस्यालम्बनपक्ष उद्दीपनपक्षश्च द्वावपि यत्रैकत्रैव द्रष्टव्यौ स्तस्तादृशस्यैव काव्यस्य वसन्तवर्णनविशदकस्तृतीयः सर्गोऽनुशीलनीयः । विप्रलम्भशृङ्गारस्य चेत्सौन्दर्यं मनः स्पृहयति तदा मेघदूतकाव्यमेव तदर्थमलं स्यात् ।

एषा इह संयोगशृङ्गारश्रीः समवलोक्यताम्—

सस्वने प्रियमुरोनिपीडनं प्रार्थितं मुखमनेन नाहरत् ।

मेखलाप्रणयलोलतां गतं हस्तमस्य शिथिलं रुरोध सा ॥

अत्र च विप्रलम्भशृङ्गारोऽपि विलसन् विलोक्यताम्—

अङ्गेनाङ्गं प्रतनु तनुना गाढतप्तेन तप्तं

साश्रेणाश्रुद्रुतमविरतोत्कण्ठमुत्कण्ठितेन ।

उष्णोच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्ती

सङ्कल्पैस्तैर्विशति विधिना वैरिणा रुद्धमार्गः ॥

ससार विषय विमुखस्यापि कण्वस्य मन शकुन्तलां स्वभर्तृगृहं गच्छन्तीं वीक्ष्य कियद् दूयते इति दृश्यताम्—

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठ स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजड दर्शनम् ।
वैक्लव्य मम तावदीदृशमहो स्नेहादरण्यौकस
पीड्यन्ते गृहिण कथं न तनयाविश्लेषदु खैर्नवै ॥

कालिदासस्योपमानां रसात्मकत्वाद्रसरमणीयत्वमतितरामेव च मर्मस्पर्शित्वमवलोक्यते । औचित्ये सन्दर्भे च शोभाया समुत्पादनस्य कला तासु नितान्तमभिनन्दनीयास्ति । द्वित्राण्युपमालङ्कृतान्युदाहरणानि वीक्ष्यन्ताम्—

"तां जानीया परिमितकथां जीवित मे द्वितीय
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।
गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां
जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम् ॥"

विधिविधानरूपशापाच्चक्रवाकी निशायां चक्रवाकाद् वियुक्ता भवति यक्षोऽपि स्वभर्तुर्वर्षभोग्याच्छापात्रैजकान्तात् पृथक् अस्ति—अतस्तदीया कान्ता कान्तवियोगविधुरास्ति द्वयोरपि सन्तापस्य समानत्वात् कवे 'चक्रवाकीमिव' इत्येपोपमा कियती समुचितसन्दर्भशोभासंवर्द्धिका च वर्तते । पद्मिन्युपमितत्वात् यक्षप्रेयस्या, तस्या सुकोमलत्वं कृशाङ्गत्वं सितस्वरपर्शसुखत्वादिकञ्च कियन्मनोज्ञभावेन प्रेक्षकस्य पुरत समुपस्थित भूत्वा तन्मनो नन्दयन्तीत्यपि विलोकनीय वर्तते ।

"अप्यग्रणीर्मन्त्रकृतामृषीणां कुशाग्रबुद्धे कुशली गुरुस्ते ।
यतस्त्वया ज्ञानमशेषमाप्त लोकेन चैतन्यमिवोष्णरश्मे ॥"

इह मन्त्रकृतामग्रणीर्वरतन्तु उष्णरश्मिसदृश उक्तस्तेन तस्यामिततेजस्त्वं तत्प्राप्तज्ञानस्याज्ञानध्वान्तविनाशनामोघफलत्वञ्च प्रकटीभवति । उपमायां विद्यमानोपयुक्तता समुचितता च नितरामेव मन प्रीणाति ।

त वीक्ष्य वेपथु मती सरसाङ्गयष्टि-
र्निक्षेपणाय पदमुद्धृतमुद्वहन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धु
शैलाधिराजतनया न ययौ न तस्थौ ॥

अत्रत्योपमा तत्सर्वमपि अतितरामेव समीचीनतया प्रकाशयन्ती लक्ष्यते यच्चित्रं विशालैकपदपङ्क्तिरपि नैतावत्या ललिततयाविर्भावयितुं क्षमास्ति। मार्गाचलव्याकुलितसिन्धुना सह पार्वत्याः साम्यं कृत्वा कविः पाठकानामग्रे पार्वत्या मनसो मुग्धत्वमाश्चर्यवत्त्वं किंकर्तव्यताविचारणाक्षमत्वं शालीनत्वं लज्जाशीलत्वं स्थितेरलङ्घ्यत्वञ्च इत्यादिबहून् भावान् समुपस्थापयतीति सुधीभिर्विचार्यम्। 'उपमा कालिदासस्येति' यदाभाणकं कालिदासं लक्ष्यीकृत्य श्रूयते तत् सर्वथैव सत्यम्।

अलङ्काराणां प्रयोगे कविः स्वीयां सूक्ष्मसम्प्रेक्षतां प्रकाशयति। स तानुपयुज्य प्रचुरतरपदविन्यास्यं वक्तव्यं परिमिततरपदेष्वेव प्रकटीकर्तुं सद्वसरं सरलतयैव हस्तगतं करोति। तस्य कवितायां व्यर्थमेवालङ्काराणामुपयोगो न दृश्यते। अतः सा स्फुटचन्द्रतारका विभावरीव विभाति। तत्रानुप्रासमप्याकृत्य अप्रयासेनैव समागतास्ति। उत्प्रेक्षा-दृष्टान्तार्थान्तरन्यासादिका अलङ्काराः कवेः बहुश्रुतत्वं व्यापकदृष्टित्वञ्च ज्ञापयन्ति।

"कस्यचन पदार्थस्य सम्यग् विलोकनं कृत्वा तस्य स्वाभाविकतया यद् यथायथवर्णनं तदेव कलाया उत्कृष्टं रूप' मिति यद् रस्किन आह तत्कालिदासस्य प्रकृतिवर्णने स्पष्टतयानुवर्ती भवति। तदीये प्रकृतिवर्णने तस्य निरीक्षणनूतनता, सहृदयताया उदात्तता, कल्पनायाः अभिनव उन्मेषो विलोक्यन्ते। तत्-प्रकृतिप्रियस्तस्य प्रकृतिजनन्युत्सङ्गे शैशवादेव क्रीडनं वर्धनञ्च वेदयन्ति। तद्-रचनायामतः प्रकृतिरेतस्य तथा विराजते यथा मणिमालायां स्वर्णसूत्रम्। ऋतु-संहारश्चेद् ऋतूनां सर्वेषां सुन्दरतां दर्शयति तदा मालविकाग्निमित्रं कमनीय-कलेवरां मालविकां सह तद्वेषा-प्रतिमूर्तित्वेन कल्पयित्वा सन्निवेशयति। कुमार-सम्भवे यदि कविः प्रकृतिपुत्र्या जन्मस्थलीभूतं हिमालयमेवोपायनीकरोति तदा मेघदूतं स प्रकृत्यामेव जनयति। विक्रमोर्वशीयं प्रकृतिर्गन्धमादन-राजोद्यानादिषु अप्सरसाश्च रूपेषु यदि आत्मानं परिभ्रमयन्ती वीक्ष्यते तदा रघुवंशे सा क्वचिद्-वसिष्ठाश्रमस्य रूपं परिधाय, क्वचिद् वाल्मीकिविद्याविप्रोपमानमाश्रमपदं भूत्वा क्वचिच्च त्रिवेणी भूत्वा समुपस्थिता भवति। अभिज्ञानशाकुन्तले तु दर्शकाः प्रकृत्यां शकुन्तलां प्रेक्षन्ते शकुन्तलायाञ्च प्रकृतिम्। आपाण्डु तावदत्रानुभूयतां शालिनि-र्यासगन्धी पुष्परेणूत्किर आधूतवननिकरः सुखस्पर्शः समीरः, श्रूयन्तां तावत् शिखण्डिनां षड्जसंवादिन्यः केकाः, विलोक्यन्तां तावन्मनोहरेक्षणानि मृग-

चुम्बनानि, वीक्षयन्तां तावद् उन्नमिताननानां कलनिर्ह्रादानां सारसानां पङ्क्तयः ; घ्राणविषयीक्रियतां सानन्दं सरसीवीचिविक्षोभदलितसरोऽरविन्दामोदः । वस्तुतः कालिदासः प्रकृतेरन्तःस्थलस्य सूक्ष्मद्रष्टाऽस्ति ।

कवेः कालिदासस्य प्रतिभाचातुरी चरित्र-चित्रणेऽपि सर्वथैव कुशला । अतः कविर्यस्यापि चरित्रं चित्रयति सः सजीवो भूत्वा हृदयावर्जको भूत्वा समक्षे समुपस्थितो जायते । तस्य पात्रे पात्रे जीवन-शक्तिराचरणचूडं चकास्ति । प्रत्येकं प्रतिपात्रस्य सशरीरं भूत्वा नेत्रयोः पुरतोऽवतरति । उमा-सीता-शकुन्तलोर्वशी-मालविकादिरूपाणि स्त्रीपात्राणि तदीयानि को विस्मर्तुं शक्नोति ? दिलीप-रघु-राम-दुष्यन्त-पुरूरव प्रभृतिपुरुषपात्राणि प्रेक्ष्य को न मानवः प्रेरणाविशेष मश्नुते ? किं सिंहाय स्वदेहमुपानयन् महाराजो दिलीपः कदापि कस्यचनापि जनस्य हृदयाद् दूरस्थो भवितुमर्हति ? किं कदापि—

"बभूव रामः सहसा सबाष्पस्तुषारवर्षीव सहस्यचन्द्रः ।
कौलीनभीतेन गृहान्निरस्ता न तेन वैदेहसुता मनस्तः ॥"

इत्येतस्मिन् श्लोके दृश्यमानो रामः सकलामपि मानवजातिं स्वदिशि आवर्जयन् न रोदयति ? अपि किं दुष्यन्तस्य—

"येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना ।
स स पापादृते तासां दुष्यन्त इति घुष्यताम् ॥"

इत्येषा गिरा मानसाश्वासनदायिनी जगतीतलस्थप्रजाजनस्य युगयुगान्तरं यावत् श्रोत्रेन्द्रियं न प्रीणयिष्यति ?

कालिदासस्य काव्यानां सौन्दर्यमिदमपि विद्यते यत् तत्रानेकशास्त्राणां ज्ञान-गरिमापि स्वकीयया दिव्यया तेजःप्रभया मानवानां मनांसि नितरां रञ्जयन् विजृम्भते । कालिदासस्य तत्तद्दर्शनशास्त्रादिसिद्धान्ताः काव्याकारा एव भूत्वा समुपस्थिता भवन्ति । न च तेषां सत्ता तदीयेषु काव्येषु स्वकीया वैभवश्रियं पृथगेव विधाय स्थातुं प्रभवति—इत्येतदस्ति च कवेः कालिदासस्यान्यदपि विलक्षणं वैदग्ध्यम् । दृश्यताम्—

"पणबन्धमुखान् गुणानजः षडुपायुङ्क्त समीक्ष्य तत्फलम् ।
रघुरप्यजयद् गुणत्रयं प्रकृतिस्थं समलोष्टकाञ्चनः ॥"
"न नवः प्रभुराफलोदयात् स्थिरकर्मा विरराम कर्मणः ।
न च योगविधेर्नवेतरः स्थिरधीरा परमात्मदर्शनात् ॥"

इत्यादिना योगदर्शनस्य सौन्दर्यं क्रियया मनोज्ञया रीत्या,

"अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः।
स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव॥"

इत्यादिनोपनिषत्प्रतिपाद्य ब्रह्म कीदृशेन वचनपाटवेन,

"बहुधाप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः।
त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे॥"

इत्यादिना अद्वैतवादस्य निखिलेनापि तिरस्कारिणी तेनरहस्य कीदृशेन ललितेन सङ्केतेन,

"त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्तिनीम्।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः॥"

इत्यादौ "अजामेकां लोहितशुक्लकृष्णाम्" इत्येतां श्रुतिं क्रियासौष्ठवेन कविः प्रतिपादयन् हृद्यतरीभवति।

कालिदासः परमोदारमना परमसहनशीलप्रतिभाप्रकाशप्रदेशो महाकविरासीत्। साम्प्रदायिकतायाः स सर्वथैव दूरे समतिष्ठत। स सर्वमपि विश्वं स्वदेशं मेने। स स्ववर्गं तदेवास्य यः श्रुतिस्मृतिमतो वर्तते। तस्य महामानवतां प्रकटयन्ति श्लोकाविमौ—

"एकैव मूर्तिर्बिभिदे त्रिधा सा सामान्यमेषां प्रथमावरत्वम्।
विष्णोर्हरस्तस्य हरिः कदाचिद् वेधास्तयोस्तावपि धातुराद्यौ॥" (कुमारे)

"रसान्तराण्येकरसं यथा दिव्यं पयोऽश्नुते।
देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः॥" (रघौ)

धन्या सा गिरा यस्यामेव कविः स्वकाव्यानि ससर्ज, धन्येयञ्च धरा यत्र स जज्ञे।

—※—

## शाकुन्तला

"उवेस्ट दाउ दी यङ्ग ब्लौसम्स ऑफ दी स्प्रिंग एण्ड दी फ्रूट्स ऑफ दी डिक्लाइन, एण्ड ऑलदाट बाइ विच दी सोल इज चार्म्ड, इन् रेप्चर्ड फीस्टेड, फेड, उवेस्ट दाउ दी अर्थ एण्ड हेविन इटसेल्फ इनवन सोलनेम कम्बाइन ? आइ नेम दी, ओ शाकुन्तला, एण्ड ऑल एट वन्स इज सैड।"

इत्येतस्यां हि चतुष्पद्यां यूरोपीयेन कविवरेण्य 'गोथे' महानुभावेन शाकुन्तलामुद्दिश्य स्वीया दृष्टिः स्फुटतया प्रकटीकृतास्ति नो तदीयेयं चतुष्पदी केवलं चतुष्पदी। वस्तुतः सा प्रकाशस्तम्भ इव प्रतीयते। समग्रमपि नाटकं तदीयेन ज्योतिषा सर्वथा प्रकाशमानं भवति किञ्च नाटकीयाभ्यन्तरिकी प्रकृतिः प्रयात्युन्मीलनं स्फुटतया। गोथे विश्वसिति यत् शाकुन्तला तारुण्यकुसुमाकरस्य सुमनःसौरभं प्रौढताया शुचितायाश्च परिपक्वं मधुरं फलमेव प्रत्यक्षं भुवि विभाति। सा स्वर्लोकं भूलोकं च एकीभूतमेव विदधती समुल्लसति नूनम्।

गोथे कवेरिमामुद्भावनां भावुकतामेव तदीयां मत्वा वयमुपेक्षितुं प्रभवामोऽथ चेदमपि वयं विचारयितुमर्हामो यत् सः अभिज्ञानशाकुन्तलमुत्तमकवितात्वेनाद्रियते परमेतन्न तथ्यम्। तस्य श्लोक एष आनन्दावेगवशात् प्रादुर्भूतात्युक्तिरिव न। अपि तु अस्ति सः सदसद्व्यक्तिकर्तुर्मर्मभेदिनः आलोचकस्य गम्भीरविमर्शणानन्तरप्रकटीकृतो निर्णयोऽभिनवः। विद्वान् आलोचकः स्वकीयैः शब्दैर्निर्दर्शितोपरिप्रतिकृतेरेषेत्थंविधतम्। गोथे स्पष्टरूपेणाभिदधाति यद् अभिज्ञानशाकुन्तलं तत् तत्र वर्तते यत्र विकासस्येतिवृत्तं सन्निहितमस्ति, तत्फले परिणमत् विकस्वरं सुमनमस्ति, तद् दिवि विपरिवर्तमाना वसुधास्ति, अस्ति च तत् तत् पार्थिवत्वं यत्रामरज्योतिः परिस्पन्दते।

असंशयं हि शाकुन्तले संयोगानां समवायः शोभते। नाटकस्य प्रमुखं लक्ष्यं भौतिकताया आध्यात्मिकतायां सन्निवेशनं वर्तते। प्रथमस्याङ्कस्य मध्ये चेद् आदिमा योगा अस्थायिनो रागात्मका मनोभावविभाविता भौतिकाः सन्ति तदा सप्तमस्याङ्कस्यान्तरालेऽन्तिमा योगा आध्यात्मिकाः सन्ति, ते आनन्दामृतवर्षिणो चिरस्थायुकान् सन्निधाय समुपतिष्ठन्तेऽस्मदृष्टिसम्मुखे। भेदं रूपकं

कस्यचन विशेषस्य भावविशेषं कमपि, आहोस्विद् जीवनमस्तं कमपि चरित्र-विशेषमेवाभिव्याप्य प्रणीतमपि तु पार्थिवसौन्दर्यधरातः प्रेमोत्थाप्य नैतिक-सौन्दर्यस्याविनाशिनीं धरामध्यामयितुं तत् (प्रेम), सृष्टम्।

कालिदासः परमसुखपूर्वकं भुवं स्वर्गीयैश्वर्येण मण्डयति। तस्य मेदिनी ह्यस्या नैसर्गिकतया नाकेऽन्तर्भवति यन्न वयं "तयोः सन्धिस्थलमेतदि"त्येतद्-बोधनाय सीमारेखामपि विधातुमीशिमहे। प्रथमेऽङ्के कविः शकुन्तलाया यौवन-सुलभदुर्बलतायाः पतनं नैव निगूहति, सः स्पष्टमेव तावत् पतनं नायकस्य नायिकायाश्च चरित्रे समानभावेन दर्शयितुमुपसरति यावद्धि तादृशे तावति च वयसि सम्भवम्। सः तारुण्यस्योद्दामवेगवत्तया गत्याशृङ्खलतामुन्मत्तता चाटु-भाषणशीलताञ्च सम्यगेव सर्वाङ्गीणतयाऽऽलिखन् संलक्ष्यते। गम्भीरत्रपाया मुग्धाभ्यन्तरकथनस्य च मध्ये स जायमानं संघर्षञ्च मर्मातीततयोन्मीलयितुं क्षमोऽवाप्यते। शकुन्तलायाः सारल्यस्य दीप्यमानं प्रमाणमिदं यत् सा दुष्यन्ते समागते न पूर्वं स्वकीयात् भावावेगात् संयमेऽपिच्छयोन्मुखान् कर्तुं कदापि उत्सहते; सा नैव जानाति यत् कथं सा मानं वशीकुर्वीत कथञ्च सा स्वान् भावान् निगूहेत्। सा कामे सर्वथानभिज्ञासीत् न सा स्वान्तं गोपायितुं कवचमेव धारयति स्म न च पि सा प्रेम्णो बलीयस्या रागात्मकतायां शङ्कते स्म नाथवा चरित्र एव स्वस्नेहिनो दुष्यन्तस्य शङ्कते स्म। तपस्विनो दुहिता स्वशरीररक्षाद् दूरं आसीत् तथैव, यथा मृगो हि वन्यो भयाद् दूरेऽवतिष्ठते।

दुष्यन्तः शकुन्तलां विनाप्तमेव स्वाभाविकभावेन जेतुमवसरमविन्दत्। यथा कश्चित्सत्याश्रितस्य गाम्भीर्यतरां पावनताम् आश्लिष्टुं न मनागपि काठिन्यं लभते स्म तथैव स न अन्यूनांभावं गमितां स्वाभाविकीं परिपूततामधिकुर्वन्त्या-स्तस्या पतनमपि प्रदर्शयितुमीषदपि क्लिष्टम्मनुबभूव। इदमस्ति मदीयाया अनुमानाया द्वितीयं प्रमाणम्।

वन्यं पुष्पं स्वस्योपरि निपतितं रजः परिमार्ष्टुं न मृग्यमपेक्षते। अस्ति शकुन्तला अनावृता; रजस्तदुपरि चिरं भवति, परं तथाप्येऽपि स्त्रीयां मनोज्ञां शुचितां सा अनायासेनैव शामितुमीष्टे। रजो यद्यपि शकुन्तलोपरि चिरं बभूव परं न सा तत्र अचेतन्। वन्यः सरलस्वभाव कुरङ्ग इव गिरिनिर्झर-स्रोत इव सा तद्विधा सापि निर्मलैव अहरयत।

कालिदासः स्वां तपस्विपालितां नववयस्कां नायिकां शकुन्तलां प्रकृते-रशङ्कनीयपथोपरि विचरितुं सर्वथैव स्वच्छन्दतयोन्मोचयन् समवाप्यते । न स कुत्रापि कदापि च निरुणद्धि तां विचरणात् । तादृशेन प्रकारेण प्रदर्शयन् अपि कवित्वं सगमबन्धुरं शोकसहनशीलमाध्यात्मिककठोरानुशासननिष्ठजीवन मन्यामादर्शपत्न्यां पर्यवस्यन् प्रेक्ष्यमाणः सञ्जायते । प्रारम्भे आत्मनात्मनि एव विस्मृता प्रकृतिप्रकर्षदेशचरं विटपव्रततिजगदिव प्रतिभाति सा परमन्ते नितान्तगम्भीरमानसा विदग्धा नारीव शोकनिलीना, प्रगाढसहिष्णुत्वमयमो घवत्सादितपःपरायणा धर्मात्मनामीश्वरानुरागपराणामाचरणमाचरन्ती स्वशरीर मनाद्भिः कठोरैस्तनुतां नयन्ती लोचनगोचरीभवति । महासागरस्य सरितश्च, प्रकृते निसर्गभागस्य च शम व्यापारयोः सम्मेलनास्पदतां नीत्वा कालिदासः स्वकार्ये नायिकामनुपमया कलाकुशलतया कल्पितवानित्यत्र न स्तोकेऽपि संशय । तस्य पिता गीन महर्षिर्माता च तस्या आसीदप्सरा । तस्या जनुर्विप्रादृततपस्व समजायत परं तस्या भरणं पोषणं च तस्मिन् हि आश्रमोटजे बभूव यत्र प्रकृतिदेव्याः आत्मसमयस्य च, सुन्दरताया स्वनिरोधस्य च वसतिः सुहृद्भावपूर्वकं दृग्गतीभवति । असत्यपि तत्र कस्मिंश्चिदपि सामाजिके रूढिगते बन्धने नियतं स नूनमिर्धर्मसम्बन्धिभिः परप्रैर्नियमोपनियमैः परिगृह्यमाणावला-क्यते । शकुन्तलाया गान्धर्वविवाहोऽपि वीक्ष्यते तदनुगुणमेव मुद्रां बिभ्राण । अत एव तत्र प्रकृते रूक्षता प्राप्यते परं मोषयमस्य समाजाभिमत ग्रन्थि-जुषत । नूनं नाटकमुपमानविहीनं भवत् समग्रेऽपि साहित्ये सशोभते, तत्र स्वतन्त्र-तया सहात्मनियन्त्रणस्य विद्यमानत्वात् । उभयोरप्येतयोः सबलयोस्तत्त्वयो सम्परायात् तदीया प्रमग्नता अप्रसन्नता सर्वा, संयोगा वियोगाश्च सकला उपस्थिता भवन्ति ।

शकुन्तलाया सरलतायां नैसर्गिकता विभाति । न वस्तुतस्तु सा स्वाभाविकी सरलता मिरन्दायामुल्लसति । तयोर्द्वयोरपि विभिन्नाया परिस्थित्यां परिपोषणस्य तद् भिन्नताया कारणं प्रतीयते । शकुन्तलाया सरलतायां बाह्यतत्त्वस्य अणी-यसापि भागो न वर्ततेऽतएव मिरन्दाया सरलता न तस्याः सरलतां संवदति । अन्यैरनुपदं दृश्यते यत् शकुन्तलाया सख्यौ तस्यास्तरणिका प्रथमकलिकाव मर्यादयान्यावुपस्थिते भवत । सा लौकिकतायाः कस्मिंश्चिदप्यंशे परिचिता न दीर्घस्वतश्च वस्तु शक्य यतो हि यत्र तपोवने सा वसति धर्मे न तदेकान्ततः

समानादरलाभं पृथग् विधाय सन्तिष्ठते स्म। तत्रापि गार्हस्थ्यधर्मं परिपालयते स्म। सा स्वभावविनीता शकुन्तला वाह्यजगदनभिज्ञा दधानापि नासीत् तद्गुणवशालिनी। विश्वस्ततया तन्मानसोपरि स्वकीयोऽधिकारः कृत्स्नतया कृत आसीत्। वस्तुतस्तस्याः पतने कारणमिदं विश्वस्ततैवासीत्। किञ्चिदन्यदपि सत्यं यद् इमे ये गुणास्तां पातयामासुस्त एव तस्याः परमसङ्कटाद् दुःखसमुद्रादुत्तारयितुं समर्था अजायन्त। यद्यपि शकुन्तलायाः आत्मा पतनेन प्रहारेण नम्रतामीतोऽभवत् परमेषा तदीया विश्वस्ततैवासीद् या तस्यामविचलां धीरतां दुःखीयमां सहिष्णुतां प्रणयदेवलां सामना सञ्चारयतिस्म। निरन्तरायाः सहन्ता न जातु एतस्याः भीषणाया अग्निपरीक्षायाः शान्त्यतामियाय। न सा लोककटुतायाः अनुभूतिमपि मनागप्युत्कटतरं कदापि आसादयतिस्म।

अस्मदीया विद्रोहिणो भावा प्रचण्डप्रभञ्जनोत्थापनकारिणो भवन्ति। नाटिदाशेनारेन् नाटकेऽनुत्पन्नानन्दसुधाधारानिर्विरोहिनावनीयानन्दवाटा निर्वापयितुं कृतोऽस्ति प्रयासः। परं न स चिरं तदन्धारे सत्तां द्रष्टुमभिलष्यते। तस्य चैधुदामाधारिणो छौलां घनं सन्दर्प्य स तिरोधानं तं, भवं पदलेपमपि विदधाति। यद् दुर्वाससः शापाद् बहुपत्नीवद्दुष्यन्तकृतपरित्यागः काचि दैवघटनेव नाघटिष्यत तदा स परित्यागः परमनृशंसोऽस्मदीयश्चेतोभेदक एव सिद्धोऽभविष्यत्। तथाविधे सति तु परित्यागे, न नाटके शान्तिर्जीवितुं प्रभवेत न च तत्र समानाधिकरणत्वञ्चैव स्थातुमर्हेत्। अवतारितायां जवनिकायां कविना या सृष्टिः कृतास्ति वस्तुतस्तद्धेतो राजकृतभागो नास्मद्धापटले उद्वेगं जनयितुं महेति न चाशान्तिमेव स्रष्टुं प्रभवति। पञ्चमोऽङ्कः सर्वमप्येतत् प्रस्तनोति। शकुन्तला आगच्छति; राजा शापाद तस्याभिज्ञातुं क्षमते। स तां कटुवचसैवावजानाति। शकुन्तलाया हृदयं दूयते ताम्यति च। सा नृपकृतं तं तं प्रणयभावं स्मारयति च। कविरेतद्विषयकं यद् दृश्यमवतारयामास तत्र तस्य कवित्वकलायाः परमोत्कर्षं दृष्टं जायते। एतद्दृश्यस्यावतारणात् प्राक् कविना हंसपदिकागीता गीतिः श्राविता यामनुनस्रानाहतहृदयामनुभूय गीतिमाकर्ण्य श्रोतुर्मानसं नितान्तमाघातं संलभते:

अहिणवमहुलोलुवो भवं
तह परिचुम्बिअ चूअमंजरिं
कमलवसइ मेत्तणिव्वुदो
महुअर ! विम्हरि ओसि णं कहं ?

गते चतुर्थेऽङ्के यदा शकुन्तला पितुः कण्वस्य शुभाशिषस्तपोवनस्य च सकलस्य शुभा कामना आदाय समुद्रं स्वभर्तुः सदनं प्रतिष्ठते तदास्मदीयं यन्मानसं तास्ता प्रियप्रियतरा आशा निबध्नाति तस्यैवोपरि भवत्यशनिपातः ।

यदा विदूषक आह 'किं दाव गीदीए अवगओ अक्खरत्थो ?' तदा राजा सस्मितं प्रावोचत्—"सकृत्कृतप्रणयोऽयं जनः । तस्या देवीं वसुमतीमन्तरेण मदुपालम्भमवगतोऽस्मि ।" नृपते प्रणयगाथाया एतस्याश्चञ्चलताया स्वरूपमेतन्न वस्तुतोऽस्त्यर्थरहितं पञ्चमस्याङ्कस्य प्रारम्भे कविः आचार्यस्य प्रपञ्चेन पार्श्वेन प्रदर्शयति यद् दुर्वाससः शापः मानवीयप्रकृतौ किं कीदृशं च बीजं वपति हन्त ।

चतुर्थमङ्कं पश्यन्तो यदा वयं पञ्चममङ्कं प्रपद्यामहे तदा वयमस्माद्वनीन एव वातावरणे प्रविशामः । साधु महात्मनामादर्शसंसाराद् वयं राज्ञ प्रासादमुप सरामो यत्र दयाविहीनानि हृदयानि कुटिलकुटिलतराश्च प्रेमपथाः सर्वत्र सम्प्रे- क्ष्यन्ते । सुवर्णस्वप्नो हि यः आश्रमपदे विलोकितोऽभूत् स इह भग्नो भवितु- मारभते । शकुन्तलया सार्धमागतौ द्वावपि शिष्यौ तत्क्षणमनुभवतो यदौ हि अपरमेव किमपि जगत् समवाप्तौ स्त । सा हि जगती सर्वतः अग्निना प्रदग्ध मानास्तीति तावनुबभूवतुः । पञ्चमस्याङ्कस्यादावेतद्विषै स्पर्शं संस्पृश्य कवि- र्दुष्यन्तकृतशकुन्तलापरित्याग-सहनार्थं न सज्जयति ।

भर्तृकृतत्यागः शकुन्तलामाक्रमते । ततश्च शकुन्तला वज्रप्रहतेव सञ्जायते । सा विश्वस्तहस्तप्रताडिता मृगीव तदा प्रतिस्पन्दते । सा वनकुमारी आशाशून्या शरपरिविद्धेव साध्वसग्रस्तेव हृन्मर्मविदारणकारिण्या व्यथया व्यथितेव तदा प्रतिभाति । एकेनैव क्रूराघाताघातेन सा तस्मादाश्रमात् समूलं विच्छिद्यते यत्र सा चिरमुवास । ज्ञायते तदीय सम्बन्धस्तस्या स्वकीयेनाश्रमेण सार्धं न मनागपि शाब्दिक आसीत् न चैव लाक्षणिक । युगपदेव तस्या प्रियाणि मित्राणि पक्षिणो मृगाः, सूर्य्य, वृक्षा, लता—सर्व आकृष्यन्ते । तस्या पूर्ववर्तिनो जीवनस्य सुन्दरता शान्तिः सुखिता चैकदैव ता विमुच्य दूरे पलायन्ते । सा जायतेऽशरणा एकाकिनी च । एकेनैव क्षणेन प्रथमचतुरङ्कगान्ति गीतं भवति उपसंहृतम् ।

गम्भीरतरा निस्तब्धता एकाकिता च हन्त, तामावेष्टय विजृम्भमाणावलो- किता भवति । सा, यस्या मृदुला हृत्तन्त्री आश्रमस्य निखिलमपि संसारं मैत्रे बन्धुत्वे पर्यवसायत्, सम्प्रति सर्वथैव एकाकिनी सन्तिष्ठते । सा

स्वकीयैः सान्द्रशोकैरिमां विशालां रिक्ततां पिपर्ति । कण्वस्याश्रमम्प्रति शकुन्तलाया निवर्तनं न कालिदासमस्तदानीमुचितं मन्यते । दुष्यन्तेन कृते परित्यागे, न तस्यास्तदाश्रमे शान्त्या स्वस्थतया च सहवासः कदापि सम्भवः । अधुना तु तदीया प्राक्तनी स्थितिः परिवृत्तिमुपेतास्ति, तस्याः सम्बन्धस्तस्मात् संसारात् सम्प्रति किञ्चिद्दूरे नीतो वर्तते । यदि भूयस्तस्याः स्थितिस्तस्मिन्नेव पुराणे वातावरणे कृतामविष्यत् तदा समुपस्थितामवस्थां प्रति कटुविरोधस्यैव प्रदर्शनमघटिष्यत । इदानीं तस्या व्यथितायास्तस्य गरीयसः शोकस्य कृते युक्ततरं योग्यतरञ्च नीरवप्रसवेदिनमासीत् । न कविर्नवे स्थाने तानि पुरातनानि मित्राणि तदीयानि दर्शयति न च तान्याश्रमतान्येव सन्निदधाति यानि तद्विषयविश्लेषजनिततापापनयनाय अपेक्षितानि भवन्ति । कवेर्मौनं हि तद्-द्विविधयकं केवलमस्मदीयायास्तां शरणरहिततां विस्तव्यतासम्बन्धिनीं चेतनाञ्च गुर्वीं विदधाति या खलु शकुन्तलां परिवेष्ट्य सस्थितास्ति । नात्र संशीतिश्चेत् पतित्यक्ता सती कण्वस्याश्रमम्प्रति प्रापितास्यिष्यत् तदा नूनं महर्षेराश्रमपदं दिग्व्यापिना क्रन्दनध्वनिना परिपूर्णमाक्रमभवस्यत । शकुन्तलायां तत्र प्राप्तायां नियतं पादपानां वल्लरीणां च तदीययोरस्मयोः सन्धोरपि अविरतविलापस्य प्रस्फुटनं सम्भवमासीत्, तस्मादेव कारणात् कविर्न तां तत्र निनायेत्यस्माभिरूह्यते । परं मारीचाश्रमस्य पर्णशालायामपरिचितायां तु सर्वथैवानुद्वेगोऽनिर्देश्च अस्माभिः प्राप्यते । केवलमस्मन्नयनयोः पुरतः परित्यक्तायाः शकुन्तलायाः सा मूर्तिः समुपस्थिता जायते या निःसीमं शोकं वहन्ती ध्यानस्यस्तपस्वीव तपस्यायां निरतास्ति ।

सम्प्रति दुष्यन्तः प्रगाढानुतापेनातिपीडितो गतोऽस्ति । एष अनुतापस्तप एव । यावच्छकुन्तला नैतेनानुतापतपसा पावनेन विजिता भवति तावत् तन्मिलनं न कामपि महत्तां दधाति । शैवलोद्गतवनस्याकस्मादुत्थितस्य वेगः शकुन्तलां नृपाय प्रददौ परं न वस्तुतस्तत् तस्य शकुन्तलोपरि जय इति वक्तुं शक्यते । तस्या अधिगमनं तु यथार्थं समर्पणेन, तपसा वा भवितुं शक्यम् । यत् प्रयासमन्तरेण लभ्यते तत् हस्तात् स्रस्तमपि भवति लघुतयैव । तस्मादेव कारणात् कविर्द्वावपि प्रणयिनौ तपश्चर्याग्निना चिरं तापयति येनोभावपि तौ तथान्योन्यं प्रतिगृह्णीयातां यथा सर्वेतामसम्बन्धमम्बद्धौ । यदि शकुन्तलायाः परिग्रहस्तदैव भूपतिना कृतो भवेत् यदा सा प्रथममेव तद्राजभवनम्प्रति नीताभवत्

तर्हि नियतं तस्या स्थित्यां तया हंसपदिकानामेव संख्या समवर्ध्येत। सापि शोकाकुलमुपेक्षितमर्थविरहितं जीवनं नयन्ती नूनं दृष्टा स्यात्।

शकुन्तलार्थं तु तद्विधोऽपि प्रपञ्च शुभायासैव असिद्धयत यद् दुष्यन्तस्तां कठोरदार्ढ्येन प्रत्याचख्यौ। यदा तस्या कठोरताया क्रूराया कुफलं तमेव प्राहरत् तदा न स तस्यामात्मानं विरागं कर्तुमशकत्। अदमनीयस्तस्य वत्सलस्नेहोऽन्तस्तन्मानसमदीद्रवत्, शकुन्तला च स तथा सचस्कार यत् सापि तत्रैव ममौ। अत प्राक् न कदापि स भूपस्तादृशमनुभवमवाप्तुमवसरमासादयति स्म। नात पूर्वं स कदापि यायातथ्येन प्रेमगरतादृशं रूपं धर्मञ्च द्रष्टुमनेहसमेव लब्धवान्। वस्तुतस्तु एवंविधानुभूत्युपभोगार्थं सम्राज सौभाग्यमेव न निद्यति। तेषामाकाङ्क्षा आयाससमन्तरेणैव तोषं तृप्तिं चाऽनुवन्ति तस्मात् ते तत्र कदापि ममवाप्त प्रस्तुवन्ति यत् केवलं तपसा त्यागेन च सुलभ्यं भवति। नियतिर्दुष्यन्त तदानीं गभीरतरे परितापे प्राक्षिपत्। तेन स पारमार्थिकप्रेमपात्रमभवत्। शकुन्तलाप्रत्यादेशस्तमामूलममार्जयत्।

इत्थं कालिदास कलुषितस्य मानसस्य दोष हि सर्वं साश्रवेनाभ्यन्तरानलेन प्रदहन् सलज्जितो जायते। स तथा न चक्रे येन यादृष्टिर्न तत्सर्वं द्रष्टुमर्हेत्। यदान्तिमेऽङ्के अवस्तार, पतनि वयं सर्वाण्यपि दुरितानि किण्वरततां गमितानि पश्याम, अस्मत्पुरत परिपूर्णपरितोषामितानन्दजनिता हि शान्ति सर्वत्र मस्मित विलसन्ती परिस्फुरति। शाकुन्तलादुष्यन्तयोर्यदा परस्पर मेलनं घटते तदा तयोस्तस्या सन्निधौ नैतिकता सर्वाङ्गीणभावेनाऽऽदाततां शुभता पुनीतताञ्च गमिता दृष्टिपथेऽवतरति। वस्तुतो गोथे सत्यमाह—'शकुन्तला कम्बाइन्स दी इनोसेन्स दी ब्लॉसम्स ऑफ स्प्रिंग विद दी फ्रूट्स ऑफ ऑटम; इट कम्बाइन्स हेविन एण्ड अर्थ इति। निरवद्यवचनया शकुन्तलायामेव सुरलोको विलोपित परमपरो हस्तमाकृष्ट। कविना प्रदर्शितं यत् प्रथमेऽङ्के दुष्यन्त शकुन्तला च प्रणयकारित्वेन क्रियन्तुच्छता परिपोषयन्ती दृश्येते पर सप्तमेऽङ्के तयोर्योगो भरतस्य मातृपितृत्वेन स्थिरन् सत्यता निश्रान्त प्राप्तो भवति। प्रथमोऽङ्क स्फूर्तेनेनोद्दीपनेन च दीप्यमानोऽस्ति। तत्र तरलताह्लादे प्लवमानां महर्षेरमनुजा, तस्या सख्यौ चञ्चलतया समुद धावन्त्यौ, नवा सुमनोभिर्हसन्ती वनवल्लरी, सौरभोन्मत्ता भ्रमरावलि, पादपान्तर्हितस्य मनोहररूपस्य दुष्यन्तस्य मेचनघटैः पादपेभ्य पय प्रददतीनां निम्नगामपि वयरकानामनसूयाप्रियंवदाशाकुन्तलानां

भवितव्यं पर्यवलोकनञ्च प्रेक्षामहे वयम्। यदैव मङ्गलमय नन्दनविपिनं दुष्यन्तमानसोन्मादयित्री शकुन्तलाऽऽश्रमाङ्गने तत एव निर्वासिता च भवन्तीं ता वयमीक्षामहे। अस्माद्धि यापितशाकुन्तलबाल्यादरण्यात् तदरण्यं नितान्तमेव भिन्नमेवाभवत् यद् मङ्गलावतारा भरतस्य जननी शकुन्तला प्रति शरणं प्रपद्यत। न तत्र पादपान् सिञ्चन्तीनां कन्यकानां दर्शनं भवति, न तत्र ता वनतय एव, या दर्शकानां मनांसि कलेटयन्ति न च तत्र श्यामाकमुष्टिपरिवर्द्धितको हरिणशावक एव वीक्षितो भवति। तत्र एक एव बाल स्मरसमपि कान्तारसमारम्भ सौहृद प्राप्यन् प्रेरितो जायते। स एक एव सर्वेषामपि अनोकहानां प्रियतामुपचयोन्मुखीनां लतानां कमनीयता, पुष्पाणां वृन्तानाञ्च बन्धुताञ्च समन्यभिध्याय परिस्फुरन्ति तत्र पर्णशालामधिवसन्त्य प्रियतमोपेतचिन्ता वत्सस्य कारुण स्थविरा मातृहितनया चाल वालमेवैक लालयन्तो दृष्टा भवन्ति। तत्र वयं शकुन्तलामागच्छन्तीं पश्यामः। सा परिधूसरे वसने वसाना नियमक्षाममुखी धृतैकवेणिः अनिनिष्करणभर्तुर्विरहव्रतं दधाना शुद्धशीला इवपदेऽवतरति सर्वेषामप्यस्माकम्। तस्या दीर्घकालाभिव्याप्तिभिन्नपदे भिन्नाईः तदघ प्रदश्य यत् तस्या हृदो दुष्यन्ते कृतात्मगतादर्जितमासीत्। सम्प्रति सा नूनमेनैव गौरवेण मण्डितास्ति, मात्स्यधुनोत्तमसृदुलमातृभावस्य ललितैव प्रतिमा। इदानीं करुणा हातु प्रभवेत्।

इह नाटककारस्तदेव दर्शयन् लक्ष्यते यदसौ कुमारसम्भवे दर्शयामास। स मन्यते यत् तदेव प्रेम शश्वद् विजयते तस्यैव प्रेम्णः सततमभिनन्दनं क्रियते तदेव पुनीतं पैशाचं च प्रेम कथ्यते यन्नैतिकदृष्ट्या निष्ठितं भवति। नैतिकतामवज्ञाय यत् स्वच्छन्दतया निरङ्कुशतया चाचर्यते नीयते तदचिरेणैव म्लायति उपशमते च। एष प्राकृतनकालस्य कस्मिन्नपि प्रेम प्रेम न मन्यते यद् बाह्यदर्शनवर्त्तिनि निश्चितिमाश्रित्य विजृम्भते। प्रेम्णोऽन्तिमं चरमं वा लक्ष्यं भवति श्रेय इति तदीयः सुदृढो विचारः। स वदति यत् तत्प्रेम न सुन्दरं न च पावनं न चानन्दं पुरुषस्य नार्याश्च, यदस्ति सङ्कीर्णं व्यक्तिगतं च, यत्ता मानं समाजे वितनोति न च यत् कुटुम्बे अतिथिषु प्रतिवेशिषु च स्वं विदधाति विस्तीर्णम्।

भारतस्य कृते प्रवृत्तिरपि प्रिया निवृत्तिरपि प्रिया। तदुभयत्र तिष्ठति। भारतं सांसारिकजीवनप्रयोजनेन तु आत्मानं बहुषु प्रतिष्ठापयति तत् तत्र जात्युदयादिकं किमपि नोपेक्षते। तद् मौक्तिकार्थं विस्तर एव समुपोहते परं

तदाध्यात्मिकजीवननिमित्तेन रह एव निवासं कामयते। तपोवेदिकायान्तु तदेकाश्रयेव भूत्वा निषीदति। प्रवृत्तिनिवृत्तिविषयकयोरनयोर्विभिन्नयोः सिद्धान्तयोर्मध्ये वर्तते एकतेति कालिदासो मन्यते। कुमारसम्भवं अभिज्ञानशाकुन्तलं च स इमामेकतामेव दर्शयितुमलेखीत्। सिद्धान्ताविमौ एकतस्तु आत्मानं गार्हस्थ्यजीवने विनिवेशयतोऽपरतश्च विरजस्के जीवने हि सन्निवेशयत। पवित्रहृदयानां यं संसारमद्राक्षत् तत्र मानवीयः पुत्रः सिंहशावकैः सार्धं क्रीडन् दृश्यते उटजवासिनः साधोश्च आत्मा गृहजीवनं तपोमयजीवनञ्चोभयमपि बिभ्रत् परिदृश्यते।

वैराग्योन्मुखाना संन्यासिनां पर्णशालामाधारशिलां कृत्वा कालिदासः गृहस्थस्य गृहं प्रतिष्ठापयन् प्राप्यते। कामस्य सम्बन्धमैन्द्रियवासनातो दूरे विधाय स तं विरक्ततायाः पूते शुभे च सिंहासने आसयन् परिलक्ष्यते। भारतीयधर्मग्रन्थेषु कामो धर्मोपेतः प्रदर्शितोऽस्ति। तस्योपरि पूर्णतया तैर्यम-नियमानां शासनं स्थापितमस्ति। कालिदासः सौन्दर्यतत्त्वैरुद्ग्रथितं विधाय तं कामसम्बन्धमाकलयति। तदुत्थापितायां सुन्दरतायां निर्मलता मर्यादा श्रेयश्च प्रकाशन्ते। सा स्वैः सर्वैरप्यङ्गैः सकलमपि संसारं परिष्वजते। सा त्यागमयी वर्तते, सा प्रकृत्या न रजसाविला, तस्या अन्तराले न मानवस्य मानव्याश्च धर्मादपेता असंयता मलिना च प्रीतिः अणुमात्रमपि स्थानं लब्धुमर्हति। सा शाश्वतिकशान्तिमात्मनि सन्निदधाति। सर्वा अपि चञ्चलता उच्छृङ्खलताश्च तत्र तत्रैव निगूहीता भूत्वा मलच्छिना भवन्ति यथा शुभविधानस्य समुद्रे सकलान्यपि विध्वंसकारीणि स्रोतांसि दासीभूतानि भूत्वा सन्तिष्ठन्ते। तस्मात् ईदृशं प्रेम पाशविकात् अनियन्त्रिताच्च प्रेम्णो श्रुत्कृष्टतरम्। कालिदासः शाकुन्तलं समुपस्थाप्य जनतामिदमेव आदर्शं धर्म्यं पावनं प्रेम परिग्रहीतुं प्रेरयति।



( ८७ )

## कालिदासस्य जीवनदर्शनम्

महामहिमशाली कविकुलालङ्कारः कालिदासो भारतवसुन्धराया महतीमेकाली किमपि पुण्यमिव परिगृह्य प्रादुर्बभूव। अतिक्रान्ता यद्यपि सहस्रद्वयसमाप्ति रोहिता गतस्य तस्य ज्योतिष्मतो नक्षत्रस्य, परं यशालोकमिलायामसौ वितनुते स्म वसुमतीयं तेन तात चिराद् गौरववती मन्यमाना सगर्वं नैजमौलिमुन्नमयन्ती समुद् नन्दति साम्प्रतमपि।

महाकवेः कालिदासस्य दृक् अन्वयनादपि तुङ्गा पयोधेरपि गम्भीरतरा बभूव। तत्र यथा हिमाद्रेरिवाम्लाना प्रगतितरा गरिमता भूत्वा विबभौ तथैव तत्र ललितता सर्वासामपि कलानां कमनीया कान्तिश्चापि चकासत। तदीये कवित्वे तस्य[1] संस्कृतविद्याविषयिणी श्रीः संस्फुरति, एतावदेव न तत्र तस्य व्यवहारपरीक्षकताया आभासोऽपि मेदुरीति। स व्यावहारिके हि आदर्शे प्रपतति स्म न च वाचिके। तदीय दिव्यश्चित्र न केवलं चित्रवर्णवृन्दारकाणां हिताय शोभतेऽपितु तदन्तर्गतानल्पवर्णिता सर्वेषामपि पुमा हृते विराजते। तदीयं ज्ञानं न नीरसं तत्र प्रतिभासन परिस्रीतानवमा सान्द्रा स्निग्धता समुच्छलति। तस्य कविता यथा सुखमेव नाक विनापि प्रयत्नमन्यथाऽवलोक्यते न तथा सा ता दिव गमयितुं प्रयतमानाऽवाप्यते। तस्य रचनाना विदुल्येयमनाध्या यस्मादनवरतं स्वकर्तव्यानि सर्वं धर्मं च शासनं चित्रे सर्वविधानपि विभूति सपागि च सातानि सविवेकमुपभुञ्जानो भूभुवनमुद्भवानन्तुष्टयतु चेष्टेन। स कविः सामाजिकेषु सौन्दर्येषु[3] पारमार्थिक सौन्दर्यमवलोकयाञ्चकार। यद्यप्यसौ प्रकृतेरन्तसङ्ग एव सतत जीवन नयन् प्रतिभाति परमेतदपि प्रतिभासयते यदसौ नैजवसतिं प्रभूतमस्पर्धं सर्वामिव वैभवविलासविश्रामभावेषु नगरेषु चक्रे। देवलमात्रे श्रद्धयानापि तस्य धीः स्वीयानभिरुचि मानवमात्रे निबबन्ध। मानवः क ? स क्व वसति, क्व क्रीडति, क्व हसति, क्व रुदति, क्वोपविशति, क्व तिष्ठति, क्व शुष्यति, क्वानुरज्यति, क्व विरज्यति, क्व स्वपिति, क्व च जागर्तीत्येतत्सर्वं सम्यगज्ञासीत्। स मानव तेभ्य

[1] रघौ ४,८।     [2] 'शाकुन्तले', डॉ० कपिलदेव प्रणीते, पृ० ८७०, २९१।

[3] रघौ १०, २०।

पदार्थेभ्यो नाराटाङ्कपति यदिन्द्रियवृन्दं रमते परं तमजलं त्यागे तपसि यज्ञे च प्रवर्तयचैव संलक्ष्यते। मानवस्यात्मनोऽसीमत्वादाकाङ्क्षति स यदसौ (मानव) स्वीया महनीयता स्वकीयं रूप स्वकीयामसीमाञ्च शक्तिमभिजानीयात्। स न यस्मिन् कस्मिंश्चदप्येकस्मिन् क्षेत्रे स्वं सीमितं विधाय सन्तिष्ठेत। स सर्वत्रापि विहरेत्, सर्वत्रापि रुचिं दर्शयेत्, सर्वानपि भोगान् उपभुञ्जीत परं तथा कुर्वाणो न स्वविवेक-प्रयोगं विस्मरेत्। महाकवे कालिदासस्यैषोपश्लोकनीया दृष्टिर्जीवनंप्रति तदीयमुदारा धी स्फुरतयैव तस्य तत्तद्रचनानां साहाय्येन सचेतसां पुर समुपस्थिता सञ्जायते। अतस्तदुक्तीनामिह परिभावनमुद्धरणानाञ्च समुपस्थापनं कृतं स्यात्।

कालिदासो जीवनस्य सौन्दर्यं सार्थक्य समुत्कर्षञ्च यत्र यत्र प्रेक्षाञ्चके स्वीयेषु काव्येषु तत् तत् परमपेशलेन वक्रोक्तिबन्धुरेण मार्गेणाभिव्यानक्। स जीवनस्य सुपमापद्धार्ति-प्रशमने विवेद तस्मात्तदाभिदधौ—

"आपन्नार्तिप्रशमनफला सम्पदो ह्युत्तमानाम्।" (मे० पू० ५३)

अर्थस्य संग्रहं तमेव स प्राशंसत् यस्त्यागायानुष्ठीयते। वक्ति च स —

"आदान हि विसर्गाय सतां वारिमुचामिव" (रघौ ४,८६)

स तदेव जीवनं धन्यममंस्त यदस्ति तपःपूतम्। तदीयोऽयं द्रढीयान् विश्वासो यत् तपोऽन्तरेण न सिद्धिः कापि सम्भवा, तस्मात् स सर्वत्रापि तपो-महिमानं गायन् आसाद्यते। शाकुन्तले स—

"वल्मीकार्धनिमग्नमूर्तिरुरसा सन्दष्टसर्पत्वचा" (७,११) इत्यादिना,

"कृताभिषेकां हुतजातवेदसं त्वगुत्तरासङ्गवतीमधीतिनीं।
दिदृक्षवस्तामृषयोऽभ्युपागमन् न धर्मवृद्धेषु वयः समीक्ष्यते॥" (कु० ५,१६)

कुमारसम्भवे इत्यादिना च स्वपाठकवर्गंप्रति मैञ्जं भावानुबन्धनं कस्मिन् जीवनेऽस्तीति सोत्कण्ठं प्रकटीकरोति। स सुदृढभावेन विश्वासमिमं निदधाति यन्मानवस्य भद्र पूज्यानां सपर्यायामस्ति सन्निहितमतोऽभिदधाति—

"प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः" (रघौ १,७९),

कविर्यश शून्यं जीवनं न वरं मेने। तद्विधाज्जीवनात् स मरणमेव महीय-स्त्वेनावागमदत स प्राह रघुवंशे—

"किमप्यहिंस्यस्तव चेन्मतोऽहं यशःशरीरे भव मे दयालुः।
एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु"॥ २, ५७॥

जीवनस्य शिथिलत्वे कविरयं नितान्तमेव जुगुप्सां निदधाति स तु तज्जीवनमेव जीवनं मन्यते यत्र नाना सद्गुणा विभ्राजन्ते तद्-दृष्ट्या जीवनस्याधोऽस्ति—"गुणवत्ता" अत स शंसति—"पदं हि सर्वत्र गुणैर्निधीयते"। (र० ३, ६२) सत्यमेवेदं जगति प्रतिपदमनुभूयमानेऽस्मिन् प्रपञ्च दृश्यते। जीवनस्य सार्थक्यं वर्तते उपकारकर्मणि। यज्जीवनं परार्थं प्रयुज्यते तदेवास्ति जीवनं स्वार्थसिद्धये नास्तीति सर्वविचारणा। स तामेवेत्थमाकलयति—

"पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः" (र० ५, १६)

न केनापि मानवेन श्रेयसि तृप्यते—इत्येतद् बोधयति यन्मानवः प्रकृत्या श्रेयःशीलोऽस्ति चेत् आत्मानं श्रेयसि न नियोज्य नियोजनं यन्नदत्र तदा स तथा केनापि दोषेण प्रेर्यमाण एव कुरुते तस्य स्वतः श्रेयस्यनुरक्तिशीलत्वात्। तत्रापि सुलभकर्ते श्रेयः प्रियं ज्ञात् सिद्धमिदञ्च यन्मानवस्यान्यथाचरणं यद् प्राप्यते तदुपाधिदोषादेव। इदमेव सर्वं विचिन्त्य कविर्भणति अप्रस्तुतविधानात्मिकया रीत्या—

"उष्णत्वमग्न्यातपसम्प्रयोगाच्छैत्यं हि यत् सा प्रकृतिर्जलस्य॥"

(र० ५, ५४)

तज्जीवनमपि न कविः साधु मन्यते येनोपकृतो न प्रत्युपकृतः। अत स उदीरयति—

"प्रतिप्रियञ्चेद् भवतो न कुर्यां-
वृथा हि मे स्यात् स्वपदोपलब्धिः॥" (र० ५, ५६)

कविः स्वकृतौ स्वकीयमभिमतं वस्तुभावं वा अर्थान्तरन्यासमुखेन प्रकटीकुर्वाणः प्रायेण प्राप्यते किं वा स स्वकीयान् विचारान् अप्रस्तुतविधानात्मकेन द्वारेणाभिव्यक्त्या प्रायशः विज्ञापयते। यः पुरुषः स्वेन जीवनेन सर्वेषामप्यन्येषां जीवनमभिभूय सन्तिष्ठते तस्य पुरुषस्य जीवने प्रीतिं निदधानः कविः प्रवर्तयति कौरस्या वचोभङ्ग्येति दृश्यताम्—

"नक्षत्रताराग्रहसङ्कुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः" (र० ६, २२)

विपदि निरस्य मानवस्य अधीरताया आश्रयणं नास्ति किमप्याश्चर्यं वा वचनीयत्वम्। मानवमात्रस्य तु धर्म एवायं यद् सुखमवाप्य तत्प्रमोदति दुःखस्याधिगमस्य विषीदति। तस्माद् विचारवान् जनस्तदवस्थां गतं तं जनं विलोक्य

कुरुयेव्। कवे कालिदासस्य हृदयन्तु एतादृश विपद्गत जनम्प्रति नितरामेव समवेदनां निदधाति अत एव हि स ।

"अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु" ( र० ८, ४३ )

इत्येतद् ब्रुवाण श्रूयते। जीवनम्प्रति कवदृष्टि परामर्शे स्पष्टता वहति। तदीया दृष्टिस्तज्जीवनमभिनन्दनीय मन्यते यदस्ति गुरुभक्तिनिष्ठ गुरुजनादश पालकम्। कवेर्दृष्ट्या गुरोर्गरीयान् न कोऽपि तदितरोऽन सा ( कविदृष्टि ) तदाज्ञा सर्वथैवाविचारणीयामवगच्छति। गुरुषु यास्ति तदीयास्था सा दृश्यताम् एकस्मिन् कथासन्दर्भे—

"स शुश्रुवान्मातरि भार्गवेण पितुर्नियोगात् प्रहृतं द्विषद्वत्।
प्रत्यग्रहीदग्रजशासनं तदाज्ञा गुरूणां ह्यविचारणीया ॥" ( र० १४, ४६ )

कविर्मानवस्य यथार्थमेव जीवनं चित्रितं विदधानः सर्वत्र प्राप्यते। पर स इदमिच्छति सदैव, यत् मानवस्तथा प्रयस्येत यन तदीय जीवन अभ्युदयम् स्याद् भवच कल्याणदर्शि। जीवनस्य सुन्दरता कल्याणेऽभिनिवशोऽस्ति न च कष्टार्जनम्। तस्मात् स मानव महनीय जीवनम्प्रति नेतु कामयमानो मानवजीवनस्य प्रवृत्ति क्वास्तीति ज्ञापयितु निगदति अग्निवर्णचरित्रवर्णनच्छलेन—

"इष्टदोषमपि तन्न सोऽत्यजत् सङ्गवस्तु भिषजामनाश्रव ।
स्वादुभिस्तु विषयैर्हृतस्ततो दु खमिन्द्रियगणो निवार्यते" ॥ (र० १९ ४९)

यतो मानव स्वमभिलषित लभते तत एव प्रयाति तत्रैव स रज्यति, तस्मिन्नेव याचते, तस्मिन्नेव च स्व भाव निबध्नाति। अस्त्येतादृशता मानवीय जीवनस्य विशिष्टता। कवि-दृष्टेरपि विशिष्टता नाम्मान तिरोधातुमर्हति—

"अम्बुगर्भो हि जीमूतश्चातकैरभिनन्द्यते"। ( र० १७, ६० )

कविरनदव भापते यदसौ मानव-जीवनस्यान्तराले प्रेक्षते। मानव-जीवनस्य प्रवृत्तेर्जुगुप्सन किं वा तिरस्यन न कवेरुद्देश्य, तस्य तु लक्ष्यमस्ति मानव जीवन-धर्म-विश्लेषणम्। स केवल मानवजीवनमुपस्थापयति। न च तस्ततोषु मिच्छति न च निन्दितुम्। इदं स्वस्य यत् स सदैव जीवन मानवीय स्वप्रकृति-कर्मणा सत्कर्तुमुन्नेतुम्च कामयते भृशम्। अथ च स यथास्थलमिदमपि दर्शयितु यतते यत् कीदृश जीवन तस्मै रोचते। परमेतद्विषयकमभिधान तस्य न भवति साक्षात्तयाभिहित तद् भवति सदैव परोक्षतया निगदितम्।

"अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः" ( र० ९, ७४ )

इत्यादिवद्भ्यो हि उपर्युक्तं स्पष्टमेव परिपुष्णन्ति ।

जीवनं तत्रैव रमते यत्र तद्धर्मीप्सितं पदार्थमश्नुते—इत्येतद्वाचयन् कविरत्र नैजं पक्षपातञ्च प्रकाशयन् प्रतिभाति—

तं प्राप्य सर्वावयवानवद्यं व्यावर्ततान्योपगमात् कुमारी ।
न हि प्रफुल्लं सहकारमेत्य वृक्षान्तरं काङ्क्षति षट्पदालि ॥ (र० ६, ६९)

कविरयमिदं जीवने न प्रीतिं बध्नाति यत् स्वस्वामिनो हितं प्रियं वा कर्तुं तु न शक्नोति परं तस्मिन् प्रतिकारकं सिद्ध्यति भवतु नाम सा प्रतिकारकता ज्ञात्वा अज्ञात्वा वा, विश्वासतया अविश्वासतया वा । इममेव स्वं भावं स प्रकारान्तरेण वदति—

"स्थातुं नियोक्तुर्न हि शक्यमग्रे ।
विनाश्य रक्ष्यं स्वयमक्षतेन ॥" (र० २, ५६)

मानवो जगति समाजे भार्यां गृह्णीयात्, स गुरुजनेषु समयं नयेत्; स्वकीयान् विचारांश्च प्रकटीकृत्य रक्षेयात् गुणांश्चाविर्भाव्य समाजे स्वीयं नैजं स्थानं सृजेत् । एतद्विधाचरणाङ्गीकरणेन जीवनं निर्मितं भवितुमर्हति । जीवनं तदेव भवति वन्दनीयं यस्य गणना समाजे कृता जायते । कविरित्येतत् सर्वं हृदि निधायैवेदं कथयन् प्रतीयते :—

"सम्बन्धमाभाषणपूर्वमाहुर्वृत्तः स नौ सङ्गतयोर्वनान्ते ।
तद्भूतनाथानुग ! नार्हसि त्वं सम्बन्धिनो मे प्रणयं विहन्तुम् ॥" (र० २,५८)

जीवनं प्रेम्णि स्थितम् । प्रेम तस्मिन् मानवहृदि शक्तिं सञ्चारयति । तेन तज्जीवति, क्षमिति वर्धते च । जीवनस्य मूलभूतं एतदेव वर्तते प्रेम । नारीनराबुभावपि तदपेक्षिणौ स्तः । कविर्जीवनस्येदं प्रधानं तत्त्वं सर्वेष्वपि मानवेषु उच्चैः संवृद्धिमासादयद् विलोकयितुमाकाङ्क्षति । स इच्छति यज्जीवनं प्रेम्णा पावनं भवेद् । तद् तदनुमहेनानुगृहीतं स्यात् । न स तद् प्रेम 'प्रेम' इति पुनीतेनाभिधानेन व्याहर्तुमीष्टे यदनाचारदोषेण दूषितं स्वार्थविशेषेण सम्पृक्तं वा विद्यते । तस्मात् स पुत्रप्रेमसंवलते जीवने महतीमेव श्रद्धां निदधाति । कविः प्रेमप्रसारचके जीवने, मन्ये ।

"सागरमुद्रित्वा कुत्र वा महानद्यवतरति" (शा० पृ० १६५)
"किमत्र चित्रं यदि विशाखे शशाङ्कलेखामनुवर्तेते" (शा०, पृ० १६५)
इत्यादिभिः स्वीयां सम्मतिमर्पयन् इव प्रतिभासते ।

मानवीय जीवनमपत्यामनमालोकयितुमुत्सुकमानसमवाप्यते। अपत्य मुदितमवाप्य तत् प्रसीदति दुःखित च तदवलोक्य विषीदति तत्। अपत्यस्य सुखदुःखे जीवनस्य सुखदुःखे स्त इत्येतन्मेदयानुभूय च कदाचित् कविर्जीवनस्य प्रियतर तत् प्रति च नितरामेव नैसर्गिकानुद्गारानुद्गिरन्नवलोकितो भवति—

"आलक्ष्य दन्तमुकुलाननिमित्तहासै
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन्।
अङ्काश्रयप्रणयिनस्तनयान् वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति॥ (शा० ७, १७)

अनपत्यता भवति दुःखदेति विचिन्त्य स वक्ति—

"कष्ट खलु अनपत्यता" (पृ० ४००, शा०)

अपत्यतां लक्ष्यीकृत्य कविर्यान् विचारान् निदधाति स्म ते विचारास्तस्याध स्थितासु पङ्क्तिषु दृष्टा भवन्ति—

"सन्तति शुद्धवश्या हि परत्रेह च शर्मणे" (र० १, ६९)

कविर्मन्यते यत् सन्ततेर्मानव पैतृकाद् ऋणान्मुक्तो भवति—

"असह्यपीड भगवन् ऋणमन्त्यमवेहि मे"। (र०, १, ७१)

जीवनस्य धर्मशास्त्रानुगामित्व कवेरभिलषितमस्ति तस्मात् स मन्यते यत् सन्ततिहीनस्य पुरुषस्य पितरोऽतृप्ता एव सन्त स्वर्गे विषण्णा एवोपविशन्ति—

"अस्मात् पर बत यथाश्रुति सम्भृतानि
को न कुले निवपनानि नियच्छतीति।
नून प्रसूतिविकलेन मया प्रसिक्त
धौताश्रुशेषमुदक पितर पिबन्ति॥ (शा० ६, २५)

इद सर्वं मन्वानमपि कवि सन्तानस्य श्रुतगामित्व शक्तिशालित्व पुष्टगात्रत्व विनयशालित्वमेव च परिप्रीणाति। अतएवैषा हि दृष्टिर्वस्तुत कवे सन्ततिमति जीवने अत एव तु स "श्रुतस्य यायादयमन्तमर्भक" (र० ३, २१), " कपाटवक्षा परिणद्धकन्धर " (र० ३, ३४) "नीचैर्विनयान्तरयत" (र० ३, ३४) इत्यादीन् भावान् अभिव्यनक्ति।

कविमहानुभावोऽस्य भवितव्यतायां विश्वसिति पर न सा भवितव्यतावादिता त प्रीणाति या हि अलसै पुरुषार्थपराङ्मुखैरभिनन्द्यते। स तु गतजन्मसु कृतानां कर्मणां विपाकमेव 'भवितव्यता' इत्यनेन नाम्ना व्यपदिशति। भवित

स्मृतिविषयीकरणीया उक्तयस्तदैव श्रुता भवन्ति यदा कृतेऽपि प्रयत्ने घटना न विनिवार्या भवति श्रूयताम्—

"न विस्मरामि । किन्तु सर्वं कथयित्वा मयापि मृत्पिण्डबुद्धिना तथैव गृहीतम् । अथवा भवितव्यता खलु बलवती" (शा० पृ० ३६७) प्रयत्नेऽकृतेऽपि कस्यचन वस्तुनोऽवाप्तौ कारणं भवितव्यतेत्यतश्च मन्यते कविरत्र आह—

"शान्तमिदम्'''भवितव्यानां द्वाराणि भवन्ति सर्वत्र" ( शा० १, १६ )

अपरीक्ष्यकारिता जीवनस्य, भवति सङ्कटावहा प्रायः । अतस्तदेव जीवनं कविर्वरं विचारयति यत्र समग्राण्यपि कार्याणि विमृश्यकारितया विधीयन्ते । रहस्यगताद्दौ तु विशेषतः परीक्षितकृतत्वमादरणीयमिति कवेर्मतम् । तदीयमिदं वचः—

"अतः परीक्ष्य कर्तव्यं विशेषात् सङ्गतं रहः ।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥ ( शा० ५, २४ )

ज्ञापयति यज्जीवने परीक्ष्य कर्तव्यमस्ति कवेरिष्टम् । जीवनमधिकृत्य कवे-रयमपि विचारो वर्तते यज्जीवनेन कर्माणि कुशलेन साध्यन्ते । तदेव जीवनं निष्फलमिद-मस्ति यत्कृतेन कर्मणा विदुषां मानसं न तुष्यति । जीवनस्यास्यैव शोभा विद्व-न्मनःपरितोषकारिकर्मकरिता । कविवरस्य जीवनसुहृद्विचारेषु दृष्टिकोणोऽस्मिन् वाक्ये स्पष्टं प्रतिलक्ष्यते—

"आपरितोषाद् विदुषां न साधु मन्ये प्रयोगविज्ञानम्" ( शा० १, २, ) कवेरीप्सिता प्राप्ता लोकप्रतिष्ठा सैव साधु-स्तुत्या भवति या भवति स्वसुख-निर-भिलाषा लोक-सेवनपरायणाश्रितजनपरितापविनिवारिका । जीवनस्य सारभूत-तत्त्वं कविवरः काङ्क्षति । तद्विचारेण जीवनस्यार्थं एवास्ति स्वार्थविहीना लोक-सेवा । स व्याहरति दुष्यन्तकृतलोककर्मव्याजेन—

"स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते वृत्तिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम् ॥" ( शा० ५, ७ )

कविः कालिदासोऽस्ति परमो भावविचारबन्धुरः । न तस्मै जीवनस्य कला-रहितत्वं रोचते । स जीवनं कलासु कुशलं द्रष्टुमनाः । जीवनं तदेव तद्विचारेण

यत्र कला विलसन्ति । तदीयेषु काव्येषु राजमाना कला स्फुटतयैव बोध यन्तीद यत् स कलाकलितमेव जीवनमाद्रियते ।

> कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
> पादास्तामभितो निषण्णहरिणा गौरीगुरो पावना ।
> शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यध –
> श्रृङ्गे कृष्णमृगस्य वामनयन कण्डूयमानां मृगीम् ॥" ( शा० ६,१७ )
> पादन्यासक्वणितरशनास्तत्र लीलावधूतै–
> रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ता ।
> वेश्यास्त्वत्तो नखपदसुखान् प्राप्य वर्षाग्रबिन्दू
> नामोक्ष्यन्ते त्वयि मधुकरश्रेणिदीर्घान् कटाक्षान् ॥ ( मे० पू० ३५ )
> "अहो रागपरिवाहिणी गीति" ( शा० पृ० २६७ )
> "तवास्मिगीतरागेण हारिणा प्रसभ हृत" ( शा० १,५ )

इत्यादिषु कवे सगीत नृत्यचित्रकलादिप्रियत्व स्पष्ट दृश्यते । एतेन सिद्ध्यति यदसौ जीवन कलाकलित दिदृक्षति । कवि कालिदास भारतीयदर्शनधारा अभिव्याप्य शोभमाना पर्यवलोक्यते । तस्मात् स न कस्यामपि दशायां नैसर्गिकीं प्रसादश्रिय मोक्तुमभिवाञ्छति । आत्मन आनन्दमयत्वात् स न क्रन्दनपर जीवन जीवन मन्यते । स तु तत्र सतत विनोद स्मितता विविधकलाक्रीडानां विलासमवलोकयितुमिच्छति । तद्दृष्टया जीवनस्यार्थो नास्ति खिन्नतोदासीनता वा । परमिदमपि न बोधनीयमेतेन यत् कविर्जीवनस्य तथ्येभ्यो दूरे वस्तुम भिलषते । स दद्मृताम्–जीवनस्य–अस्मारता ( र० ८, ५१ ) सम्यग् वेत्ति । स जानाति यत्–"मरण प्रकृति शरीरिणां विकृतिर्जीविनम् " ( र० ८, ८७ ) स इदमपि अवगच्छति यत् यज्जीवने कदापि सुखमवतरति कदापि च दु खम्–

> "कस्यात्यन्त सुखमुपनत दु खमेकान्ततो वा ।
> नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥" ( मे० उ० ४६ )

पर किं नाम दु खमिदमित्येतत् साधु वेत्ति ज्ञानवान् कविरयम् । दु खस्य नास्ति स्वकीया स्थिति । न तद्विवेक-धायी पुर स्थातुमर्हति । ज्ञानानलो निमेषमात्रेण दहति तत । इदमेव सर्वं विभाव्य कवि कालिदासस्तज्जीवन एव निशां निदधाति तदेव जीवन सोऽर्चति तस्मै जीवनायैव स्वश्रद्धां समर्पयति यदस्ति सदैव ज्ञानविभाविभासितमानन्दसागरतरङ्गतरङ्गित नाना-गुणोल्लासो ल्लसित विविधावदातविद्याविद्योतित पुष्कलकल्लोलम् ।

हुताग्नीनाम् ", "त्यागाय सम्भृतार्थानाम् ", "शैशवऽभ्यस्तविद्यानाम्", "जुगोपात्मानमत्रस्तो भेजे धर्ममनातुर ", "ज्ञाने मौन क्षमा शक्तौ ", इत्यादिषु श्लोकेषु नितान्तमेव स्फुटभावेन प्रथयन् समवाप्यते।

यस्मिन् जीवने स्वपनाभ्यवहरणादिकमेव दृग्गोचरी भवति तज्जीवन मानवस्य जीवन न, तदस्ति पशो जीवनम्। मानव जीवनस्य कृतार्थता न तावतैव। अत कवि काङ्क्षति यन्मानवो मानवीय जीवनमङ्गीकुर्यात्। मानवीयजीवन मानसस्य पवित्रता, पुरुषार्थस्य फलोदयगामिता, विश्वस्य सेवा, विद्यानामर्जन, धिय शास्त्रानुगत्व, कर्त्तव्येषु अभिनिवेश विषयेष्वनासक्ति गुणेषु प्रणयमपेक्षते तस्मात् कवे कालिदासस्य दृष्टिरतद्विधमेव जीवन जीवभावेन स्वीकरोति। केषा ञ्चन जनानां कथनमिद यत् कवि कालिदास स्वकीयेषु काव्येषु यस्मिन् जीवने प्रीति दर्शयति तज्जीवनम्तु आदर्शजीवनमस्ति। न तदस्ति सामान्य जीवनम्। परमिद कथन न समीचीन प्रतिभाति। समाजस्य कल्याणाय राष्ट्रस्याभ्युत्थानाय विश्वस्य सत्काराय नास्ति सामान्यजीवनस्य कदापि अपेक्षा मनागपि। सामान्य जीवन दीनता दरिद्रतां पराधीनता नानाविपदामवलिञ्चामन्त्रयति। तस्योपरि शासन भवत्यन्यस्य। तत्सर्वैरपि सदा दासीक्रियते। तज्जीवन सामान्य तु पशूनामेव कृते हितकर न मानवानां कृते। मानव-शरीरमवाप्य यदि आहार निद्राभयमैथुनष्वेव तद् गमित तदा तेन को लाभो जात। अत जीवन तु तदेव यद् एष कवि कालिदासो जीवनत्वेन स्वीकुरुते।

धन्योऽय कविर्यो विश्वस्य पुरतो जीवनस्य स्वरूप तदीय मर्म च समुप स्थापयामास। वस्तुतो जीवनधारिणां समक्षे जीवनप्रतिष्ठापका भूत्वा ये कवयो ऽवतरन्ति तै कविभिर्धरा गौरवशालिनी भवति। प्राणिनश्च आश्वासनमयस्य श्वासस्य च परिग्रहणाय सदवसर लभन्ते। जयति कविकालिदासो जयति।



( २८ )

## कालिदासकवितायां राष्ट्रियता

भारतस्य राष्ट्रस्य राष्ट्रियत्वं किमित्येतद्वगन्तुमस्माकं पुरो यद्यपि श्रुतयो ब्राह्मणानि आरण्यकानि उपनिषदो वेदाङ्गानि श्रौतगृह्यकल्पधर्मसूत्राणि दर्शनानि पुराणानि रामायणं महाभारतं शिलालेखस्तूपचैत्य-भूखननसंलब्धप्राचीनप्राचीनतरमुद्रादिविविधसामग्र्यः शोभन्ते परमुत्र हि तत्त्वमवबोद्धुं केवलं महाकवेः कालिदासस्य काव्यान्येव गवेषयिष्यामहे। राष्ट्रियतातत्त्वप्रदर्शनार्थं न तत्रापि तदीयानां सर्वेषामपि काव्यानां साकल्येनोन्मीलनमिह सम्भवत्। तथाचरणेन तु निबन्धस्यास्य कायो ह्यतितरां दीर्घतामासादयेत्। तस्मादत्र तु तान्यानि कानिचनैव स्थलान्युपात्तानि स्युः। एतद्ध्वनीम्युपगमेतास्मदीयं तदुद्देश्यं पावनं सफलतामवाप्नुमर्हेत् यस्याकलनमत्र समभीप्सितमास्ते।

सर्वेषामपि सुधीन्द्राणां विदितचरमेवेदं यत्कालिदासस्य तु समस्तान्यपि काव्यानि प्रारम्भादन्तं यावद् राष्ट्रियताभावभावितानि भूत्वा काव्य-संसारे संशोभन्ते। अस्त्येव वस्तुतस्तु कविः कालिदासो राष्ट्रियः कविः। सः भारतीयताया दर्शनाय भारतीयतायाः प्रतिष्ठापनाय भारतीयायाश्च समुन्नमनाय स्वकीयानि सकलान्यपि काव्यानि ससर्ज। अतो नैतादृशमेकमपि स्थलं यन्न स्याद् राष्ट्रियताभावविभूषितम्। कस्यचन राष्ट्रस्याभ्युदयाय तस्य रक्षणाय तस्य संवर्द्धनाय च जनानां हृदयेषु राष्ट्रियतायाः सञ्चारणं नितान्तमेवापेक्षितं जायते कालिदासस्य काव्यान्यस्यां दिशि यादृशं सुन्दरतरं प्रकृष्टतरञ्च कार्यं सम्पादयन्ति न तादृशं कव्यन्तरस्य काव्यं विदुषदवलोक्यते। कालिदासस्य कवित्वं हि अधिकतममात्रायां समीचीनया रीत्या स्वयमेव परिभाल्यैव सम्प्रेक्ष्यैव विद्वांसः कालिदासमेवं स्तुवाना दृश्यन्ते—

"वयमपि कवयः कवयः कवयोऽपि च कालिदासाद्याः।

दृषदो भवन्ति दृषदश्चिन्तामणयोऽपि हा दृषदः॥"

यजुषि—

"आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम् आराष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायताम्। दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू

रथेष्ठा । सभेयो युवास्य यजमानस्य वीरो जायताम् । निकामे निकामे पर्जन्यो वर्षतु । फलवत्यो न ओषधयः पच्यन्ताम् । योगक्षेमो नः कल्पताम् ।"

इत्येषा हि या राष्ट्रियताभावोन्मेषिणी राष्ट्रप्रार्थनाचरितास्ति सा हि सर्वत्र सर्वत एव कविशालिदासस्य पुनीतासु रचनासु विभासते ।

यत्र यत्र हि पारमेश्वरी आस्था समवेक्ष्यते तत्र तत्र नूनं भारतीय आत्मा विजृम्भत इत्येतद्धि सत्यं न कदापि विस्मरणीयम् । भारतराष्ट्रस्य राष्ट्रियता यैर्यै-र्हुभिरुपादानैर्विनिर्मितमस्ति तेषामेकतमं तिरस्भूतमुपादानमीश्वरवादित्वमस्ति । इत्थमानन्दमयं सत्यं कवेः कालिदासस्य सर्वास्वपि कृतिषु सर्वत्र नरीनृत्यत् दृग्गोचरीभवति । दृश्यताम्—

(क) "वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥" (रघौ)

(ख) "वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः ।
अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते
स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः ॥"
(विक्रमोर्वशीयम्)

मानवो विद्यया शोभते विद्या च विनयेन शोभते—इत्येतद् वीक्ष्य राष्ट्र-स्नेहिन आत्मा देशं स्वं विनेतुं समुचितानुकूलांश्च संस्कारान् प्रयुङ्क्ते स्म । कविः कालिदासो विनयं नाम गुणं देशस्य प्रगुणीकर्तुं प्रायतत—

"मन्दः कवियशः प्रार्थी गमिष्याम्युपहास्यताम् ।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः ॥" (रघौ)
"युवा युगव्यायतबाहुरंसलः कपाटवक्षाः परिणद्धकन्धरः ।
वपुःप्रकर्षादजयद् गुरुं रघुस्तथापि नीचैर्विनयाददृश्यत ॥" (रघौ)

यत्कार्यं प्रारब्धं तत्समाप्तिर्यावत् न स्यात् न त्याज्यमित्येषा प्रवृत्ति-र्भारतस्य चिरायुष्का भवेत्, तस्यातिथिपूजनभावना दिनानुदिनं पुष्टिमृच्छेत्; यत्तनसम्बन्धि तत्कर्म महीयोजगति वृद्धिमुपयायात्, दुष्टानां निग्रहणेन, कर्त्तव्यानां पालनेन च सुखं शान्तिश्च समुत्पद्येते तस्मादिमे वशित्वम्, वाग्दुर्नीतये स्म दृश्येत तद्देतोर्दिक्षितयो मध्यात सततं साधु प्रेषितं स्याद्—इत्येतद् विमृश्य कविर्देशस्य स्वस्य तान् सर्वान् धर्मान् स्वकाव्येषु विविधकथाप्रकथनव्याजेन कीर्तयति—

(क) "सोऽहमा जन्मशुद्धानामा फलोदयकर्मणाम् ।
आ समुद्रक्षितीशानामा नाकरथवर्त्मनाम् ॥

(ख) यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम् ।
यथापराधदण्डानां यथाकालप्रबोधिनाम् ॥ (रघौ)

भारतीयराष्ट्रभावना यैः प्रकाशरश्मिभिः समुल्लसति तेषु गुरुभक्तिनामा प्रकाशरश्मिर्नितरामेव ललितामाभां बिभर्ति कविर्भारतस्यैतां विशिष्टतां संरक्षितु-मुपदिशति भारतीयाञ्जनतस्थान्—

(क) "तयोर्जगृहतुः पादान् राजा राज्ञी च मागधी ।
तौ गुरुर्गुरुपत्नी च प्रीत्या प्रतिननन्दतुः ॥"

(ख) "समाप्तविद्येन मया महर्षिर्विज्ञापितोऽभूद् गुरुदक्षिणायै ।
स मे चिरायास्खलितोपचारां तां भक्तिमेवागणयत् पुरस्तात् ॥"

(रघौ)

भारते सृष्टिप्रारम्भसमयादेव गौर्मातेव मता । तस्या रक्षणं संवर्धनं च देशोऽयं स्वकीयेषु प्रधानेषु कर्तव्येषु अवगच्छति । तामन्तरेण नास्य देशस्य देवपूजा न पितृतर्पणं न च अतिथिपरिचर्यैव भवितुमर्हन्ति तस्माद् तद्रक्षणं हि भारतं राष्ट्रियगुणेषु अन्तर्भावयति । कविः कथाव्यपदेशेन गोसेवाम्प्रति देशस्य जनं जनमाह्वयति—

(क) "आस्वादवद्भिः कवलैस्तृणानां कण्डूयनैर्दंशनिवारणैश्च ।
अव्याहतैः स्वैरगतैश्च तस्याः सम्राट् समाराधनतत्परोऽभूत् ॥"

(ख) प्रदक्षिणीकृत्य हुतं हुताश-
मनन्तरं भर्तुररुन्धतीं च ।
धेनुं सवत्सां च नृपः प्रतस्थे
सन्मङ्गलोदग्रतरप्रभावः ॥ (रघौ)

भारतीयराष्ट्रभावना यशःप्रियास्ति । सा मरणं वरं मन्यते परं यशोनाशं न कदापि द्रष्टुमिच्छति । सा प्राणान् अपि समर्प्य तदुपार्जयितुं चिरादुत्सुकतरा दृष्टा भवति । सा स्वजीवनमेव धन्यं तेनावगच्छति । भारतराष्ट्रस्य परिस्फुरन्तीमिमां विच्छित्तिं प्रति भारतीयानां हृदयमावर्जयति दिलीपोपाख्यानमुपस्थाप्य—

(क) "क्षतात् किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः ।
राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा ॥"

( ख ) त्रिसर्ग्यहिरयस्तव चेन्मतोऽहं यन्न शरीरे भव मे दयालु ।
एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु ॥ ( रघौ )

*त्यागो हि भारतराष्ट्रियतायाः सर्वस्वम् । कविरिममेव रघुचरित्रकीर्तनकैतवेन* निदधाति सहर्षम्—

( क ) "स विश्वजितमाजह्रे यज्ञं सर्वस्वदक्षिणम् ।
आदानं हि विसर्गाय सतां वारिमुचामिव ॥"

( ख ) "तं भूपतिर्भासुरहेमराशिं लब्धं कुबेरादभियास्यमानात् ।
दिदेश कौत्साय समस्तमेव पादं सुमेरोरिव वज्रभिन्नम् ॥" ( रघौ )

( ग ) जनस्य साकेतनिवासिनस्तौ द्वावप्यभूतामभिनन्द्यसत्त्वौ ।
गुरुप्रदेयाधिकनिःस्पृहोऽर्थी नृपोऽर्थिकामादधिकप्रदश्च ॥"

भारतीयैर्यदुक्तं तस्य सदैव पालनमपि कृतम् । ते वचनरक्षायां महान्ति महान्ति कष्टानि सहमाना जगता चिराद्दृश्यन्त । ते सर्वस्वमपि सकलानि सुखान्यपि त्यक्तवन्त पर वचनमुक्तं न कदापि । वस्तुतः एषा विशिष्टता वचनपालनविषयिका तान् बहुषु दुःखेष्वपातयत् । इयं तेषां जीवने नितान्तमेव महामूल्यवती सिद्धाभवत् । ते हि, यत, सर्वस्वेन स्वेन इमां केतुं प्रबभूवु । परमेतद्गुणवशात् ते समग्रेऽपि भुवने प्रसिद्धिमगु । समग्रमपि जगत् तेषु गुणमिम विलोक्य सर्वथैव तेषु अविचारपूर्वकं विश्वसितिस्म । कविर्भारतस्य स्वस्य विशेषतां स्मारयितुं वचनपालनवीरस्य दशरथस्य कथामुपन्यस्यति ।

'सा किलाश्वासिता चण्डी भर्त्रा तत्संश्रुतौ वरौ ।
उद्ववामेन्द्रसिक्ता भूविलमग्नाविवोरगौ ॥" ( रघौ )

पितुराज्ञापालने हि भारतीयता रज्यति । कविस्तदेव दर्शयति—

'पित्रा दत्तां रुदन् रामः प्राङ् महीं प्रत्यपद्यत ।
पश्चाद् वनाय गच्छेति तदाज्ञां मुदितोऽग्रहीत् ॥" ( रघौ )

राज्यतृष्णापराङ्मुखता भारतीयराष्ट्रियताया विलक्षणैव विशिष्टैका । नासन्या राजानः सुखान्युपभोक्तुं राज्यमभ्युपागमन् । अपितु क्षत्रियाणां प्रजापालनं कर्तव्यमस्ति प्रमुखमिति विचार्यैव ते राज्यभारमुद्वहमवाप्नु । कविरिमामेव राष्ट्रियतां प्रदर्शयितुं वस्तुतः इमां पद्क्तीर्निबबन्ध—

( क ) इदभक्तिरिति ज्येष्ठे राज्यतृष्णापराङ्मुखः ।
मातुः पापस्य भरतः प्रायश्चित्तमिवाकरोत् ॥ ( रघौ )

(ख) अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये
रक्षायोगादयमपि तपः प्रत्यहं संचिनोति ।
अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ॥ ( शाकुन्तले )

(ग) स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते वृत्तिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम् ॥ ( शाकुन्तले )

तपोवनानां तपस्विनाञ्च रक्षणं राष्ट्रियत्वमिदं हि निगदितुं कालिदासः प्राह—

(क) "किं तावद् व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितं
धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम् ।
आहोस्वित् प्रसवो ममापचरितैर्विष्टम्भितो वीरुधा-
मित्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः ॥ ( शाकुन्तले )

(ख) अप्यग्रणीर्मन्त्रकृतामृषीणां कुशाग्रबुद्धे कुशली गुरुस्ते ।
यतस्त्वया ज्ञानमशेषमाप्तं लोकेन चैतन्यमिवोष्णरश्मेः ( रघौ )

(ग) आधारबन्धप्रमुखैः प्रयत्नैः संवर्धितानां सुतनिर्विशेषम् ।
कच्चिन्न वाय्वादिरुपप्लवो वः श्रमच्छिदामाश्रमपादपानाम् ॥ (रघौ)

प्रजायै गृहमेधिनं भारतीयनार्यै रोचते न च विषयोपभोगाय इत्येतद्विधि प्रकारं चिन्तन् कविराह—

"भूत्वा चिराय चतुरन्तमहीसपत्नी दौष्यन्तिमप्रतिरथं तनयं निवेश्य ।
भर्त्रा तदर्पितकुटुम्बभरेण सार्धं शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥"
( शाकु० )

भारतीयराष्ट्रियतायामियमपि स्वहृद्गीया विशिष्टता विभाति यत् सा नारी-श्वरार्धियं निबध्नाति सा नारीं संसारसागरतारिणीं मन्यते सा विश्वमिति यत् तां विना न यज्ञ-पूजादिकार्यं पूर्तिमवाप्नुते न च तत्तदनुष्ठानानि फलप्रदाय-कान्येव भवन्ति । कविनानेन राष्ट्रियतां कियत्या सुन्दरतया अधः स्थितेषु श्लोकेषूपन्यस्यति ।

( क ) धृतिरस्तमिता रतिश्च्युता विरत गेयमृतुनिरुत्सव ।
गतमाभरणप्रयोजन परिशून्य शयनीयमद्य मे ॥

( ख ) गृहिणी सचिव सखी मिथ प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना हरता त्वा वद किं न मे हृतम् ॥ ( रघौ )

भारतीयराष्ट्रियत्वस्य वैशिष्ट्य नार्या पत्य स्वसत्ताया विलयनञ्च वर्तते । कविकालिदासस्याध स्थितेषु श्लोकेषु अनन्यस्यैतस्य राष्ट्रियत्वस्य स्पष्टमेव दीप्ति मत्तापूर्वक सस्फुरण विलोचनपथमुपैति । वीक्ष्यताम्—

'कल्याणबुद्धेरथवा तवाय न कामचारो मयि शङ्कनीय ।
ममैव जन्मान्तरपातकानां विपाकविस्फूर्जथुरप्रसह्य ॥
किं वा तवात्यन्तवियोगमोघे कुर्यामुपेक्षां हतजीवितेऽस्मिन् ।
स्याद् रक्षणीय यदि मे न तेजस्त्वदीयमन्तर्गतमन्तराय ॥
साऽह तप सूर्यनिविष्टदृष्टिरूर्ध्वं प्रसूतेश्चरितु यतिष्ये ।
भूयस्तथा मे जननान्तरेऽपि त्वमेव भर्ता न च विप्रयोग ॥ (रघौ)

विना तपसा न भवति मन शोधन न चात्मैव भवति बलीयान् । तपो हि किल्बिष हन्ति । तपा हि मनोभिलषितानि सर्वाण्यपि सफलीकरोति । सर्वाण्यपि शास्त्राणि पुराणानि च एकस्वरेण तपसो गुणानजस्र गीरयन्ति न तृप्यन्ति । मनुराह—

यद् दुष्कर यद् दुराप यद् दुर्गं यच्च दुस्तरम् ।
तत् सर्वं तपसा प्राप्य तपो हि दुरतिक्रमम् ॥

भारत राष्ट्र सनातनात् कालाद् तपसि अतितरां श्रद्धामास्थां च निदधान मवलोक्यते । तपो हि वस्तुतो भारतीयस्य राष्ट्रियत्वस्य परम भास्वर रूप वर्तते । कवि कालिदासोऽत्त स्वकीयेषु सर्वेष्वपि काव्येषु तपोनिहितश्रद्धोऽ वेक्ष्यते । स स्वकीयानि पात्राणि मनोमालिन्यनिरसनोद्देश्येन तपसि प्रवर्तयन् सर्वत्र समवाप्यते ।

सद्रूपसम्पदा चेदात्मान कोऽपि बलीयांस मन्यते तदा वस्तुतोऽसौ भ्रम एवात्मान पातयति । न रूप न च सम्पद् एव कारिचद् भौतिकं पारमार्थिक हित सम्पादयितु शक्नुवन्ति । तदर्थं तु तपोऽपेक्ष्यते । तेनैव मानसिकमुत्थान सम्भव तेनैव मनस शुद्धि सम्भवा । मनसि जाते शुद्धे सर्वमपि लक्ष्यम मानवो लब्धु पारयति तस्मात् तप एव श्रेयसां मूलम् । तप समवाप्य सौन्दर्य म

संस्कृत



साधनान्तरमवाप्तं सौन्दर्यं जेतुमर्हति—इत्येतस्माद्धेतोः कविः कालिदासः कुमारसम्भवे उमापावनचरितगानव्याजेन मन्येति यद् पार्वत्यामयं भ्रम एव समवर्तत यस्तां स्ववपुःसुन्दरतया भगवन्तं शङ्करं समवाप्तुं प्रेरयामास। तद्वशात् सा प्रथमं स्वोद्देश्ये न सफलतामियाय। असफलतानन्तरं सा तपोऽन्तरेण न तादृशे मनोरथे सिद्धिः सम्भवेति निश्चेतुं शेके—

"तथा समक्षं दहता मनोभवं पिनाकिना भग्नमनोरथा सती।
निनिन्द रूपं हृदयेन पार्वती प्रियेषु सौभाग्यफला हि चारुता॥
इयेष सा कर्तुमवन्ध्यरूपतां समाधिमास्थाय तपोभिरात्मनः।
अवाप्यते वा कथमन्यथा द्वयं तथाविधं प्रेम पतिश्च तादृशः॥"
"मृणालिकापेलवमेवमादिभिर्व्रतैः स्वमङ्गं ग्लपयन्त्यहर्निशम्।
तपः शरीरैः कठिनैरुपार्जितं तपस्विनां दूरमधश्चकार सा॥" (कुमारसम्भवे)

स्वच्छन्दता न कदाप्युपकारिणी। सा पतनाकूपारे निमज्जयति। शकुन्तला छन्देनान्ववर्तत। अत सा दुष्यन्त-परित्यागजनितं कष्टमप्युवाह। कविः कालिदासस्तस्मादेव कारणात् शकुन्तलां तपसा शोधयितुं कामयमानस्तामशीशपत् कश्यपाश्रमे च तपश्चरितुं प्रावर्तयत्—

(क) "सुमते, एहि इमं वृत्तान्तं नियमव्यापृतायै शकुन्तलायै निवेदयावः"
(शाकु०)

(ख) "वसने परिधूसरे वसाना नियमक्षाममुखी धृतैकवेणिः।
अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं बिभर्ति॥" (शाकु०)

यक्षो यदा स्वाधिकारात् प्रमाद्यतिस्म तदा तमपि कविरयं गृहाद् दूरीकरोति; तमपि स रामगिर्याश्रमेषु निवासयति येन सः प्रमादाज्जुगुप्सेत, कृते च स्वकीये प्रमादे खिद्येत, कदापि न पुनः प्रमादमनुष्ठातुं प्रतिजानीयात्; अनुतापेन च मानसं स्वं नेनिज्यात्; प्रेयसीप्रणये न तथा रज्येत् येन पुनः स्वामिशापो वेपयेत्। इदमेव कृत्स्नं विमृश्य यक्षमपि वस्तुतोऽसौ तपस्येव नियोजयति तत्कथागानकरं मेघदूतं च प्रणयति जनसामान्यमुपदेष्टुम्—

"कश्चित् कान्ताविरहगुरुणा स्वाधिकारात् प्रमत्तः
शापेनास्तंगमितमहिमा वर्षभोग्येण भर्तुः।

यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥" ( मेघ० )

महाकवि: कालिदासस्तपोमहिमानं सकलेष्वपि सर्वेषु काव्येषु गीत्वा 'भारतस्य राष्ट्रियताया प्रमुखमङ्गं तप' इत्येतद् बोधयति भारतीयां जनताम्।

भारतीयराष्ट्रियता संस्कारेषु भ्रद्धत्ते। यथा शाणोपले घर्षणान्मणिर्भवति भासुरस्तथैव संस्कारैर्मानवोऽपि क्षालितकालुष्यो जायते। स संस्कृतो भूयो-ऽप्यासते। तस्माद् भारतीयता तेन तेन संस्कारेण तस्य मानसं पवित्रीकर्तुं सततं जीवनपर्यन्तं प्रयतमानैव दृश्यते। राष्ट्रिय कवि कालिदासो हि संस्कारसम्बन्धिनीं राष्ट्रियता स्मारयितु तामङ्गीकर्तुं च प्रेरयति विविधेन प्रकारेण—

"स जातकर्मण्यखिले तपस्विना
तपोवनादेत्य पुरोधसा कृते
दिलीपसूनुर्मणिराकरोद्भव
प्रयुक्तसंस्कार इवाधिकं बभौ ॥" ( रघौ )

यानि साधनानि देशं यावत आभ्यन्तरतश्च सुन्दर सुसमृद्ध समुन्नतञ्च सर्वविधभावेन कुर्वन्ति तानि साधनान्येव 'राष्ट्रियता' इत्येतेन नाम्नाऽभिधीयन्ते। तेषु हि साधनेषु विद्यास्ति साधनप्रमुखम्। भारतं विद्यां स्वकीयराष्ट्रियताया जीवन मन्यते। तत् तामेव तस्या आधायकत्वेनावगच्छति। विद्यया राष्ट्रं शुभं पश्यति चिरायुर्भवति स्थिराविचलश्रीकं भवति, भवति चाजेयमिति भारतस्य विश्वास। तस्यास्मन उद्घोषोऽयमुच्चैः—

"सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि।"

कवि कालिदासो हि स्वकीयं राष्ट्रं विद्यायां रतं विलोकयितुमुत्सुक। स तादृशं सन्दर्भं समुपन्यस्यति येन देशः प्रेरणामवाप्नुयात्—

( क ) "अथोपनीतं विधिवद् विपश्चितो विनिन्युरेनं गुरवो गुरुप्रियम्।
अवन्ध्ययत्नाश्च बभूवुरत्र ते क्रिया हि वस्तूपहिता प्रसीदति ॥ ( रघौ )

( ख ) निर्बन्धसञ्जातरुषार्थकार्श्यमचिन्तयित्वा गुरुणाहमुक्तः।
वित्तस्य विद्यापरिसंख्यया मे कोटीश्चतस्रो दश चाहरेति ॥" ( रघौ )

राष्ट्रियताघटकेषु तत्त्वेषु धर्मो नाम तत्त्वमपि प्रमुखम्। अभ्युदयनिःश्रेयसात्मकत्वात् स सर्वेषामपि मानवानां सुहृत्। धृतिक्षमादमादिका एव धर्मस्य अङ्गत्वेन प्रसिद्धाः। धर्मस्य महत्तामुद्दिश्य प्रोक्तम्—

एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः ।
शरीरेण समं नाशं सर्वमन्यत्तु गच्छति ॥

राष्ट्रस्य धर्मोपेतत्वं सर्वथैव वाञ्छनीयम् । कालिदासकृतिषु धर्माख्यायाः राष्ट्रियतायाः प्रतिपदं दर्शनं भवति—

( क ) "रेखामात्रमपि क्षुण्णादा मनोर्वर्त्मनः परम् ।
न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः ॥" ( रघौ )

( ख ) स्थित्यै दण्डयतो दण्ड्यान् परिणेतुः प्रसूतये ।
अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः ॥ ( रघौ )

( ग ) "कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।" ( शाकु० )

( घ ) "किं कृतकार्यद्वेषो धर्मं प्रति विमुखतोचिता राज्ञः ।" ( शाकु० )

( ङ ) यद्यप्यासां कामं तदपगतिरभिन्नस्थितिरसौ
न कश्चिद् वर्णानामपथमपकृष्टोऽपि भजते ।
तथापीदं शश्वत् परिचितविविक्तेन मनसा
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव ॥ ( शाकु० )

यज्ञोऽपि भारतीयराष्ट्रियताया महनीयाङ्गत्वेन स्मृतः । न विना यज्ञेन राष्ट्रियतायाः निर्वृत्तिः । यज्ञस्य महिमा श्रुतिमारभ्याधुनिकं साहित्यं यावद् वितत आस्ते ।

( क ) "यत् पुरुषेण हविषा देवा यज्ञमतन्वत"
( ख ) "देवा यद् यज्ञं तन्वाना अबध्नन् पुरुषं पशुम्"
( ग ) "यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः"
( घ ) "इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः"
( ङ ) "यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः"

इत्येवमादीनि प्राच्यानि वाक्यानि यज्ञमहिम्नि शास्त्रेषु प्रमाणानि भवन्ति । कविः कालिदासश्च तमेव यज्ञमुद्दिश्य तदनुकथानिबन्धेषु समुद्गायन् श्रुतो भवति । स तथेहते यथा भारतं नैजमिदं राष्ट्रियत्वमभिजानीयात् । तत्काव्येषु सर्वेषु यज्ञोल्लेखोऽवलोक्यते—

( क ) "मखांशभाजां प्रथमो मनीषिभिस्त्वमेव देवेन्द्र सदा निगद्यसे ।
अजस्रदीक्षाप्रयतस्य मद्गुरोः क्रियाविघाताय कथं प्रवर्तसे ॥" ( रघौ )

( ख ) "मद्धर्मस्पर्शिभयाद् रक्षांसि न इष्टिविघ्नमुत्पादयन्ति ।"

(ग) "सायन्तने सवनकर्मणि संप्रवृत्ते वेदीं हुताशनवतीं परितः प्रयस्ताः ।"
(शाकु०)

(घ) यज्ञाङ्गयोनित्वमवेक्ष्य यस्य
सारं धरित्रीधरणक्षमं च ।
प्रजापतिः कल्पितयज्ञभागं
शैलाधिपत्यं स्वयमन्वतिष्ठत् ॥ (कुमार०)

भारतीयराष्ट्रियत्वस्यान्यतमं वैशिष्ट्यमिदमपि यत् तदाधिभौतिकतामुपश्लोकयदपि आध्यात्मिकतामुपवीणयति । कविः कालिदास आध्यात्मिकतां भारतराष्ट्रस्य गौरवाभरणं मन्यते ।

तदीयमिदं सुदृढं विस्रम्भणं यदाध्यात्मिकता राष्ट्रस्य जीवनम्प्रति सुधायते । सा तज्जीवनं भाति वर्धयति प्रमोदयति च । [illegible] अपि तु सा तस्यामृतत्वाय कल्पते । भारतीयराष्ट्रियता सत्यप्येतावती पुरातनी अद्य जीवति इत्यत्र कारणमस्ति "आध्यात्मिकता ।" अतः कविः कालिदासोऽधःस्थितेषु श्लोकेषु आध्यात्मिकताश्रियं चिरन्तनां राष्ट्रमुपदिशति स्वकीयाध्यात्मिकत्वाख्यं राष्ट्रियत्वं स्वीये चरिते परिणमयितुम्—

"अथ वीक्ष्य रघुः प्रतिष्ठितं प्रकृतिष्वात्मजमात्मवत्तया ।
विषयेषु विनाशधर्मसु त्रिदिवस्थेष्वपि निःस्पृहोऽभवत् ॥"
"अकरोदचिरेश्वरः क्षितौ द्विषदारम्भफलानि भस्मसात् ।
इतरो दहने स्वकर्मणां ववृते ज्ञानमयेन वह्निना ॥"
"न नवः प्रभुराफलोदयात् स्थिरकर्मा विरराम कर्मणः ।
न च योगविधेर्नवेतरः स्थिरधीरा परमात्मदर्शनात् ॥" (रघौ)

कलाप्रियता भारतीयाया राष्ट्रियतायाः कमनीयमङ्गमद्भुतम् । एषा कलाप्रियता मनोहरत्वात् न केवलं पुरा जन-नयनानि जनमानसान्यपहरदपि तु सा भारतं समृद्धयागाधया अपरिमितया च श्रिया नितरामेव समृद्धमयं तस्मिंश्च कुर्वती सर्वस्मिन् अपि भुवने च प्रथितञ्चकार । पुरातनं भारतं कलासु प्रीतिं विपुलां निदधौ । वात्स्यायनशास्त्रादिना तस्य कलाप्रियत्वं सम्यग् विदितं जायते । तारतम्यात् देशस्यास्य विश्वविदिता कलाप्रियताभिधा राष्ट्रियता चयं जगाम । भारतं जनाः संसारे यदि चारित्र्यादिना ज्ञातुमर्हन्त्यद्य तत् ते कलयापि

नर्दयथा खलु प्रत्यभूत्। अत एवास्माभिरिह कला 'राष्ट्रियत्वेन' समुद स्तुता। कविः कालिदासः—

"विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः
संगीताय प्रहतमुरजाः स्निग्धगम्भीरघोषम्।
अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः
प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः॥ (मेघ०)

इत्येवमादिभिरनेकैः श्लोकैः स्वदेशवासिनां हृदयेषु कान्तदुरागितामुत्पादयन् समस्तलोकयते। इत्थं हि सर्वत्र कालिदासस्य काव्येषु राष्ट्रियकवित्वं वैजयन्तीव दोधूयमानमुच्चैश्चकास्ति। भूयासुर्भारतीयाः कालिदासस्य भारतीलक्षाः। येन पुनस्तेषां हृदयभवनं राष्ट्रियत्वालोकेनालोकितं स्यात्।



## मेघदूते कालिदासः

मेघदूत नाम काव्य संस्कृतसाहित्यस्य प्रस्फुरत्प्रभास्वमस्ति मानवप्रकृतेर्बाह्यप्रकृतेश्च तत्र निरीक्षण सूक्ष्मतया कृत वर्तते। तत्र बाह्यप्रकृतियादृशी प्रधानता गमितास्ति न तादृशी कस्मिश्चन्यस्मिन् काव्ये नीता परिलक्ष्यते। तद् वस्तुतो विरहप्रपीडितस्योत्कण्ठितहृदयस्य मार्मिकव्यथास्ति। तत्र प्रणयस्य विह्वलता विवशता विकलता च आत्मान साकारे रूप परिणमयन्ती संलक्ष्यते। आन्तरिकाणां भावानां यादृश चित्रण मञ्जुलतया मृदुलतया च तत्र कृत दृश्यते न तादृश क्वाप्यन्यत्र। मानवस्य मानसिकान् भावान् प्रबोधयितु यत् सौन्दर्यं भवति प्रभविष्णु तदेव सौन्दर्यं तत् काव्य मधुर विकिरत् सचेतसा पुर समुपतिष्ठते।

सर्वेषामपि सुधियामिद मत्य सुविदितमेव यत् सौन्दर्यमेव काव्येषु 'रस' इत्येतेन नामधेयेन विश्रुतम्। कविस्तमेव साधयितु काव्य रचयति। मङ्गलाना विधान स रस शृङ्गारकरुणादिभेदेन नवविधता भजते। नवस्वपि रसेषु शृङ्गारो नाम रसो रसराज इति सर्वेऽपि साहित्यशास्त्रिण साधु विदन्ति। यथा त्वरया स मानस मथ्नाति मदयति चपलयति च तत् तथा नान्यस्तस्मात् स रसेषु श्रेष्ठो रसो मत। सयोग विप्रलम्भभेदेन स द्विविध। उभयोरपि भेदयोर्विप्रलम्भ शृङ्गारो मधुरतर। तत्र चेतसो द्रुतीकरणक्षमतातितरा तरस्विनी भूत्वा विभाति तस्मात् तत पर मधुरिमाण न कोऽपि अन्यो रसो विन्दति। एष विप्रलम्भ शृङ्गार एव मेघदूतस्य काव्यस्याङ्गी रस। यद्यपि विप्रलम्भे शृङ्गारे काव्यान्तराण्यपि सन्ति बहूनि, परमत्रत्य शब्दार्थमिथुनमन्यामेव विलक्षणता वहति, अन्यामेव वस्तुतत्त्वोपपादनप्रवीणता परिपुष्णाति, अन्यामेव भावाभिव्यञ्जनकरीं ललितता बिभर्ति, अन्यामेव कुशला कला कलयति अद्भुत एव सरम्भ सर्वत्रात्र विभ्राजते तस्मात् काव्यमिदमनन्यगतामेव कमनीया श्रिय लालमति। नास्य तदीयमेकमप्यङ्गमेवविध यत्र स्यात् सुन्दरतरम्। यथात्रार्थो हि प्रसादयति मानस तथैव शब्दोऽपि आह्लादयति तत्। यथा भावाना वल्गुताश्र भावुकान् नितरां प्रीणाति तथैव छन्दोऽलङ्कारगुणादिमामस्यपि भृश नन्दयति तान्।

एतासां विशिष्टतानां सद्भावादेव काव्यमिदं सवर्णानि सर्वाणि काव्यानि सहेलं परिहरद् दृग्गोचरतां प्रपद्यते ।

मेघदूतं यद् वर्णयति तच्चिरतरं प्रियम् । यावच्च तद्रसयति तावच्च पाठको न च श्रोता ततो विरमति । तत् समस्तमां मनःसु उत्तरोत्तरं वर्द्धमानामौ-त्सुकतां महोदयां कुतूहलिनीं धारामेघवत् स्वान्तस्य मर्मभागं धूनयति, तत् सुखान् सुकुमारान् भावान् तद्बोध्योत्पाद्य च तान् मर्मस्थानान् दिदृक्षति । मानवस्तत् काव्यं गतिदर्शनविशेषचरितं काव्यं न मन्वा वर्णितमानवतामान्य-चरितं काव्यं मन्यते । वर्णनविशेषेऽदारत्वात् तत् तादृशमेव भवत् सचेतसां पुरः परिस्फुरति । तत्रयां सन्देशगाथायां मानवो नैजसन्देशगाथामेवावगाहते, अध्ययनस्य श्रवणस्य वा वेलायां तत् कामस्येतादृशं स्थिति यमुद पद्गुशात् पाठकः कोऽहं क्वाहमस्मीत्येतत् सर्वं विस्मरन् यक्षाद्भिन्नमेवात्मानमभिमन्यते । साधारणीकरणस्य मादृशमेनावकाशा सर्वत्र सर्वस्य सम्पादने नितरां च पाठक-स्तज्जनितामन्दमान्द्रानन्दे निमज्जत्युन्मज्जति च । तदानीं द्वैतस्य तिरो-दधाति अद्वैतमेवोन्मिषति चिरम् । शम्भरीयसारसदं रामगिर्याश्रमं कस्मात्-ममाकान्तत्र मदनमलकायां परिगमते । अस्मादृष्टे पुरस्तात् वप्रक्रीडापरिणत-गजप्रेक्षणीयानां जलधराणां घटोत्थितन्ती समुद्वेलति, सर्वत्र सर्वत्र धाराटना-मयं मुखरा समुदिता भवन्ती शब्दं रञ्जयितुमुपक्रमते; किमधिकेन सर्वमपि वातावरणं तस्मिन्नेव वातावरणे परिवर्तते यदस्मिन् काव्ये वर्णिता भवन्ति । सम्यग् युक्तमेवोक्तं केनापि—

> "अपारे काव्यसंसारे कविरेव प्रजापतिः ।
> यथास्मै रोचते विश्वं तथेदं परिवर्तते ॥"

रमणीयार्थसंनिपादकाः शब्दाः काव्ये सर्वत्रापेक्ष्यन्ते । शब्देषु रमणीयार्थता तदैवोन्मिषति यदा ते व्यञ्जकतां वहन्ति एवमेवार्था अपि त एव विदग्धहृदता भवन्ति ये व्यङ्ग्यतां निर्दिशन्ति । अधिमेघदूतं व्यञ्जकानां शब्दानां व्यङ्ग्या-नामर्थानां पदे पदे दर्शनमुपलभ्यते । व्यङ्ग्यव्यञ्जकता काव्यस्यानुत्तमसौन्दर्य-मस्ति । अतएव आचार्य आनन्दवर्धनः प्राह—

> "सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन ।
> यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः ॥"

इह मेघदूतस्य मनोऽभिरामशब्दार्थललिततामवलोकयितुं कानि चनोदाहरणान्युद्ध्रियन्ते येन तस्य सा विशिष्टता हृदिसरणिमवतरेत्।

"कः सन्नद्धे विरहविधुरां त्वय्युपेक्षेत जायां
न स्यादन्योऽप्यहमिव जनो यः पराधीनवृत्तिः ॥"

इत्यत्र प्रयुक्तं 'कः' इत्येतत् पदं विप्रलम्भशृङ्गारस्य सर्वान् अपि भेदान् प्रति मधुरमिश्रितं विदधत् स्वसत्तामुपस्थापयति। मेघे सति सन्निहिते मानेर्ष्याकरुणप्रवासादिजनिता विप्रलब्धता सम्भोग एव यथासम्भवं सन्निविशते न कोऽपि ना तदा असहनीयं विप्रयोगं सोढुं पारयति। यः कोऽप्युपायं उपलभ्यते तमालम्ब्य विप्रयुक्तः प्राणी स्वकीयां प्रियतमामाश्लिष्यात्मानं रमयति। तथाविधेऽपि क्षणे यो न विप्रयुक्तत्वमपनेतुं क्षमते नूनमसौ नितान्तदयनीयो दीनश्च। अत 'कः' इति पदं दयनीयतादीनतार्थमभिव्यनक्ति।

"काले काले भवति भवतो यस्य संयोगमेत्य
स्नेहव्यक्तिश्चिरविरहजं मुञ्चतो बाष्पमुष्णम् ॥"

इत्येतस्मिन्श्लोके समागतं 'काले' इत्येतत् पदं मया सुहृदभ्युपेति तदा इत्येतदर्थमवधानपूर्वकं वर्षर्तौ कामोद्दीपकतां प्रकटीकरोति।

"मार्गं तावच्छृणु कथयतस्त्वत्प्रयाणानुरूपं
सन्देशं मे तदनु जलद श्रोष्यसि श्रोत्रपेयम् ॥"

इत्येतस्मिन् श्लोके पठितः 'पेयम्' इत्येव शब्दः सन्देशस्य विजितसुधात्वं विनिगमयन् विज्ञापयति यत् प्रियतमायै प्रेष्य सन्देशः केनापि सुभगेनाभिन्नहृदयमित्रेणैवाकर्ण्यते। सन्देशस्य नितान्तगुह्यत्वात् रहस्यमयत्वाच्च यद्यपि सर्वैरेव परमोत्सुकतया तच्छ्रवणे स्वाभिलाषः प्रदर्श्यते परं न स सर्वश्रवणविषयीक्रियते। तद्विधविशिष्टतायुक्तत्वात् तस्य पेयतायाः सर्वथैवान्यसर्वविधपेयत्वविजयिता सिद्धैव। अमृतं तु अविरलाः अपि प्राप्तुं शक्नुवन्ति परं दयितायै प्रेष्यमाणं सन्देशामृतम् कोऽपि विरल एव पातुं प्रभवति। तस्मादमृतं प्रियासन्देशामृतस्य षोडशीमपि कलामध्यारोढुं न शक्नोति।

"सद्यः सीरोत्कषणसुरभिक्षेत्रमारुह्य मालम्"

इत्येतस्यां पङ्क्त्यां समुपन्यस्तः 'क्षेत्रम्' इत्येव शब्दः 'कलत्रम्' इत्येतमर्थमभिव्यञ्जयन् परकीयायाः उपभोग्यतायां क्रियमाणस्यैव सुखं मधुरमित्येतं भावमुन्नाययति।

"वाचाल मा न खलु सुभगंमन्यभावं करोति"

इत्यत्र सन्निवेशितं 'सुभगंमन्यभावं' इत्येतत् पदं सुप्रयोगेन सौन्दर्यं सुन्दरस्य हि यक्षस्य निरवलेपतामाविर्भाव्य तस्मिन् परिस्पन्दमानां कामपि हृदयहारिणीं भावुकतामभिव्यनक्ति।

'वेणीभूतप्रतनुसलिला सा त्वतीतस्य सिन्धुः
पाण्डुच्छाया तटरुहतरुभ्रंशिभिर्जीर्णपर्णैः।
सौभाग्यं ते सुभग विरहावस्थया व्यञ्जयन्ती
कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः॥"

इत्येतस्मिन् श्लोके समावर्शितानि वेणीभूतप्रतनुसलिलादिपदानि केशपाशे वियोगवशाज्जनितं केशपाशीयं रूक्षत्वं कृशत्वञ्च ध्वनयन्ति। 'विधिना' इत्येष च शब्दः 'सम्भोगेन' इत्यतस्मिन् अर्थे पर्यवस्यति किञ्च 'उपपाद्य' इत्येतस्य शब्दस्य 'यत्' प्रत्ययान्तता मञ्जुलामेव व्यञ्जनां समवतारयन्ताम्—

विरहावस्थया कृशता गताया सुन्दर्याः कृशता प्रियतमसंयोगमन्तरेण न दूरीभवति अतस्तस्या गाढालिङ्गनमतितरामेवौचित्यावहम्।

"अत्यादित्यं हुतवहमुखे सम्भृतं तद्धि तेजः"

इत्यत्र प्रयुक्तं 'तेज' इत्येतत्पदं तेजसः साक्षाद् भगवतो मूर्त्यन्तरत्वात् पूज्यत्वं किञ्च 'मुखे' इत्यतत् पदं 'पवित्रता' इत्येतमर्थं प्रकटीकरोति।

कुशलकवीनां कृतयो भवन्ति विश्वजनीनाः। कवयः काम स्वरचनासु कस्यापि पुरुषविशेषस्य किंवा कल्पितस्य कस्यचन चरित्रं गायन्तु परं तेषां तथाविधान्यपि काव्यानि वस्तुतस्तु मानवमेव वर्णयन्ति। तत्र मानवस्यैव सामान्यस्य धर्मा भावाश्चरित्रञ्च गीयन्ते अतस्तेषां रचना—काव्यानि—जगद्धिता- यैव कल्पन्ते। कथाविशेषस्तु तत्र व्यपदेशत्वमेवोपतिष्ठते। कविः कालिदासोऽपि अस्मिन् मेघदूते यक्षस्य सन्देशाङ्कनच्छलेनैतदेव गातुं प्रावर्तत यन्मानव इह त्रिभुवने सप्राणा विद्यते स कदापि आधिभौतिकं कदापि आध्यात्मिकं कदापि चाधिदैविकं दुःखं दृश्यीकरोति। कदापि त्वेवंविधापि दुःस्थितिस्तमास्कन्दति यत् तानि त्रिविधानि यानि दुःखानि युगपदेव तं दुन्वन्ति। तस्य कुशलन्तु जातु कदापि दृश्यम् भवत्येव न। स तु स्वावसरे स्वकीयं स्नेहिनं संस्मरति, आकाङ्क्षति, च तदीयं दर्शनं, तत्पविधं स्वकुशल-संवाद-प्रेषणं, स्वप्रेमास्पदस्य च कुशल-

वृत्तान्तावगमनम्। एतदर्थं स तस्यामवस्थायां च कमपि प्रयत्नं कर्तुं पारयति तमेवावलम्बते निर्विलम्बम्।

कविः सम्यग् जानाति यन्मानवः प्रकृत्या निर्बलः प्रागभूदस्ति यदपि तत्पक्षे प्रयुक्तं भवति किंवा कृतं मज्ञायत तद् तमाश्रयमपि प्रत्ययति च परमनावता तु न तस्य कोऽपि ज्ञायते लाभः। उचितं युक्तश्चेद् यद् तादृगुपायोऽवलम्ब्यते यथाविधेन सः भ्रंशितोऽपि स्यादुपकृतश्च स्यात्। कविरयं कम आश्रयति तस्मादशमेव भवति। मानवस्तदायन कार्ये सम्बन्धनामतिदृश्यामधिगच्छन् उत्तरोत्तरं मैत्रिकीमाध्यात्मिकीञ्च समुन्नतिं विन्दति।

कविः कालिदासः एतस्मिन् मेघदूतकाव्ये मानवस्य दुर्बलताया कोमलहृदयताया अर्थात् प्रायः पदे पदे सुखान्वेषणस्याभ्युत्थानञ्च कामयमानस्य कान्तया प्रदर्शयति यथाचितस्वरम्। क्वचित् स तु—

"याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा"

क्वचित्—

"न क्षुद्रोऽपि प्रथमसुकृतापेक्षया संश्रयाय
प्राप्ते मित्रे भवति विमुखः किं पुनर्यस्तथोच्चैः"

क्वचित्—

"रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय"

क्वचित्—

"मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः"

क्वचित्—

"आपन्नार्तिप्रशमनफलाः सम्पदो ह्युत्तमानाम्"

इत्युपदिशन् श्रुतो भवति।

लोकस्य सर्वाङ्गीणं शुभं भूयादित्येव कवेरभिमततमं। स "नानाविधभूय-मन्दशान्तकथावसराकर्णनावसरो पान्थानां श्रान्तानां चेतोऽतितरां ध्यानावस्थितं भवति चेद् तदानीं तदुपकारिणी वार्त्तैव भवेत्, चेत् तेषां मङ्गलमयोपदेशः सुधासारायिता स्यात्, चेत् तेषां हितार्थं मन्मनसि समुपस्थापिता क्रियेत तदा नियतं तास्ते मनोऽधिष्ठिता विधास्यन्ति महत्सु यत समुचिते सदवसरे समुदीरिता वाक् प्रायेण सफलैव भवतीति निश्चित्य स्थाने स्थाने नानाविधान् उपदेशान् उपन्यस्यन् कथया मनोहरमसमुपसारयति। 'स्वधर्मकर्मसु प्रयतमाना नरा-

परिभव प्रयान्त्यतस्ताद्दोभ्यो फलहानिकर्मभ्य दूर एव सस्थातव्य' मित्येतद् वच एव स अवतारयति—

"ये सरम्भोत्पतनरभसा स्वाङ्गभङ्गाय तस्मिन्
मुक्ताध्वान सपदि शरभा लङ्घयेयुर्भवन्तम् ।
तान् कुर्वीथास्तुमुलकरकावृष्टिपातावकीर्णान्
के वा न स्यु परिभवपद निष्फलारम्भयत्ना ॥"

"सुखदु खानि जीवनेन सार्धमेव सयुतानि सन्ति कदाप्येतन्न सम्भव यत्कोऽपि जन सततमत्यन्तसुखान्येव निर्विशेत् वा सदैव दु खान्येव । जीवनसरित् सुखात्मिकायां दु खात्मिकायाञ्च धारायां–मुभयविधायामपि भूम्यां–प्रवहति । तस्मात् द्वन्द्वानि सधैर्यं तितिक्षेत देही"त्येतद्भावमेवमुद्भावयति—

"कस्यात्यन्त सुखमुपनत दु खमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥"

कवेर्लोकानुभवो महान् तस्य दृष्टिर्दूरदर्शिनी तदीय ज्ञान व्यापकमगाधञ्चात-स्तस्यापि सत्यस्य कमनीयतालोचनगोचरीभवति । स यत् किमपि वक्ति तद्वच सत्यत्वात् स्वकीयेन दिव्येनालोकेनाज्ञान तमो झटित्युच्छिनत्ति । तदुक्तिस्थितसत्यताश्री प्रेक्ष्यताम्—

'मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेत
कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसस्थे"

अन्यदपि श्रूयताम्—
"कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु"

अन्यदपि विलोक्यतां पीयतां च रस —
"स्त्रीणामाद्यप्रणयवचन विभ्रमो हि प्रियेषु"

अस्मिन् ससारे मानवमभितो विपद सञ्चरन्तेऽतस्तेषां कुशलमेव प्रष्टव्य स कुशलाकाङ्क्षिण सकाशात्पून सुखमनुभवति इत्येतत् सत्य सर्वदास्माभिरनुभूयते । स च प्रिय यदास्मत्कुशल परिपृच्छति तदास्माक मन आश्वसिति । कविरिदमेव सत्य दर्शयति—

"पूर्वाभाष्य सुलभविपदा प्राणिनामेतदेव"

करुणावृत्तेरार्द्रान्तरात्मत्वस्यमन्यं दर्शयति कविरेभि: शब्दै:—

"सा सन्यस्ताभरणमबला पेशलं धारयन्ती
शय्योत्सङ्गे निहितमसकृद् दु:खदु:खेन गात्रम्।
त्वामप्यस्रं नवजलमयं मोचयिष्यत्यवश्यम्
प्राय: सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा ॥"

काव्यस्यास्यापरं सौन्दर्यमस्ति प्रकृतिसुषमायाश्चारुतया चित्रणम्। आदितोऽन्तं यावत् काव्यमिदं प्रियाया प्रकृतेरनवद्यानि अन्नद्यतानि च विविधानि बहुलानि दृश्यानि प्रस्तवीति कवि.। वस्तुतः मन्यन्तिदं यत् काव्यमेतत् प्रकृतेरेव काव्यमस्ति। तत्राभ्यन्तरीया बाह्या च प्रकृतिरन्योन्यं गाढमालिङ्गन्ती वीक्ष्यते। चेतनाचेतनयोर्मधुरं संयोगं कारयित्वा तयोरैक्यधियञ्च जगतः पुरो वितरय कविर्यमुपकारं मनोज्ञं जगतश्चकार तदर्थं तद् सर्वथैव कविम्प्रति कृतज्ञतां वहति। यस्मिन् काव्ये प्रकृति-पुरुषो मेघ स्वयं सन्देशहरः स्यात्; मार्गश्च यस्य मेघस्य रहस्यावहज्योतिःपुञ्जपावनं गगनं स्यात्; अलकां गन्तुं यस्य मेघस्य तरणीया नाना सानुमत्सरिद्-कान्ताराादिपदार्था: स्युस्तस्मिन् काव्ये काप्येतादृशं स्थानं कथं द्रष्टुं शक्यं भवेत् यत्र स्यात् प्रकृति-पेशलम्।

मेघदूते क्वचिद् स्निग्धच्छायातरुलसितः पुण्योदकपूतो रामगिर्याश्रमः, क्वचिद् कुटजकुसुमानां सौरभम्, क्वचिद् बलाकानां पङ्क्ति:, क्वचिच्चातकानां निवहः, क्वचिदुच्छिलीन्ध्राया वसुधायाः सुन्दरता, क्वचिद् स्रोतसां हृदयहारिणी तरलता, क्वचिच्छ्रुकशरासनस्यच्छटा, क्वचित् सद्य सीरोत्कषणसुरभिक्षेत्राणां हसन्ती श्री, क्वचिच्च मधुकरगुञ्जितकुञ्जानाञ्च लक्ष्मीः दिव्यानेव विभ्रमान् प्रवर्षन्ती लक्ष्यते। वस्तुतः काव्यमिदं प्रकृतेरनुपमा रङ्गशालेव भाति। यथा प्रेक्षागृहे उपविष्टो दर्शको रङ्गमञ्चे विविधानि विचित्र-विचित्राणि दृश्यानि पश्यति तथैवास्य काव्यस्य पाठकोऽपि स्वसम्मुखे मनोहराणि प्रकृतेर्बहूनि रूपाणि नवनवानि प्रेक्षते। विन्ध्यादिकानां महीधराणां कमनीयता कदाचुपस्थिता भूत्वास्मान् नन्दयति, कदापि स्फुटकमलामोदमैत्रीकषायः शिप्रावातोऽस्मान् संस्पृश्य प्रमादयति, कदापि पण्यस्त्रीरतिपरिमलोद्गारीणि शिलावेश्मान्यस्मदीयां कामवासनां जागरयन्ति; कदापि कनकनिकषस्निग्धा सौदामनी अस्मान् रञ्जयति; कदापि सगरतनयस्वर्गसोपानपङ्क्तिर्मन्दाकिनी नः पुनाति। अहह, ज्ञायते-अस्मिन् काव्ये हि वेधसः सकला अपि प्रकृतिः कविना शब्दब्रह्म-रूपे परिवर्त्य सन्नतिष्ठा-

पितास्ति । कन्यमिदं न यद्यपि काननं न विविधपशुपक्षिसंदर्शनभवनं नान्यदेव किमपि कौतुकनिकेतनं, परं सचेतसां वृन्दं, दन्तिनां निकरः, चमरीणां निवहः, दारभागां समुदायः, चकितानां हरिणीनां वृन्दम्, चक्रवाकयोर्मिथुनं, मीनानां श्रेणी, मयूरतानामाली, पारावतानां निकुरम्बम्, शैलराजस्य हिमालयस्य शोभा, देवदारूणां वनम्, कीचकानां ध्वनिः, सर्वसौन्दर्यसद्मनः कैलासस्य साधुता, नानाकुसुमसुरभिसुरभीण्युद्यानानि, रत्नानामर्चिः, जलवस्यन्दिनश्चन्द्रकान्तमणयः, मरकतशिलानां राशिः, सारिकायाः शब्दः, चलकुवलयानां कान्तिः, गैरिकादिधातूनां छविः, कदलीनामुद्यानम् । मुक्तानां समूहः, सूचीभेद्या तमस्विनी, चन्द्रिकोद्भासलसिता रजनी, अन्यानि चानेकानि वल्गूनि वल्गूनि वस्तूनि मुदमाप्याययद् विद्यमानानि लक्ष्यन्ते । मेघदूतं काव्यं नास्माकं समक्षे प्रकृतिदेव्या नयनाभिरामां छविमेव, न केवलं विलासिनां नानाविभ्रममदानि हर्म्याण्येव, न च राजराजस्य सर्वसमृद्धिसमृद्धामलकामेव, न च भोगप्रधानजीवनस्य सौन्दर्यमेवोपन्यस्य स्यपितु तत् सूक्ष्ममाध्यात्मिकं सौन्दर्यमपि सन्निदधाति । सदेवतस्तु शृङ्गारपरं काव्यमास्तेऽपरतस्तच्छिवचैतन्यप्रतिपादनपरञ्च काव्यं विद्यते । आध्यात्मिकतत्त्वस्य रहस्यभूतत्वात् काव्यमेतदाध्यात्मिकं सौन्दर्यमभिधया न प्रकटीकृत्य रहस्यात्मिकयैव रीत्या तदाविर्भावयति । इदं हि काव्यस्यास्यापरमेव वैशिष्ट्यं नैजम् । कविकालिदासस्य शिवतत्त्वं तदेवाद्वैततत्त्वं यद् वेदान्तप्रतिपाद्यमद्वैतं ब्रह्म वर्तते । एतद्धि तथ्यं तस्यान्येभ्योऽपि काव्येभ्यः स्फुटमभिव्यक्तीभवति । अत्र हि काव्यादस्मात् तस्य ध्वननं दर्शयितुं दिङ्मात्रयत्न आधीयते ।

(क) "भर्तुः कण्ठच्छविरिति गणैः सादरं वीक्ष्यमाणः"

(ख) "पुण्यं यायास्त्रिभुवनगुरोर्धाम चण्डीश्वरस्य"

इत्यादिना तस्य तत्त्वस्य त्रिभुवनगुरुत्वं,

"कुर्वन् सन्ध्याबलिपटहतां शूलिनः श्लाघनीयां"

इत्येवमादिना तस्य तत्त्वस्याविकलफलप्रदानशीलत्वं,

"नृत्यारम्भे हर पशुपतेरार्द्रनागाजिनेच्छाम्"

इत्यादिना तस्य षड्विधपाशबद्धपशूद्धरणक्षमत्वम्,

"तत्र स्कन्दं नियतवसतिं पुष्पमेघीकृतात्मा"

इत्यादिना तस्याखण्डतत्त्वस्य सूर्यातिशायितेजोवत्त्व सकलमङ्गलप्रसव

भूमित्वं च ज्ञापयन् कविर्वक्ष्यमाणाभिराभिः पङ्क्तिभिस्तस्य स्मरणं पुन पुनर्विदधच्च तृप्यति—

( क ) "धौतापाङ्गं हरशशिरुचा पावकेस्तं मयूरम्"

( ख ) "शोभां शुभ्रत्रिनयनवृषोत्खात-पङ्कोपमेयाम्"

( ग ) "संसक्ताभिस्त्रिपुरविजयो गीयते किन्नरीभि"

( घ ) "हित्वा तस्मिन् भुजगवलयं शम्भुना दत्तहस्ता"

( ङ ) "क्रीडाशैले यदि च विचरेत् पादचारेण गौरी"

( च ) "मत्वा देवं धनपतिसखं यत्र साक्षाद् वसन्तम्"

तस्य शिवतत्त्वस्यावाप्तिं विना न दुरितानि नश्यन्ति न चाविनाशि पदमेव लभ्यते शास्त्रमतः कविर्लोककल्याणाय तदाराधयितुं केनापि कोविदप्रियेण प्रकारेण वदति—

"तत्र व्यक्तं दृषदि चरणन्यासमर्धेन्दुमौले-
शश्वत् सिद्धैरुपचितबलिं भक्तिनम्रः परीयाः।
यस्मिन् दृष्टे करणविगमादूर्ध्वमुद्धूतपापाः
सङ्कल्पन्ते स्थिरगण-पदप्राप्तये श्रद्दधानाः॥

कवि स्वेन काव्येनानेनेदमपि समुपन्यस्यति जीवः स्वदुष्कर्मरूपशापवशात् स्वीयप्रियतमामृतपरमात्मनो दूरीभूय परं सन्तापं भुनक्ति। 'कुर्वन् सन्ध्यावलिपटहतामि'त्यादि मधुरवक्रोक्त्याभिव्यञ्जनामेतां विदधाति यत् कामशान्ति शङ्करोपासनयैव सम्भवा। स गम्भीरया गिरया रहस्यमिदमाकलयितुमुत्सुको यत् कामो महारातिर्मानवस्य; न तावत् तं जेतुमस्मै प्रभवति यावत् तस्य सहायो न भवति तेजोमय सेनानी। शङ्करादेव लभ्य स। सः शिव एव आयादित्यं तेज आत्मनि निदधाति। तस्मात्सर्वादेव जीव स्वसुपुप्तानादयों तद् तेन आधातुमीष्टे। मूलाधारादिचक्रषट्कमपि भेत्तुं यदा स पारयति तदैव स तत्तेजस स्वयमीहित-साधनायां साहाय्यमवाप्तुं क्षमो जायते। तस्य परमेशस्य त्रिपुरविजयित्वं पिनाकपाणित्वं भुजगवलयित्वं गौरीपतित्वञ्च यद् कविना निर्दिष्टं तच्छ्रुत्युपनिषदोऽनुगच्छन्ति सर्वथा। तत्रापि तथैव प्रतिपादितम्। इच्छा-ज्ञान-क्रियारूपपुराणां विजेतृत्वाद् स शिव 'त्रिपुरविजयी'ति, मेरुदण्डरूपपिनाकस्य कुण्डलिनीरूपज्यायां नमनकारित्वात् स 'पिनाकी'ति प्रोच्यते। आसुरेण भावेन दैवेषु भावेषु सात्त्वभिभूतेषु स्वाधिष्ठानचक्रस्थितः कामो विषं जनयति। विषमिदं

रेन एवा । तदिन्द्रियाणां बलं हिनस्ति । येद् प्राणी तत आत्मानं गोपायितु-कामस्तदा शिवं शरण व्रजेत् । स तद्विषनिग्रहणे प्रभु । मानवो योगमाश्रित्य तथाविधशक्तिस्वरूपस्य योगेश्वरशिवस्याश्रयं लब्धुमर्हति । अथासतदाश्रयः स लीलयैव जयति कामम् । आसुरवृत्तिपरिभवकारित्वात् शिवः स्कन्दजन्मेति गीयते । जितमूलाधारचक्रपीठाधिष्ठितशक्तिसर्पित्वात् स 'भुजगभूषण' इति प्रकृते-पुरुषानुगामित्वात् स 'गौरीपतिरि'ति कीर्त्यते । एतद्धि सर्वं रहस्य कविना गूढयैव भाषया मेघदूते निगदितम् । औपनिषदं तत्त्वं-ब्रह्म-मेघदूतं यादृशेनाभिनवेना-नुपमेन च प्रकारेणाभिव्यक्तिं नयति न तादृशेन प्रकारेण काव्यान्तरमाविर्भावयति तस्मादेव कारणात् काव्यमिदं स्ववर्गीयकाव्यान्यतिशेते । वस्तुतो मेघदूतमनन्य-लब्धानन्तसौन्दर्यश्रियालङ्कृतं विधाय कवि कालिदास प्रणिनाय । मन्ये आन-न्दवर्द्धनाचार्य कविकालिदासभारतीमेव प्राधान्येन लक्ष्यीकृत्येदमाह—

सरस्वती स्वादु तदर्थवस्तु निस्यन्दमाना महतां कवीनाम् ।
अलोकसामान्यमभिव्यनक्ति परिस्फुरन्त प्रतिभाविशेषम् ॥



## ( ३० )

## अश्वघोषः—

यानि सुमृदुलानि साधनानि मानवस्य हृदि सुप्तान् भावान्, उद्बोधयन्ति तेषु काव्यं नाम साधनं सर्वोत्तमं स्मृतम्। तत्र 'कतिपये' एवंविधा गुणाः शोभन्ते यैर्मानवस्य महत्त्वं द्रागेव सरलतया सुखपूर्वकञ्च सम्प्रतिपद्यते। एषा हि तदीया महत्ता सत्स्वपि बहुषु मानवहिताचरणपरेषु साधनेषु तदुद्गततरं गौरवासनमध्यासयति। लोकहृदयाकर्षणे तस्य प्रशंसनीयं पटीयस्त्वं वीक्ष्य, स्थायिप्रभावसंस्थापने तस्य अमोघं सामर्थ्यमवलोक्य धर्मप्रचारणस्य श्रेष्ठं साधनं तदवेत्य, यशोधिगमनस्य तन्निरतान्तमेव ललितमुपायं विमृश्य सर्वेषामपि शास्त्राणां ज्ञानस्य प्रकाशनार्थं प्रतिभायाः सदुपयोगार्थं वैदुष्यस्य वर्धनार्थं लोकप्रियतायाश्च लाभार्थं तदेव सुखदं समीचीनं श्रिश्वजनीनं करणं निश्चित्य चेतसि, महान् दर्शनपण्डितो बुद्धधर्मानुगः कविकुलकुमुदकलाधरः अश्वघोषः काव्यानि प्रणेतुं प्रचक्रमे—इत्येषऽस्मदीयो यो द्रढीयान् विचारस्तम्—

"इत्येषा व्युपशान्तये न रतये मोक्षार्थगर्भा कृतः
श्रोतॄणां ग्रहणार्थमन्यमनसां काव्योपचारात् कृता।
यन्मोक्षात् कृतमन्यत्र हि मया तत् काव्यधर्मात् कृतम्
पातुं तिक्तमिवौषधं मधुयुतं हृद्यं कथं स्यादिति॥"

इत्येतास्तदीयाः सौन्दरनन्दस्याः पङ्क्तयः खलु परिपोषयन्ति।

अश्वघोष इतिहासगीतस्य महाराजकनिष्कस्य गुरुरासीदिति अनुसन्धातॄणां मतम्। केषाञ्चन जनानामिदमपि कथनं यत् स एव महायानसम्प्रदायस्य माध्यमिकशून्यवादस्य च आद्य प्रवर्तक आसीत् परमितरेषामभिधानमेतद् न्माध्यमिकशून्यवादस्य प्रवर्तके, नागार्जुने, नाम विद्वान्, स्फुट। माध्यमिक-शून्यवादस्य महायानसम्प्रदायाङ्गत्वात् जनश्रुतिरेषाऽप्रथत यदसौ माध्यमिकशून्यवादमपि प्रवर्तयामास। परं केचन तु तं महायानसम्प्रदायस्यानुयायित्वेनापि नाभ्युपगच्छन्ति। ते प्राहुर्यत् महायानसम्प्रदायस्य तु प्रादुर्भाव एव तदा नाभवत्। स तु अश्वघोषकालात् प्रायेण वर्षशतकानन्तरमुदियाय। अस्तु

नैतद् विषयविवेचनमिहाभिमतम्। अत्र तु केवलमेतावदभिधानमिष्ट यत् स स्वसमयस्य महान् दार्शनिको बौद्धविद्वदग्रेसरो विपश्चिद्रासीत्। "आर्य सुवर्णाक्षीपुत्रस्य साकेतस्य भिक्षोराचार्यभदन्ताश्वघोषस्य महाकवेर्वादिन कृतिरियम्" इत्येषा सौन्दरनन्दपुष्पिकास्थिता पङ्क्तिस्तस्य सुवर्णाक्षया पुत्रत्वं साकेतस्य वास्तव्यत्व प्राप्तभदन्तविरुदत्वञ्च प्रकटीकरोति।

अश्वघोषो बहून् बौद्धदर्शनसम्बन्धिन साहित्यिकांश्च ग्रन्थान् असृजत पर दर्शनविषयकेषु ग्रन्थेषु विदुषा मध्ये महान् विवाद एव श्रूयते। 'महायानश्रद्धोत्पादसंग्रह', 'वज्रसूची', 'गण्डीस्तोत्रगाथा' 'सूत्रालङ्कार' इत्येते तेन अलेखिषत दर्शनग्रन्था इत्येषा सुप्रसिद्धिर्वर्तते पर तेषा तत्कृतत्व नाद्यापि बहुभिरेकमतेनाङ्गीक्रियते। साहित्यसम्बन्धिनीषु तद्रचनासु न परस्परविरोधिन्य उक्तय श्रूयन्ते। 'बुद्धचरितम्', 'सौन्दरनन्दम्', 'शारिपुत्रप्रकरणम्—इत्येतास्तिस्रोऽपि कृतय सन्त्यश्वघोषस्येति सर्वे एव स्वीकुर्वन्ति। एतास्वाद्ये द्वे काव्ये स्त अन्त्या च प्रकरणमस्ति। शारिपुत्र प्रकरणस्यान्वेषण प्रो० ल्यूडर्सश्चकार। कथ्यते यदुक्तेन प्रकरणेन (रूपकेण) सममेव स अन्यच्च खण्डितं नाटकद्वयमनुसन्दधौ। खण्डितत्वात् तयोस्तन्नामादिकमविदितमेव विद्यते। पर ते अश्वघोषस्यैवेति प्रतीयेते तयोरश्वघोषीयाया भाषाया भावाभिव्यञ्जनसरण्याश्च दर्शनात्।

बुद्धचरितमष्टाविंशतिसर्गनिबद्ध महाकाव्य कविश्चकार इति विद्वासो वदन्ति। परमिदानीन्तु तत्र चतुर्दश सर्गा एव प्राप्यन्ते। पञ्चमे ईशवीये शतके धर्मरक्षो नाम कश्चिद् भारतीय पण्डित काव्यमिद दरद (चीनी) भाषायाम् अनूदितवान्। अष्टमस्य शतकस्याभ्यर्णे त्रिविष्टपीयभाषायामपि तस्यानुवादोऽभवत्। एतावुभावनुवादौ साम्प्रतमुपलभ्येते। अनूदित काव्यमिद जान्स्टनो नाम आग्लविद्वान् आग्लभाषायामनुववाद। काव्यस्यास्य हिन्दीभाषायां योऽनुवादोऽस्माभे लभ्यते स आग्लभाषात एव कृतो वर्तते। इत्सिंगो नाम यात्री काव्यस्यास्य वृहदाकारत्व प्रतिपादयति तस्मात् ज्ञायत इद यत् कविरिद काव्यरत्न मेवाष्टाविंशतिसर्गेषु निबबन्ध। काव्यस्याधिकतमोंऽशो धार्मिकेण दार्शनिकेन च विषयेणोद्ग्रथित आस्ते। तस्मादत्र तथाविध साहित्य काव्यत्वञ्च राजेते यथाविधे साहित्य कवित्वे सौन्दरनन्दे भासेते। पर बुद्धचरिते प्रदर्शित काव्यकौशल 'कवावश्वघोषे हि सरस प्रसन्न प्रकृष्टं कवित्व विलसति' इति

बुद्धचरितकाव्यात् विदितं जायते। बौद्धसंसारे बुद्धचरितमतिशयतया लोकप्रियतामगमत्। यात्री इत्सिङ्गो लिखति यत् भारतस्य पञ्चसु प्रदेशेषु दक्षिणसागरतटवर्तिषु द्वीपेषु ( देशेषु ) सर्वत्र बुद्धचरितं गीयत इति।

सौन्दरनन्दं नाम काव्य गौतमबुद्धस्य विमातृ-नन्दनं नन्दं तस्य पत्नीं सुन्दरीञ्च लक्ष्यीकृत्य गीतमस्ति कविना।

शारिपुत्रप्रकरणे मौद्गल्यायन-शारिपुत्रयोर्बुद्धाद् दीक्षाग्रहणस्य वृत्तान्तः काव्यमय्यां भाषायां प्रस्तुतो वर्तते। नैषा रचना यद्यपि पूर्णा प्राप्ता परं तदवलोकनेन तस्या अङ्कनवकपरिबद्धत्वं सम्भाव्यते। कथैतदीया शृङ्गारात् प्रस्थिता भूत्वा शान्तमासाद्य शान्ता भवति।

अपरे च ये नाटिकारूपेऽपरे रूपके तयोरेकतरस्मिन्नु सैव छाया चकास्ति या प्रबोधचन्द्रोदये आच्छुरितास्ति अपरञ्च रूपकं गणिका विदूषक-दास-दासीप्रभृतिपात्रैः परिपूर्णमार्गं वर्तते।

अश्वघोषस्य काव्यानि संस्कृतसाहित्यस्य सुन्दरतमेषु काव्येषु गण्यन्ते। भावविभावितस्य काव्यस्य प्रायेण सर्वा अपि विशिष्टतास्तत्र विभान्ति। तत्र आभ्यन्तरं नैसर्गिकं सौन्दर्यं विपुलतया शोभमानमवलोक्यते। बाह्यं हि अलङ्कारादिजनितं सौन्दर्यं तत्र न्यूनमेव विद्यते। तत्र तद्विधा सुन्दरता आभ्यन्तरिक्या सुन्दरताया वर्द्धनाय-समुद्दीपनाय—एव प्रयुक्तास्ति। न च तत्र कविना सा नैजकला-कुशलत्वप्रदर्शनाय मनागपि परिगृहीता। कविः स्वकीयानि काव्यानि मनोरञ्जनमात्राय न प्रणिनाय। अपि तु तस्य तद्रचनाप्रयोजनमासीत् लोकहितसाधनम्। अतएव तत्र नैतिकत्वप्रदर्शनपरा मनोहर-श्लोकराशय उपदेशायुता भवन्ति। कविस्तान् सर्वान् अपि उपदेशान् स्वरचनासु काव्य-मधुरिम्णा मधुरान् संगीत-सुधया चारुतरान् सुरभिसिक्तान् विधाय निहितवान्। अतएव ता रचनाः साहित्यसंसारस्य श्रेष्ठनिधिमिव सम्प्रति मन्यन्ते।

बुद्धचरितं सौन्दरनन्दञ्च उभयमपि अश्वघोषस्य व्यक्तित्वस्य सारं परिचयं समुपस्थापयतः। ते द्वे अपि काव्ये कवेः कलाविदग्धतां सर्वं सौन्दर्यभावनां भास्वतीं शास्त्रानुशासितां आत्मश्रद्धां धर्मश्रद्धाञ्च प्रकटीकुर्वाणे मानवजीवनमाकृष्य कवेः का सान्यता इत्येतच्च द्योतयती विद्योतेते।

अश्वघोषस्य भगवति बुद्धे दृढीयसी भक्तिर्व्यराजत। अतस्तस्य भक्तिप्रवणमनः लोककल्याणकरं बुद्धस्य पवित्रं चरितं गातुं काव्यमसृजत्। तदैषा दृढीयसी

द्राघीयसी च भावना प्रज्वाल यत् सर्वत्रैव संसारे बुद्धस्य सिद्धान्ता उपदेशाश्च प्रसृता स्युर्येन लोकोऽयं भद्रं पश्येत् भद्रं शृणुयात्, भद्रञ्च आचरेत्। प्रकाण्ड-पण्डितत्वात् दर्शनशास्त्रनिष्णातत्वाच्च स भगवतो बुद्धस्योपदेशानामन्तराले जन-हितमीक्षितुं क्षिप्रतयैव क्षमो बभूव "गुणैर्हि सर्वत्र पदं निधीयते"—इत्येतस्मात् कारणात् बुद्धस्तन्मानसे प्रवेशमलभत कविरपि 'एक एव सुहृद्धर्मः' इत्येतद् विमृश्य भगवदुपदिष्टधर्मस्य प्रचाराय लेखनीं प्राणुनुदत्। तदीयलेखनीतो ये हि द्वे बुद्धचरित्रसौन्दरनन्दाभिधाने काव्ये समुत्पन्ने तयो आलोकेन निःसंशयं ससारोऽयं चिरं प्रकाशितो भवेत्। बुद्धचरितस्य दर्शनेन कवेः समदर्शितायां शुचि-कर्मणि च विश्वासो जायते। कवेर्मान्यतामीदृशि यत् कस्यापि श्रेष्ठस्य कर्मण आचरणाय न वयोऽपेक्ष्यते न कुलमेव। स बुद्धचरिते स्पष्टमेवाकथयत् इदमेव—

तस्मात् प्रमाणं न वयो न वंशः।
कश्चित् क्वचिच्छ्रैष्ठ्यमुपैति लोके॥

"सत्यं ब्रूयात् प्रियं ब्रूयाद् ब्रूयात् सत्यमप्रियम्" इत्येतं सिद्धान्तं स बुद्ध-चरिते बौद्धधर्मदृष्ट्या कियत्सुन्दरतयोपन्यस्यति—

"सान्त्वं बभाषे न च नार्थवद् यद्
जजल्प तत्त्वं न च विप्रियं यत्।
सान्त्वं ह्यतत्त्वं परुषं च तत्त्वं
ह्रियाशकच्चात्मन एव वक्तुम्॥"

तदीयस्य बुद्धचरितस्य द्वादश सर्गो बौद्धदर्शनस्य सिद्धान्तान् प्रस्तौति। सौन्दरनन्दस्य च षोडश सर्गो दुःखवादमधिकृत्य कविना सरलसरसशब्देषु लौकिकदृष्टान्तोपन्यासपूर्वकं सृष्टः।

बौद्धधर्मस्य चत्वारि आर्यसत्यानि बोधयितुं कविः कथयति—

"बाधात्मकं दुःखमिदं प्रसक्तं दुःखस्य हेतुः प्रभवात्मकोऽयम्।
दुःखक्षयो निःसरणात्मकोऽयं त्राणात्मकोऽयं प्रशमस्य मार्गः॥"

जीवनस्यानित्यता स कियत्मधुरतया प्रस्तौति—

"ऋतुर्व्यतीतः परिवर्तते पुनः
क्षयं प्रयातः पुनरेति चन्द्रमाः।
गतं गतं नैव तु संनिवर्तते
जलं नदीनां च नृणां च यौवनम्॥"

अनुभूतनिवृत्तिमार्गं जनं पुनः प्रवृत्तिपथमवलम्बमानं प्रेक्ष्य स परमशुद्धभावेन सन्देहमुद्दिशत्येवम्—

"हित्वा वनं मृगकुलान्ता महतो व्याधभयाद् विनिःसृतः ।
प्रविविक्षति वागुरां मृगश्चपलो गीतरवेण वञ्चितः ॥"

श्रद्धामिव सद्धर्मस्य सुदृढं सोपानम्, तया च पुष्टिमुपनीता श्रद्धया शान्तिमिन्द्रियसंयमं स्थिरतामनुत्तमां, वृत्तस्य रक्षया अमृतत्वमाप्तिं सम्भवा, न वपुषा न च वचसा काऽपि प्राणी कदापि पीडनीयः, वाणी न छलेन दूषणीया, शरीरवचनयोः पवनमिव अवसरमस्य द्वारमिन्द्रियविधानि नूतनिष्ठानि चरित्रनिर्माणकारीणि वचनानि तस्य कवितायां प्रतिपदं शोभन्ते ।

इन्द्रियासक्त्या दुःखानि पुनर्जन्म च इत्यत्र कथितम्—
"कार्यं परमयत्नेन तस्मादिन्द्रियसंवरः ।
इन्द्रियाणि ह्यगुप्तानि दुःखाय च भवाय च ॥
तस्मादेषामकुशलकराणामरीणां चक्षुर्घ्राणश्रवणरसनस्पर्शनानाम् ।
सर्वावस्थं भव विनियमादप्रमत्तो माऽस्मिन्नर्थे क्षणमपि कृथास्त्वं प्रमादम् ॥

बौद्धधर्मे समुपदिष्टं निर्वाणं कविः सदृष्टान्तमेवमुपपादयति—

"दीपो यथा निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम् ।
दिशं न काञ्चिद् विदिशं न काञ्चित् स्नेहक्षयात् केवलमेति शान्तिम् ॥
तथा कृती निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम् ।
दिशं न काञ्चिद् विदिशं न काञ्चित् क्लेशक्षयात् केवलमेति शान्तिम् ॥"

अश्वघोषस्य प्रतिभा चतुर्मुखी आसीत् । स प्रथमं दार्शनिकस्ततश्च कविरासीत् अतएव तस्य काव्येष्वपि दार्शनिकबुद्धेः प्रभावः प्रमुखतोऽवलोक्यते न तदीया कविता दार्शनिकत्वात् कदापि पृथग् भवितुमर्हति ।

'वज्रसूची' नाम ग्रन्थस्तदीयां विज्ञानवादं सूक्ष्मतया गम्भीरतया च तार्किकपद्धत्या विविनक्ति । विज्ञानवादः संसारं विज्ञानस्य विकाररूपं मन्यते । मूलभूतं विज्ञानमिदम् अश्वघोषः 'भूततथता' इत्यनेन शब्देन व्यवहरति । अथ क्षेत्रेऽस्य 'भूततथता' उपनिषदामात्मवादेनाभिन्नैव दृश्यते । तत्रास्मिन्नाध्यात्मिकविषयेऽपि दर्शनयोः समन्वयो दृश्यते । उपनिषदां तत्त्वानि परिगृह्य अश्वघोषः स्वमेधया परिपाच्य तैः, विज्ञानवादिनामाचार्यपरम्परामति

नवमेऽपि पन्थानमघटयत्। परम् 'अश्वघोषो दार्शनिक एव आसीत्'—इत्येतद्भिधानं न न्याय्यम्। तस्य काव्यग्रन्थेषु तदीया कविहृदयता सम्यगेव दीव्यते तस्मात् स दार्शनिकेषु महान् दार्शनिकः कविषु च महान् कविरपि बभूव। चेत् तदीयासु काव्यरचनासु दार्शनिकतायाश्छटा निविडा, वैदिकपौराणिकैतिहासिकविचाराणां घटाश्च मञ्जुला उद्वेल्लन्त्यो विलोक्यन्ते तदा तत्सत्ता तु काव्यकृतेर्भूषणमेव न च दूषणम्।

अश्वघोषः कालिदासादिरिवापि न रसवादी न च माघादिरिव इव कलावादी एव। स तु प्रचारवादिषु कविष्वग्रिमः। स रसं साधनत्वेन मेने न च साध्यत्वेन। तस्य वस्तूपदेशकादिनी भवन्त्यपि न नीतिग्रन्थायते। उदात्ततादर्शदर्शकत्वात् तस्य काव्यानि साहित्यस्य महनीयसम्पद् इव सन्ति। मैथ्यु ऑर्नल्ड उदात्तत्वमुद्दिश्य 'सैवोदात्ततेति प्रोच्यते या नैतिकमर्यादामवलम्बते' इति यदवोचत तदश्वघोषस्य काव्यरचनासु नितरां चरितार्थीभवति।

अश्वघोषस्य वृत्तं शान्तरसरमणकारित्वात् तदीया कविता शान्तरसविच्छित्युच्छलिता सर्वत्र समवेक्ष्यते। एतत्तस्य यत् तत्र शान्तो न विरसताकारी। वीरकरुणशृङ्गाररसानां सन्निविष्टत्वात् कवितादुग्धमेव सौन्दर्यमादाय सचेतसां पुरः समुपतिष्ठते। शृङ्गारस्य यत् सौन्दर्यं बुद्धचरितस्य तृतीयचतुर्थपञ्चमसर्गेषु सौन्दरनन्दस्य च चतुर्थदशमसर्गयोर्यल्लालित्यं शोभते तदस्य कवेः कवित्वप्रतिष्ठापनाय अलम्। शृगारे चेतसः क्लेशतप्तत्वादपि न शृङ्गारस्तद्रचनासु क्वापि म्लानतां वा क्लान्ततामासादितो दृश्यते। सन्ति कवेरस्य कवितासु शृङ्गारस्य पेशलपेशलतराणि भावमयानि प्रभावप्रतिष्ठापनपराणि चित्राणि यद्यपि बहूनि परं न सन्ति तानि ऐन्द्रियविलासमयानि। न तानि क्वचिदपि कुत्सितशृङ्गारवन्ति दृश्यन्ते। रसिकमानसानन्दसुधासञ्चारी कवेरेतस्य शृङ्गाररसः एव निपीयतां तावत्—

> मुहुर्मुहुर्मदव्याजस्रस्तनीलांशुका परा।
> आलक्ष्यरशना रेजे स्फुरद्विद्युदिव क्षपा। ( बु० च० ४, ३३ )
>
> एवं युवतिर्भुजासदेशादवविस्रंसितचारुपाशमन्या।
> सविलासरतान्ततान्तमूर्वोर्विवरे कान्तमिवाभिनीय शिश्ये॥
>
> ( बु० च० ५-५१ )

सा च स्तनोद्वर्तितहारयष्टिरुत्थापयामास निपीड्य दोर्भ्याम् ।
कथं कृतोऽसीति जहास चोच्चैर्मुखेन साचीकृतकुण्डलेन ॥

(सौ०, ४, १९)

रमणीना सौन्दर्यं कविरलङ्कारमवलम्ब्य यत्र वर्णितवान् तत्र तस्य अप्रस्तुत-योजनाया स्वाभाविकता नितान्तमेव दर्शनीया सवृत्तासिन—

"कामाश्चिदासा वदनानि रेजुर्वनान्तरेभ्यश्चलकुण्डलानि ।
व्याविद्धपर्णेभ्य इवाकरेभ्य पद्मानि कादम्बविघट्टितानि ॥"

(सौ० १०, ३८)

कविनायामेतदीयाया करुणरसस्यापि प्रवाह सान्द्र । इह श्लोकद्वय नत्रमा-प्तुत निर्धार्यते । तत्र कविप्रयुक्तवस्तूप्रेक्षासहोक्तिरूपकालङ्कारा करुणमुपकुर्वन्त एव विलोक्यन्ते—

इमाश्च विक्षिप्तविटङ्कबाहव
प्रसक्तपारावतदीर्घनिस्वना ।
विना कृतास्तेन सहावरोधनै
भृश रुदन्तीव विमानपङ्क्तय ॥

(बु० च० ८, ३७)

साचक्रवाकीव भृशं चुकूज
श्येनाग्रपक्षक्षतचक्रवाका ।
विस्पर्धमानेव विमानसस्थै
पारावतै कूजनलोलकण्ठै ॥

(सौ० ६, ३०)

नास्य कवे करुणरसो भस्मूते करुण इव बहुविलापपरा । बुद्धचरितस्य प्रथोदशे सौन्दरनन्दे च सप्तदशे सर्गे वीररसस्य हृदयग्राहिणी आभा विभाति—

तत स बोध्यङ्गशितात्तशस्त्र
सम्यक् प्रधानोत्तमवाहनस्थ ।
मार्गाङ्गमातङ्गवता बलेन
शनै शनै क्लेशचमू जगाहे ॥

(सौ० १७, २४)

अथ स्थिते श्लोके ससारस्य दु खमयता नार्या सौन्दर्यस्य च बीभत्सता प्रेक्षणीया—

मलपङ्कधरा दिगम्बरा प्रकृतिस्थैर्नखदन्तरोमभि । ( सौ० ८, ५१ )
यदि सा तव सुन्दरी भवेत् नियत सेऽद्य न सुन्दरी भवेत् ॥
स्रवतीमशुचि स्पृशेच्च क सघृणो जर्जरभाण्डवत् स्त्रियम् ।
यदि केवलया त्वचावृता न भवेन्मक्षिकपत्रमात्रया ॥

अश्वघोष प्रकृत्या रुचिविशेष दर्शयन् न प्राप्यते । प्रकृतिशोभाप्रदर्शनयोग्यस्थलेऽपेक्षणमिदमेव ज्ञापयति । सौन्दरनन्दे सप्तमे सर्गे प्रियाया विश्लेष मनुभवन्त नन्दमुद्दीपयन्तीव प्रकृति प्रेक्ष्यते—

स्थित स दीन सहकारवीथ्या
मालीनसमूर्च्छितषट्पदायाम् ।
भृश जजृम्भे युगदीर्घबाहु
र्ध्यात्वा प्रियां चापमिवाचकर्ष ॥ ( सौ० ७, ३ )

सौन्दरनन्दकाव्ये हिमालयवर्णनप्रसङ्गे कविना चारुतरा प्रकृतिसुषमा चित्रितास्ति पर तत्रत्य प्रकृतिवर्णनं कालिदासस्य प्रकृतिवर्णनमिव न सरस प्रसन्नञ्च ।

अश्वघोषस्य कवितामधीत्य स्पष्टमिद जायते यत् तन्मनो यावत् प्रतिपाद्य विषयप्रतिपादने रमते न तावदलङ्कारादि नियोजने । पर स्वाभाव्याद् यत्रापि तेषां सन्निवेश सञ्जात सो ऽतितरामेव रमणीयतां वहति ।

कवि स्वकविता सकलस्यापि लोकस्य हिताय लिलेख न च वर्गविशेषस्य कृते । तस्मान्न तत्र वर्गविशेषमनस्तोषिणी सुन्दरता दृश्यता भवति । पर तथात्वे सत्यपि कवे कवित्व नाणुमात्रन्यून धाम विकृताङ्ग वा पर्यवलोक्यते ।

कवे कवितायाम् उपमा रूपकोत्प्रेक्षा-व्यतिरेकाप्रस्तुतप्रशसानुप्रास यम कादीनामलङ्काराणां सुललितस्य प्रयोगस्य नाभाव क्वापि सलक्ष्यते । उपमा प्रेक्ष्यताम्—

तं गौरव बुद्धगत चकर्ष
भार्यानुराग पुनराचकर्ष ।
सोऽनिश्चयान्नापि ययौ न तस्थौ
तरस्तरङ्गेष्विव राजहस ॥ ( सौ० ४, ४२ )

रूपकमपि पश्यन्तु—

> सा हासहंसा नयनद्विरेफा
> पीनस्तनाभ्युन्नत-पद्मकोषा ।
> भूयो बभासे स्वकुलोदितेन
> स्त्रीपद्मिनी नन्ददिवाकरेण ॥ ( सौ० ४, ४ )

कविरश्वघोषो भाषां सरलां मृदुलाञ्च प्रयुनक्ति। न तत्र दीर्घदीर्घतरा समासा भवन्ति। तत्र केषाञ्चन पूर्वविधानां शब्दानामपि प्रयोगः प्राप्यते ये तदुत्तरकालवर्तिन्यां कवितायां न दृष्टा भवन्ति। सर्वत्रैव भाषा प्रसादपेशला वैदर्भी-विलसिता भजन्ती समुल्लसति। सा च सुवदनोद्गता-शिखरिणी-शार्दूल-विक्रीडित-मालिनी-वसन्ततिलका-वंशस्थोपजाति-प्रहर्षिणी-रुचिरानुष्टुमादिविविध-च्छन्दोमुकुरचारुतु संक्रममाणा चकास्ति।

कविः अश्वघोषो भाषाया भावाभिव्यञ्जनायां वस्तुनिरूपणविधायां च कालिदासमनुकरोति भृशम्।

अधः स्थिताः श्लोकाः कस्मिन्न कालिदासकृतश्लोकभ्रमं जनयन्ति कं न कालिदासवर्णितपुराङ्गनाविचेष्टितानि स्मारयन्ति—

> ततः कुमारः खलु गच्छतीति
> श्रुत्वा जनः प्रेष्य जनात् प्रवृत्तिम् ।
> दिदृक्षया हर्म्यतलानि जग्मुः
> जनेन मान्येन कृताभ्यनुज्ञाः ॥ ( बु० च०, ३, १३ )
> ताः स्रस्तकाञ्चीगुणविघ्नितश्च
> सुप्तप्रबुद्धाकुललोचनाश्च ।
> वृत्तान्त-विन्यस्तविभूषणाश्च
> कौतूहलेनापि भृताः परीयुः ॥
> प्रासादसोपानतलप्रणादैः
> काञ्चीरवैर्नूपुरनिस्वनैश्च ।
> वित्रासयन्त्यो गृहपक्षिसंघा
> नन्योन्यवेगाश्च समाक्षिपन्त्यः ॥
> वातायनेभ्यस्तु विनिःसृतानि परस्परोपाश्रितकुण्डलानि ।
> स्त्रीणां विरेजुर्मुखपङ्कजानि सक्तानि हर्म्येष्विव पङ्कजानि ॥

दृष्ट्वा च तं राजसुतं स्त्रियस्ता
जाज्वल्यमानं वपुषा श्रिया च।
धन्यास्य भार्येति शनैरवोचन्
शुद्धैर्मनोभिः खलु नान्यभावात् ॥

अयं किल स्यायतपीनबाहू
रूपेण साक्षादिव पुष्पकेतुः।
त्यक्त्वा श्रियं धर्ममुपैष्यतीति
तस्मिन् स्त्रियो गौरवमेव चक्रुः ॥

नूनम् अश्वघोषस्य रचना क्वचित्कलाचमत्कृतिलोला सन्ति। तासामुद्देश्य दुःखान्तभ्यो भोगविलासेभ्यो मानवमाकृष्य तस्य त्यागतपःपरोपकारादिसद्गुणान् प्रति उन्मुखीकरणं वर्तते। वयं तत्र कवेः सम्यक्सुन्दरानुभूतीनां दर्शनमवाप्नुम, बौद्धधर्मस्योदारदृष्टिं निभालयाम, जीवनशक्तिं विलोकयाम, हृदयाकर्षणस्य चाश्चर्यकारिणीं क्षमतां विन्दाम।

सत्यमिदं यत् कालिदासः संस्कृतवाङ्मयेऽद्वितीयामेव कोटिमाटीकते परमत्यपि तद्विधे सत्ये कालिदासस्य वैदिकपौराणिकैतिहासिकज्ञानात् अश्वघोषस्य तद्विषयकं ज्ञानं प्राञ्जतया सूक्ष्मम्। अश्वघोषो वैदिकपौराणिकविषयाणां महान् भाण्डागारं आसीत् यदि कालिदासस्य रचनासु चातुर्वर्ण्यस्य व्यापिका पृष्ठभूमिर्दृश्यते तदाश्वघोषस्य रचनासु बौद्धधर्मस्य विश्वजनीनगम्भीरनैतिकता विलोक्यते। अश्वघोषोऽपि कालिदास इव लोकोत्तरप्रेमभावनां मानवजीवनस्य मनोऽभिरामाणि चित्राणि प्रकृतेः सुषमां सरलां कविकर्मप्रौढतां च चित्रयति परं न तेषां हि चित्राणां चारुता तामुच्चतरतां गाहते या हि कविकालिदासस्य कवितासु सपरिस्पन्दं स्फुरति। नादसौन्दर्यं गेयात्मकता च द्वयतदुभयमपि अश्वघोषस्य कवितायां नितरामुज्ज्वलतामयी मुदात्तता विभृतः। कालिदास इव अश्वघोषोऽपि प्राचीनस्य भारतस्य औपर्सी संस्कृतिमुदात्ताश्चादर्शान् निनिवेशयन् स्वकवितायां सम्यगवेक्ष्यते। वस्तुतः क्वचित्त एव कविः कालिदासमत्यतिशयानो दृश्यते। द्वयोरपि कव्योः काव्यनिर्माणप्रयोजनमेकमेव। तत्र सत्यपि अश्वघोषस्य कवित्वे तदेव वैशिष्ट्यं विराजते येन कविरस्यान्वर्थता भवति समीचीनतया। धन्येयमश्वघोष-कविता।



रकृष्टता प्रदर्शयितु मञ्चेऽस्त्याहृता। सत्यपि स्त्रीपात्राभावे, असत्यपि च हास्यरस-कोविदे विदूषके नाटक नाकर्षणेन हीन न च रोचिष्णुत्वेन शून्य, नाटककारस्य कथावस्तुवैतावद्ग्रन्थिल गभीरमुत्सुकता-कौतूहल सवर्धनरत, भाषैव तस्यैतावती ओजोवती तीव्रवेगवती, वस्तुप्रतिष्ठापनवर्णनीयविषयवर्णनकुशलतैव तस्यैतावती विचित्रा यत्क्वापि न दर्शक पाठको वा प्रयात्युद्वेग गृह्णाति निरसता गच्छति च गतकुतूहलताम्।

रूपकस्य प्रारम्भादवसानपर्यन्तं चाणक्यो राक्षसश्च अन्योऽन्य कूटनीत्या पराजेतुमियती नवनवा घटना अवतारयन्तौ दीप्येते यदापाततस्ता विशृङ्खला विच्छिन्नाश्च प्रतिभासन्ते परमन्ततो गत्वा यदानाय उपसह्रियते तदा सर्वासामपि घटनानासघटित फल युगपदेवोद्बुध्य दर्शकागामग्रे स्व वैभव वितनुते। नाटकस्य व्यापार पूर्णतयैव गत्वर। रूपककारस्य प्रतिभापाटवेन कथावस्तुनियन्धनकौशलेन हि न क्वापि श्लथताया वा अरुचिरताया कणोऽपि स्थातु शक्नोति तत्र। वस्तुत सुघटितस्य कथावस्तुनो नियोजने स्वस्वव्यक्तित्वविभाविभावितानां पात्राणाञ्च समावेशने ओजोमयस्य वातावरणस्यावतारणे वीररसस्य चोन्मीलने मुद्राराक्षस रूपक साहित्ये स्तुत्यसाफल्यश्रियाश्लिष्यमाणमस्तीत्यत्र न स्तोकोपि सशय।

चरित्राणा चित्रण रूपकेऽस्मिन् ललित नितान्तम्। तद् विलोक्य रूपककारस्य ऐतस्या अस्यामपि दिशाया विस्मयकारिणी नैपुणी विदिता जायते। कुशलो नाटककारस्तथात्वेन पात्राणा सृष्टिञ्चकार यथात्वेन तानि अन्योऽन्यस्य पात्रस्य चारित्रिकचारुताया विकासने सहायकानि स्यु। चाणक्य राक्षसयोर्युगल चन्द्र-गुप्तमलयकेत्वोश्च द्वन्द्वमेवविधमेव घटते। चन्द्रगुप्त मलयकेतो समक्षे, चाण-क्यञ्च राक्षसस्य पुरस्तान्निधाय यदा तत्र दृष्टि क्षिप्यते तदा स्पष्टमेव तद्विधा विशिष्टता प्रतिलक्ष्यते यानुपदमेवोपर्यभिहिता। चाणक्यस्य राजनीतिकचातुरी न नैजमुपमान निदधाति। अहो, तस्य गूढचरनियोजनपटीयस्कताद्भुतैव, तस्य विपक्षकृत्यविघटन विलक्षणम्, तस्य च साम-दानभेददण्डाना चतुर्णामेव नातिपथानामवलम्बन विचित्रमेव। कूटनीत्यां सस्य तस्य प्रज्ञा प्रविशन्ती दीप्यते। तस्य कार्याणां गुप्तबीजानि तदा वेद्यन्ते यदा तानि फलशालीनि भूत्वा सर्वेषामग्रे वैशद्येन प्रसृतानि भवन्ति। तस्य पदे पदे, कार्ये कार्ये, चेष्टायां चेष्टायां किमपि न किमपि रहस्य नियतत्वेन प्रच्छन्न भूत्वा सन्तिष्ठते।

"तन्मयाप्यस्मिन् वस्तुनि न शयानेन स्थीयते। यथाशक्ति क्रियते तद्ग्रहणं प्रति यत्नः ।"

"स मया क्षपणकलिङ्गधारी नन्दवधप्रतिज्ञानन्तरमेव कुसुमपुरमुपनीय सर्वनन्दामात्यैः सह सख्यं ग्राहितो विशेषतश्च तस्मिन् राक्षसे समुत्पन्नविस्रम्भः ।"

( आत्मगतम् ) "कथमय प्रकृतिचित्तपरिज्ञाने निपुणो निपुणक ।"

इत्येतानि अन्यानि च तानि तानि नाटककारलिखितानि वाक्यानि चाणक्यस्य तेषामनेकेषां गुणानां दिशि मधुरमिङ्गितं कुर्वन्ति येषां स्थौल्येनोपरि स्मरणं कृतम् ।

सः स्वयमेव चन्द्रगुप्तं स्वच्छन्देन चरितुं तदादेशमोल्लङ्घयितुमाज्ञापयति येनारातिपक्षः क्षणिकमुल्लासं प्राप्त स्यात्, भवेच्च स स्वोद्योगे श्लथ । संवृत्तमपि तदेव फलं यत् तदभिमतं बभूव ।

वस्तुतो नाटकमिदं यस्माद् गतिं मतिं स्फूर्तिं च लभते स चाणक्य एव नान्यः कोऽपि । चाणक्यो हि अत्र तद्व्यक्तित्वमभिव्याप्य चकास्ति यत्र हृदयाद् बुद्धिर्विपुलतरा । तत्र भावतत्त्वं न तथाविधतया बलीयो यथाविधतया बुद्धितत्त्वम् । तस्मादेव कारणात् तस्य समक्षे विपश्चितां मौलिः सादरं नतो भवति । न तत्र वदान्यताया न्यूनता किन्तु स्वकूटनीतिं साधयितुं सः कठोरतामपि आयसीं वा कौलिशीं सततं प्रयोक्तुमुद्युङ्क्ते—

"अद्यापि बध्यमानां बध्यः को नेच्छति शिखां मे"

"वत्स, कार्याभिनियोग एवास्मान् व्याकुलयति न पुनरुपाध्यायसहभूः शिष्यजने दुःशीलता ।"

इत्येतानि वचनानीह साक्षिभूतानि ।

न चाणक्यस्याग्रे राक्षसस्य नीतिर्भवति सफला । परं तथात्वेऽपि राक्षसस्य मानवता, मृदुलमनस्कता सुहृद्वत्सलतानितरामेव स्पृहणीया । राजनीतिक्षेत्रे भवत्यवश्यमसौ पराजितः परं मानवतायाः क्षेत्रे विजयश्रीस्तमेव वृणुते । अस्ति राक्षसे यद्यपि धीतत्त्वस्य न्यूनता परं हृदयतत्त्वस्य तु तत्र बलीयस्कता विपुलता च वर्तते । तस्मादेव हेतोः प्रथममसौ दर्शकान् स्वदिशायामावर्जयति । तस्मिन् सदैव दर्शकानां प्रेमानुवर्तते । सः स्वर्गतस्य स्वस्वामिनो निमित्तेन असूनपि स्वान् जुहूषति ।

"दैवे गते दिवमनद्विधमृत्युयोग्ये
शैलेश्वरे तमधिकृत्य कृतः प्रयत्नः ।
तस्मिन् हते तनयमस्य तथाप्यसिद्धि
र्दैवं हि नन्दकुलशत्रुरसौ न विप्रः ॥"

इत्यादीनि वचांसि तस्य पुरुषार्थपरत्वं ख्यापयन्त्योऽपि पुरुषार्थे हि तदीयस्वाभाव्यस्य पुरतो निष्फलतामुपैतीत्यपि प्रथयन्ति किञ्च निष्फलपुरुषार्थत्वात् तस्य, तत्रागतां निराशामप्यभिव्यञ्जन्ति ।

राक्षसस्य प्रभुभक्तिरसाधारणी बुद्धिमत्त्वमपि नान्यजनसुलभा, तथापि स चाणक्यमतिक्रम्य स्वामिप्रतिष्ठानारोपयितुं नाशकद् जगति, तत्र भाग्यमेव कारणम् । एकतस्तावद् चाणक्यस्य सदृढपरम्परया प्रतिहता भवन्ती राक्षसस्य चेष्टा न किमपि फलमुत्पादयितुं शशाक, अपरतश्च अभिचारक्रियादिभिरवाहार्यैः किङ्कदलक्षाणमन्यः केवलया अलौकिकशक्तिमत्त्वया सम्पादनकुर्वाणोऽपि प्रतिनिवर्तनमिव प्रतिपद्यमानस्तमिव विधाय मैत्रतत्रप्रकटनाध्वस्मायेषु । यत्र यत्र राक्षसस्य गम्भीरनीतिप्रयोगप्रागल्भ्याङ्कितं नीतिमार्गं हन्तुं प्रयुक्तो बभूव, तत्र तत्रैवाभिचारक्रियाजन्यप्रतिपक्षप्रतिघातस्फितांप्रतीचाणक्यमेव सफलत्वाननं चकार प्रतिहतमनोरथश्च राक्षसम् । असौ दारुबुद्धिवर्तं स्वस्वामिनं कृतदासमानं मोक्षुमत्सं प्रयासं विदधानोऽपि चेद् पराभूत एव भवति तदा तत्र दुर्नियतिरेव कारणं प्रतिभाति । न कर्तव्यपथाद् स कदापि विमुखतां ययौ ।

"कथमत्रापि दैवेनोपहतावयम् । अथ शयितस्य चन्द्रगुप्तस्य शरीरे प्रहर्तुमस्मत्प्रयुक्ताना राजगृहस्यान्तर्भित्ति सुरङ्गेनैव प्रथममेव निवसतां बीभत्सकादीनां को वृत्तान्त ?"

इत्यादीनि वाक्यानि तस्य कर्तव्यपरायणताया ज्वलत्प्रमाणानि सन्ति । स्वकर्तव्यपरं जनं स सदा प्रशंसत्—

"...... अथवा स्वाम्यर्थमनुपरतो न शोच्यस्त्वम् ।"

'शत्रोरपि गुणा वाच्या' इत्येव गुणस्तस्मिन् सर्वे पर्यवालोकि । स दैवे विश्वसितिस्म "दैवात् पर्वतकस्तया स निहतो यस्तस्य राज्यार्धहृत्", "न हतश्चन्द्रगुप्तो हतो दैरोचकवर्मवरो दैवेन" इत्यादिषु अनेकेषु वाक्येषु तस्य दैववादिता ध्रुवा भवन्ति । गजेन्द्रो सोऽपि स्वसमयस्य विश्रुतेषु राजनीतिज्ञ-

"कौटिल्यधीरज्जुनिबद्धमूर्ति
मन्ये स्थिरां मौर्यनृपस्य लक्ष्मीम् ।
उपायहस्तैरपि राक्षसेन
निकृष्यमाणामिव लक्षयामि ।

तदेवमनयो शेमुषीशालिनोः सुसचिवयोर्विरोधे संशयितेव नन्दकुललक्ष्मी '—

"विरुद्धयोर्भृशमिह मन्त्रिमुख्ययो-
र्महावने वनगजयोरिवान्तरे ।
अनिश्चयाद् गजवशयेव भीतया
गतागतैर्ध्रुवमिह खिद्यते श्रिया ॥

चन्दनदास इव सत्सुहृज्जगतिदुर्लभस्तत्र—

"शुचित्वं त्यागिता शौर्यं सामान्यं सुखदुःखयोः ।
दाक्षिण्यं चानुरक्तिश्च सत्यता च सुहृद्गुणा ॥"

इत्येतेषां सुहृद्गुणानां धाम आसीत् । स निरमात्यामपि परिस्थितिं निपत्यापि स सौहृदपथादस्खलत् । न कापि प्ररोचना तं तस्मार्गाद् भ्रंशयितुं प्राभवत् । स्वकुटुम्बोपरि दारुणकष्टानां पातोऽपि वरं प्राणानां त्यागोऽपि वरं परं मित्रे विश्वासघातो न वरं कदापीत्येतदादर्शं रक्षन् एवासौ लोकेनादर्शि । तस्य चरित्र्यैपारयन्तदुर्लभा महनीयता चाणक्येनापि प्राशंसि—

"सुलभेष्वर्थलाभेषु परसंवेदने जने ।
क इदं दुष्करं कुर्यादिदानीं शिविना विना ॥"

चन्द्रगुप्तो मलयकेतुश्च काममेतावुभावपि नाटकेऽधिकशक्तिमच्चरितशालिनौ न स्याताम्, परं न तौ चाणक्य-राक्षसयोर्दारुयोषित्त्वेन मतौ भवितुमर्हत । चन्द्रगुप्तोऽस्त्यादर्शराजा । स चाणक्यं शिष्य इवानुवर्तते । प्रभुशक्त्या सह मन्त्रशक्तेरपि महत्त्वं साधु वेत्ति । सोऽनिशं चाणक्यनिर्दिष्टेन मार्गेण गन्तुं सन्नद्धो दृश्यते । स तदादेशेन कृत्रिमं कलहमपि तेन सह कर्तुं प्रस्तुतो भवति परं न मनसा तादृशमपि कलहं कामयते । स ब्रूते—

"कृतककलहं कृत्वा स्वतन्त्रेण किञ्चित् कालान्तरं व्यवहर्तव्यमित्यार्यादेश । स च कथमपि मया पातकमिवाभ्युपगत." । स परमकुशलशासको राजधर्मपरायणमानसोऽधिपतिरासीद् इत्येतदपि तस्य वैशिष्ट्यं प्रकाशयन्तीमाः पङ्क्तय —

"राज्यं हि नाम राजधर्मानुवृत्तिपरस्य नृपतेर्महदप्रीतिस्थानम् ।"

"दुराराध्या हि राजलक्ष्मीरात्मवद्भिरपि राजभिः ।"

मलयकेतुरेकान्ततस्तद्विपरीतः । तच्चरित्रं तस्माद् ( चन्द्रगुप्तात् ) विरुद्धमेव । चन्द्रगुप्तः शान्तो गम्भीरश्च । मलयकेतुरशान्त उद्धतः दुःशीलश्च । स ( मलयकेतु ) पाटलिपुत्रस्य गाङ्गप्रासादे राजमानं सिंहासनमध्यासितुमुत्सुकः । स इच्छति—

"मौर्यमसदृशं विहाय स्वयं नृपतिः स्याम् इति ।" परं न तत्र विवेकः । मात्रातिरिक्तो भव्या यत् किमपि कर्तुं सज्जति । चाणक्यस्य गुप्तचरानाये निपत्य स राक्षसमप्यकारणमविश्वस्तयावज्ञानाति । स बुद्धिरहितत्वाद्राक्षसे न विश्वसिति—

"राक्षस, राक्षस, नाहं विश्रम्भघाती राक्षसः, मलयकेतुः खल्वहम्, तद् गच्छ, समाश्रीयतां सर्वात्मना चन्द्रगुप्तः" ।

इत्येताः पद्ययोऽत्र प्रमाणम् ।

वस्तुतो विशाखदत्तस्य साधारणासाधारणतराण्यपि पात्राणि सन्ति सबलानि । विराधगुप्त-सिद्धार्थक-निपुणकाऽऽहितुण्डिक-शकटदासप्रभृतिसर्वाण्यपि पात्राणि नाटककारस्य प्रतिभावर्तिकया हृदयहारिवर्णैर्वर्णितानि भूत्वोपस्थितानि भवन्ति शूद्रक इव एषोऽपि नाटककारः प्राणवन्ति चरित्राणि सृजति । इदमपि कथनमुचितं स्यात् यदेतच्चित्रितचरित्राणि ततो हि स्फुटतराणि यथार्थतराणि च । एवंविधानि पात्राणि सृष्ट्वा रूपककारो विशाखदत्तः स्वं रूपकं दुरूहराजनीतिविषयावबोधनक्षममेव चकार । नात्र सन्देहो यद् यथा स वस्तुसंयोजने योग्यस्तथैव चरित्राणां चित्रणेऽपि चतुरः ।

रूपकमिदं यस्यां शैल्या कविना विनिबद्धं सा शैली सिंहोरस्रावनी । प्रत्यक्षरं सा स्फूर्जति । वीररसो मूर्तिमान् भूत्वा स्वीयेनानभिभवनीयेन प्रतापेन भुवं वेपयन् सर्वतः शोभते । श्लोकेषु अलङ्काराणां प्रयोगस्तावानेव विहितो यावता भावानामुद्भावना वैशद्येन प्रस्फुटेत् । पात्रानुरूपा एव भावाः सन्निवेशिताः प्राप्यन्ते तस्माद् रूपकाभ्युपगतो विषयः क्वापि नाणुमात्रं म्लानो भवन् दृश्यते । तृतीयाङ्के कृतं शारदवर्णनं कथानकस्य प्रगुणीकरणे सहायकृन्मिश्रमिव सञ्जातम् । यैरुपायैर्नाटकस्य सर्वाण्यप्यङ्गानि समुपचितानि भवितुमर्हन्ति ते सर्वेऽप्युपाया नाटकनिर्माणचतुरेण सम्यक् प्रयुक्ताः सन्ति ।

चाणक्यः पुरुषसिंहः । तदाननादतः कविस्तन्मस्तीरपि निर्गमयति ।

वस्तुत इह नाटके यादृश पात्र तादृश्येव तदीया उक्तिर्यादृशी उक्तिस्तादृशमेव तदभिव्यञ्जनमपि वर्तते। श्रूयतां चाणक्य-सिंहगर्जनम् अभिनन्दनीयाया-मभिव्यञ्जनायाम्—

(क) "विक्रान्तैर्नयशालिभि सुसचिवै· श्रीवक्रनासादिभि-
नंन्दे जीवति या तदा न गमिता स्थैर्यं चलन्ती मुहु· ।
तामेकत्वमुपागतां द्युतिमिव प्रह्लादयन्तीं जगत्
कश्चन्द्रादिव चन्द्रगुप्तनृपते कर्तुं व्यवस्येद् पृथक् ॥"

(ख) दैवमविद्वांस· प्रमाणयन्ति ।

राक्षसो महान् मेधावी सदसद्विवेचनवरीयान् तस्मात् तस्याप्युक्ती-स्तद्गुणेनैव प्रकारेण प्रकटीकरोति—

साध्ये निश्चितमन्वयेन घटितं बिभ्रत् सपक्षे स्थितिं
व्यावृत्तं च विपक्षतो भवति यत् तत् साधनं सिद्धये ।
यत् साध्य स्वयमेव तुल्यमुभयो· पक्षे विरुद्ध च यत्
तस्याङ्गीकरणेन वादिन इव स्यात् स्वामिनो निग्रह ॥"

इत्थं सर्वत्र नाटके गद्यस्य पद्यस्य च मध्ये स्थितानां भावानामभिव्यक्ति कविना समुचितेन प्रशंसनीयेन प्रकारेण कारितास्ति ।

अप्रस्तुतविधानमपि कवि प्रीणाति । तदपि कविना मनोज्ञतया दर्शितम्—

"आस्वादितद्विरदशोणितशोणशोभां
सन्ध्यारुणामिव कलां शशलाञ्छनस्य
जृम्भाविदारितमुखस्य मुखात् स्फुरन्तीं
को हर्तुमिच्छति हरे· परिभूय दंष्ट्राम् ॥"

कवेर्लेखन्या प्रभूतबलशालिनीत्वात् तस्या एकैकं पदं बहुकार्यसम्पादनकारि सिद्ध्यति । अतएवैतस्माच्छ्लोकान्न केवलमप्रस्तुतविधानसौन्दर्यं दृक्पथेऽवतर-त्यपितु ओजसरघुटा गौड्या रीते प्रकर्षं पूर्णोपमाप्रस्तुतप्रशंसासद्गुणाख्याना-मलङ्काराणां कान्तिश्च सम्यग् दर्शकाणां चेतांसि चोरयन्ति युगपदेव ।

अहो कवेरस्य सर्वे प्रयासा वीररसमेव समस्तेऽपि नाटके परिपोषयन्तो दृश्यन्ते । स· अलङ्काराणां प्रयोगमपि तथैव करोति यथा तत्प्रियो रस उद्दीप्येत । आश्चर्यन्तु नितरामिद यत् स· शृङ्गारमपि तथात्वेन विनिवेशयति यत् सोऽपि

नैजमम्लानमुखमद्यैवोपस्थितो भवितुं पारयति। दृश्यताम् इह तदीया किञ्च सममेत्येव अभिनवकारिणी तेजस्विता—

"बाला बाहुलतां निवेश्य शिथिलं कण्ठे निवृत्तानना
स्कन्धे दक्षिणया बलान्निहितयाप्यङ्के पतन्त्या मुहुः।
गाढालिङ्गनसङ्गपीडितमुखं यस्योद्यमाशङ्किनी
मौर्यस्योरसि नाधुनापि कुरुते वामेतरं श्री स्तनम्॥"

कालिदास-माघ भवभूतिप्रभृतिकवीनां स्वभावोक्तीनां सौन्दर्यन्तु निपीतमेव सम्प्रतीह अन्यस्यापि कवेः स्वभावोक्तिश्रिया तर्पयन्तु सहृदया आत्मानम्—

धूर्तैरन्वीयमाना स्फुटचतुरकथाकोविदैर्वेशनार्यो
नालंकुर्वन्ति रथ्याः पृथुजघनभराक्रान्तिमन्दैः प्रयातैः।
अन्योऽन्यं स्पर्धमाना न च गृहविभवैः स्वामिनो मुक्तशङ्काः
साकं स्त्रीभिर्भजन्ते विधिमभिलषितं पार्वणं पौरमुख्याः॥

राजनीति-वीररसमयोरुभयोरपि भास्वद्भा परिदधानाऽत्रैव स्वभावोक्तिः कियताटोपेनोट्टङ्किता कविना।

अनुपममेव दृश्यकाव्यानामिदं दृश्यकाव्यम्। श्लेषस्य समीचीनोपयोगोऽयमेव यद् भणितं न भवेत् साधारणार्थपरिदृष्टम्। कविरेष एतत्प्रयोजनेनैव श्लेषमुपयुनक्ति—

क्रूरग्रह स केतुश्चन्द्रमसम् पूर्णमण्डलमिदानीम्।
अभिभवितुमिच्छति बलाद् रक्षत्येनं तु बुधयोग॥

कविः प्रकृतिसुन्दरतामपि दर्शयतीह। परं तदीया सा श्रीरपि नाटकीयां भावना तन्मयतामेव विदधाना पर्यवस्यते—

विपर्यस्तं सौधं कुलमिव महारम्भरचनं
सरः शुष्कं साधोर्हृदयमिव नाशेन सुहृदाम्।
फलैर्हीना वृक्षा विगुणविधियोगादिव नया
स्तृणैश्छन्ना भूमिर्मतिरिव कुनीतैरविदुषः।

नाटकमिदं विलोक्य सरलतयैव नाटककारस्य न्यायज्योतिषायुर्वेदराजनीतिशास्त्रनाट्यशास्त्रादिविविधेषु शास्त्रेषु वैदुष्यमगाधं प्रत्ययपथमधिरूढं भवति। यद्यपि कविरयं स्वरचनायां बहूनि छन्दांस्युपयुयोज परं स्रग्धरायां शार्दूलविक्रीडिते च तदीया रुचिर्विशिष्यतो रममाणा प्रतीयते।

नाटकेऽस्मिन् विशिष्टनैयमपि महीयसी यदिद ललिताभि सूक्तिभिरुत्तमोत्त मान् उपदेशान् अपि प्रददाति । अत्र तत्र काश्चन सूक्तय उद्ध्रियन्ते—

(क) "पुरन्ध्रीणा प्रज्ञा पुरुषगुणविज्ञानविमुखी ।"

(ख) 'किं शेषस्य भरव्यथा न वपुषि क्ष्मा न क्षिपत्येष यत्
किं वा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चल ।
किन्त्वङ्गीकृतमुत्सृजन् कृपणवच्छ्लाघ्यो जनो लज्जते
निर्व्यूढ प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ॥"

(ग) "मनस्वी दग्धत्वात् स्खलति च न दु ख वहति च ॥"

(घ) "परायत्त प्रीते कथमिव रस वेत्तु पुरुष ॥'

(ङ) "सेवा लाघवकारिणीं कृतधिय स्थाने श्ववृत्तिं विदु ॥"

(च) "ये सत्यमेव हि गुरूनतिपातयन्ति
तेषा कथ नु हृदय न भिनत्ति लज्जा ॥"

अस्मिन् रूपके तत्र तत्र प्रयुक्तानां तासा तासां संस्कृतेतरभाषाणां पठनेन कवे एतस्य शौरसेनी महाराष्ट्री मागधी प्राकृतभाषासु विद्वत्त्व ज्ञात जायते । नि सशय रूपकमिद रूपककारस्यास्य महनीया सफला कृति ।•भाषाभाव कविरनवस्तुपात्रचरित्रचित्रणादिकानि सर्वाण्यपि तत्त्वानि कामपि अद्भुता सफलतां गाहमानानीह दृश्यन्ते । कथ हि प्रशस्येत कविरय यस्तामपि राजनीति नर्तयतिस्म स्वकृतौ या लक्षीकृत्य स्वयमेवैवमाह—

"मुहुर्लक्ष्योद्भेदा मुहुरधिगमाभावगहना
मुहु सम्पूर्णाङ्गी मुहुरतिकृशा कार्यवशत ।
मुहुर्नश्यद् बीजा मुहुरपि बहुप्रापितफले
त्यहो चित्राकारा नियतिरिव नीतिर्नयविद ॥"



तृतीयाङ्केऽवतारिता छायासीताविषयिणी कल्पनापि कवेर्मनोविज्ञानविज्ञं लक्षयति। सीताया अपमानजनितवेदनायाः स्वाभाविक्यैव रीत्या अपनयन कारित्वात् कवेस्तदपि कल्पनाकलित कार्यं तस्य श्लाघनीयमेव सवृत्तम्। हृदय ग्रन्थ्युद्भेदनाय हृदयमर्मभागे स्थितस्य गूढविषादस्य विनोदनाय रामकृत प्रशमाया स्वकीयाया आकर्णनेन समुत्पन्नस्य सुखस्यानुभवनाय च न कश्चिदन्य उपाय आसीदत कविकृत स उपायो नितरामेव स्तुत्य।

वस्तुतस्तृतीयोऽङ्क कवेर्नाट्यचातुर्या विलक्षण निदर्शनम्। तमङ्क सयोज्य वर्विर्निताम्तदुरूहाण्यपि कार्याणि विनैवायास साधयितु क्षम सञ्जात। स तथा कृत्वा राममनिवारणीयनिन्दात पाति सीतामपि स तस्मादनलाद् रक्षति य पतिकृतनिकारादुत्पद्य पत्नीं दहति। तृतीयाङ्कस्य प्रणयनचातुरी कवेरिदमपि मनोज्ञ फल जनयति यत् सप्तमेऽङ्के नैसर्गिकरीत्यैव सीताया पुन सयोगरूप कार्यं सम्पन्नता याति।

कवेर्घटनासयोजनसम्बन्धिन्या निपुणताया अन्यच्च ललित निदर्शनमस्ति सप्तमाङ्कस्यगर्भाङ्क। तद्विषयिणी कल्पना वस्तुतस्तत्रैव सम्भवा भवति यत्रावसान सुखमय घटते। कवेरियमूहा नितान्तनवीना। सा अद्भुत रस सहृदय दर्शकाना चेतासि कौतूहलेन पूर्यमाणानि करोति तदेव घटनाना सविधान सर्वत्र आदितोऽन्त यावत् सुश्रृङ्खल सयत सुश्लिष्टञ्च वर्तते। एवविधा समीची नता नाटके वस्तुतो नाट्यकलानदीष्णो नाटककार एव सञ्चारयितु क्षमते। कवेरेषा कुशलता महावीरचरितेऽपि दृश्यते। प्राचेतसाश्रमपदे कौसल्याजनका दीना सम्मेलनमपि कविकल्पनाया पेशलप्रसाधनत्वेन नाटके शोभमान भवति।

रूपके कतिपयेषु चरित्रेषु रामस्य सीतायाश्च चरित्रमतितरा सुललितम्। लक्ष्मण-जनक चन्द्रकेतु-लव कुश वाल्मीकि-कौसल्या ऽरुन्धती गङ्गा पृथिवीप्रभृती ना चरित्राणि तत्राल्पमेव महत्त्व भजन्ते। भवभूती राम गृहाधिपतित्वेन चित्रयति तत्र स तदीय दैहिक नैतिकञ्च तेज सम्यगङ्कते। शम्बूकस्तस्यासुर सहारकत्वात्, त प्रशसति। सीताञ्चलित बल्लभ गोपायितु स ऐश्वर्यमुपसरन् घोषयते। कुशस्त हि "आशसनीयपुण्यदर्शन स महात्मा" इत्यभिधाय श्लाघते। स ब्रह्मकाशस्यासीद् गोप्ता। जगद्रक्षण तज्जीवनस्य लक्ष्यमासीत्—"इद विश्व पाल्य विधिवदभियुक्तेन मनसा"। सत्यन्तु इद यत् कर्त्तव्य पालन म मूर्धन्यत्वेन मेने। स कर्त्तव्यात्सोऽरेश्यनैद कर्त्तव्यमवति स्म न च केनाप्यन्येन

प्रयोजनेन। प्रजारञ्जने हि स्वकीयनृपत्वस्य स कृतार्थताममंस्त। एतदर्थं सीतामपि परित्यज्य मानवीयजीवनस्य चरमं कष्टमन्वुवाह—

स्नेहं दयां च सौख्यं च यदि वा जानकीमपि।
आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा॥

स्वराज्ये स न मनागपि पापं सोढुमशकत्। ब्राह्मणसुतमकालमृत्युना मृतं जीवयितुमसौ तपश्चारिणं शम्बूकं जघान। तस्य जीवनं धर्म-स्वार्थं सुदृढमभ्यतिष्ठत। धर्मस्य किं नाम सामर्थ्यमित्येतत् सम्यग् विवेद—"लौकिकानां हि साधूनामर्थं वागनुवर्तते। ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति"। न तावत् स सामाजिक्याः सेवायाः विरराम यावदसौ पूर्णतया न सन्तुतोष। स यावान् सन्नीतिपरः श्रेष्ठः शासक आसीत् तावानेव स महान् प्रशंसास्पदं मर्त्योऽप्यासीत्। सीतां स प्रजारञ्जनाय मुमोच परं तदीयं हृदयं तदीयं सान्निध्यं कदापि न तां विसस्मार। स सततं दिवानिशं तद्वियोगेन दन्दह्यमान एव दृष्टो बभूव। सीताविषयकेण अगाधेन स्नेहेन च प्रणयेन तस्य मानसं क्रन्ददुच्चैः तज्जीवनस्य प्रतिक्षणं शुश्राव—

दलति हृदयं शोकोद्वेगाद् द्विधा तु न भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम्।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम्॥

सीतां स्मारं स्मारं स कदा न विलपन् श्रुतो बभूव—

"हा हा देवि! स्फुटति हृदयं, ध्वंसते देहबन्धः
शून्यं मन्ये जगदविरलज्वालमन्तर्ज्वलामि।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ् मोहः स्थगयति कथं मन्दभाग्यः करोमि॥

सीतायाः कर-स्पर्श एव तस्मिन् चेतनां प्रत्यापादयितुं शशाक। तत्स्पर्शोऽस्मिन् अमृतमयप्रलेपोऽसिद्ध्यत्—

"आलिम्पन्नमृतमयैरिव प्रलेपैरन्तर्वा बहिरपि वा शरीरधातून्।
संस्पर्शः पुनरपि जीवयन्नकस्मादानन्दादपरमिवादधाति मोहम्॥"

सीतायाः गुणान् शुद्धतां च प्रति तद्हृदये महती श्रद्धा जजागार। दुष्ट-बन्धुत्व-पतित्व-पितृत्वादिसकलदृष्ट्या नूनं स महान् आदर्शपुरुषो भूत्वास्मिन्

ससारे विरेजे वस्तुत स भुवो भूषणमासीत्। तेन जगदिद परमेव गरिमाणं जगाम।

यथाविधो रामो मानवताया परमरमणीय पावनोऽवतार आसीत् तथावि धामेव भवभूति सीतामपि तत्प्रेयसीं स्वकीये रूपके परमनिपुणहृदयेन चित्रया मास। नाटके सा पत्नीत्वेन चित्रिताऽस्ति न सा तत्र मातृत्वेन पुत्रीत्वेन चित्रिता वीक्ष्यते। सा रामार्थं सर्वं सेहे। सा तद्धितायैव अजीवत्। सा छायेव तमनुजगाम। निर्वासिते सति रामे सा सर्वाण्यपि सुखानि प्रहाय्य चरणेन, राममनुबयाज। वस्तुत सा एका सतीशिरोमणिर्नारी आसीत्। यदा हि निरपराधा सा स्वय रामेण निर्वासन प्रापिता तदापि न सा रामे एकमपि अपशब्द प्रयुयोज। सा आत्मानमेव दुरोभागिनीं मेने। आत्मानमेव सा पुन पुन आक्रोशत। "एवमपि मन्दभागिन्यह या पुनरायासकारिणी आर्यपुत्रस्य" "सखि वासन्ति! त्वमेव दारुणा कठोरा च। यैव प्रलपन्त प्रलापयसि" इत्यादीनि तद्वचासि रामगत तत्प्रेम कियत्पवित्रं कियत् नि स्वार्थमासीदिति स्पष्टमेवावगमयन्ति। भर्तुराकाङ्क्षामप्रति एतादृशमात्मसमर्पणं तत्कृतपरित्यागेऽपि स्वकीयस्य भाग्यस्यैव दोषित्वेन स्वीकरण सीतायास्तामुदात्ततां तां महत्ता द्योतयति या न कोऽपि मानदण्डो मातु प्रभवति। नाटकस्य तृतीयोऽङ्क सीताया गम्भीर पतिविषयक प्रेम चित्रितङ्कुर्वाण प्रेक्ष्यते। पतिदु ख न सह्यमासीत् तस्या। स्वकुशायोत्स्प स्यनन्तरमपि सा पतिमेव नितरां सस्मार। न किमप्यनिष्ट तस्य स्यादित्यया तदीयान्तिमकामनासीत्। तस्याश्चरित्रस्य शुद्धतां तु रामश्चिरादेव अवेत्—

"उत्पत्तिपरिपूताया किमस्या पावनान्तरैः।
तीर्थोदक च वह्निश्च नान्यत शुद्धिमर्हत ॥"

सीतायां रामस्य प्रेम कियन्महदासीदित्येतत्तु तदा पराकाष्ठां श्रिय गतमीक्ष्यते यदा सीताया हिरण्मयीं प्रतिकृतिमश्वमेधयज्ञानुष्ठानाय प्रतिष्ठापयन्त राम पश्याम। सा घटना सीताया अपरिमेयस्य निर्दोषस्य चरित्रस्य सर्वविजयी विजय। हन्त, यथमस्मिन् नाटके सकृदेव स्वमातर सीतां लक्ष्मणंप्रति "इयमपि अपरा का" इत्येतेन वचनेन उपहास कुर्वाणां पश्याम। वस्तुतो जगति सा उपमानशून्यैका आदर्शपतिव्रता प्रतिष्ठासीत्। सदाचारसुपदेष्टु ससार भारतस्य च भाव्युज्ज्वलतम कर्तुमेव सावततार। लक्ष्मणो नाटके महान् रामाज्ञापालक- स्वार्थविहीनोऽनुज इव गीत। रामस्याज्ञापालने स आत्मान

गौरवशालिनममस्त। स स्ववन्धुवरस्य रामस्य तेषु सर्वेष्वपि कार्येषु महान् सहायको बभूव यानि रामस्य चरित्रं समग्रगुणसंवलितमभिनवं सञ्जीवनेऽवरन्त।

कविर्नाटकेऽन्यानि च सर्वाणि पात्राणि समुचिततया कुशलतया च आतङ्के। न कस्यापि पात्रस्य स्वरूप महत्त्वञ्च विपरीतस्या निकृष्टतया वा तच्चरित्रापकर्षकारिण्या रीत्या व्यक्त भवेदित्येतदर्थं स भृशमयतिष्ट। उद्योगे चास्मिन् स सफलतामाप्स्यते।

कवे कृतिमिमां विलोक्य तस्य विचारविधा साधु विदिता संजायते। वस्तुतः को जनः कीदृश इत्येतत् तस्याचारान् विचारान् रचनाञ्च विलोक्यैव ज्ञातं भवति। उत्तररामचरिताध्ययनेन भवभूतेः प्रणयशीलभर्तृत्वं वात्सल्ययवपितृत्वं च सिद्ध्यति तस्य प्रिया प्रेम—

"इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः।
अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः॥"

"अद्वैतं सुखदुःखयोरनुगुणं सर्वास्ववस्थासु यद्
विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः।
कालेनावरणात्ययात् परिणते यत् स्नेहसारे स्थितं
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत् प्राप्यते॥

इत्येताभ्यां श्लोकाभ्यां स्फुटमेवाभिव्यक्तिमुपैति। अथ च

"अङ्गादङ्गात् सुत इव निजः स्नेहजो देहसारः
प्रादुर्भूय स्थित इव बहिश्चेतनाधातुरेकः।
सान्द्रानन्दक्षुभितहृदयप्रस्रवेणावसिक्तो
गाढाश्लेषः स हि मम हिमश्च्योतमाशास्तीव॥"

"अमृताध्मात-जीमूत स्निग्ध संहननस्य ते।
परिष्वङ्गाय वात्सल्यादयमुत्कण्ठते जनः॥"

तदीयं वत्सलपितृत्वञ्चाभ्यां श्लोकाभ्यां नेत्रयोः पुरतः परिस्फुरदुपस्थितं भवति। प्रकृतिदृश्य-वर्णने स तस्या भीषणं मधुरञ्च रूपं निदधाति। तस्यास्तदेव स्वरूपं तस्मै रोचत इव। तस्या स सन्तापस्य स्थितिमीक्षते न हर्षो-

नाट्यस्य । कवेस्तादृशवर्णनमालोक्य तस्य प्रकृतेर्निराशास्पदता विषण्णता च प्रकल्प्यते । तदीये रूपके विदूषकस्याभावोऽपि तत्प्रकृतेस्तादृशत्वं परिपोषयते ॥ निदाघस्य भीषणकठोरतां तत्प्रखरप्रतिभा साकारां इवोपस्थापयति । दृश्यताम्—

"निष्कूजस्तिमिताः क्वचित्क्वचिदपि प्रोच्चण्डसत्त्वस्वनाः
स्वेच्छासुप्तगभीर-भोगभुजगश्वास प्रदीप्ताग्नयः ।
सीमानः प्रदरोदरेषु विरलस्वल्पाम्भसो यास्वयं
तृष्यद्भिः प्रतिसूर्यकैरजगरस्वेदद्रव पीयते ॥"

कौशिकानां पङ्क्तिं, मौकुलीनां कुलम्, कुम्भीनसानाञ्च उद्वेल्लनमिह कियद् भं तेनुत्पादयन्तीत्यपि धैर्येण विलोक्यताम्—

"गुञ्जत्कुञ्जकुटीरकौशिकघटाघूत्कारवत्कीचक-
स्तम्बाडम्बरमूकमौकुलिकुलः क्रौञ्चाभिधोऽयं गिरिः ।
एतस्मिन् प्रचलाकिनां प्रचलतामुद्वेजिताः कूजितै-
रुद्वेल्लन्ति पुराणरोहिणतरुस्कन्धेषु कुम्भीनसाः ॥"

एतादृशानि वर्णनानि कवेः गभीरप्रकृतित्वमवश्यमभिव्यञ्जन्ति । इदन्तु न खलु सुशकं यत् तत्र विनोदप्रियताया ललितपदप्रियताया अभाव एवासीत् । तदेवं उत्तररामचरितसदृशस्य करुणरसप्रधानस्य रूपकस्य वा मालतीमाधव सदृशस्योन्मुक्तप्रणयस्य प्रणयनमेव कदा सम्भवं स्यात् । कवावस्मिन् निरीक्षता भूयस्येव ; स वर्णनीयस्य पदार्थस्य स्वरूपं तद्गतांश्च धर्मान् प्रत्यक्षीकृत्य समुपस्थापयति । यदा नदीकलकलं श्रावयितुमिच्छति तदा तासां कलकलध्वनिः श्रुतिपथमायाति यदामौ किङ्किणीनां रणत्कारं श्रावयितुमभिलषते तदा स रणत्कारोऽपि स्पष्टं श्रुतो भवति । प्रकृतिपर्यवेक्षणे वस्तुतो हि तस्य दृष्टिः सूक्ष्मा वर्तते । भारवि-माघ श्रीहर्षमुरारीणां प्रकृतिवर्णनमप्रस्तुतविधानात्मकमेव दृश्यते । एतस्य तु ततो मुक्तमेव प्रतिलक्ष्यते ।

भवभूतेर्भारती शृङ्गारे करुणे च यदि कोमलकान्तपदावलिपेशला तदा माधीरे रौद्रे चोत्कटकठोरदीर्घसमासलसिता विलसति ।

"भूयो भूयः सविधनगरीरथ्यया पर्यटन्तं
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था ।

सान्द्राकारं नवमिव रतिर्मल्लीमालावत् यद्
गाढोत्कण्ठालुलितललितैरङ्गकैस्ताम्यतीति" ॥

इत्यत्र तदीया सा लेखनी सुकोमलतां चित्रयन्ती समुल्लसति सैव

"उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसा—
न्यंसस्फिक्पृष्ठपिण्ड्याद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
आर्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति" ॥

इत्यत्र बीभत्सं भयानकञ्च रसद्वयं कियत्पाटवेन प्रकटयन्ती समुपतिष्ठते ।

भवभूतेः कलायां वैदुष्यस्य प्रतिभासमुल्लसिताया कल्पनायाश्च चेतोहरः समन्वयश्चकास्ति । स शृङ्गारे करुणे, रौद्रे, वीरे, भयानके च अनघत्र, सर्वत्र सानन्दं विचरन् दर्शितो जायते । हर्षरसकरुणरसवर्णने क्वापि निलीनो भावात्मने यत्र कलाया मोहं संवरीतुं न शशाक तत्र तदीया भाव-सुषमा स्वाभाविकेन सता दृश्यते । मालतीमाधवे महावीरचरिते च सः समासान्तपदावलीनां क्लिष्टानुप्रासिकचमत्कारे अतितरां रुचिं निदधानः अवगम्यते । एतादृशस्यातिनिवेशस्य दर्शनमुत्तररामचरितेऽपि यत्र तत्र भवति ।

भवभूतिः प्रेमभावस्य बाह्यकारणाधीनतायां न श्रद्धत्ते । तद्विचारेण प्रेमान्तरं वस्त्वेव । अत्र तदीया एषा साक्ष्यमस्ति—

"व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः" ॥

कविः करुणरसमेव प्रधानं रसं मन्यते इत्येतत् तथ्यं तस्य गिरेयं प्रथयति—

एको रसः करुण एव निमित्तभेदाद्
भिन्नः पृथक् पृथगिवाश्रयते विवर्तान् ।
आवर्तबुद्बुदतरङ्गमयान् विकारा-
नम्भो यथा सलिलमेव तु तत्समग्रम् ॥

मानवस्वभावस्य प्रेक्षणं तदुपरागञ्चोभयमपि कविर्भवभूतिर्जानाति । अत्यल्परूपाणि हृदयस्य स्फुरणानां परिणमनं ये कलाकोविदा विदन्ति तेष्वन्यतमोऽयं कविः । पञ्चवट्यां तमसया सार्धं प्रयान्ती सीता रामस्य सुमधुरां वाणी-

आकर्ण्य यामनेकभावविभूषितां दशामस्माद् तद्दर्शनं चेत्कौतूहलं तदा कवेरस्य श्रूयतां श्लोकोऽयम्—

"तटस्थं नैराश्यादपि च कलुषं विप्रियवशाद्
वियोगे दीर्घेऽस्मिन् झटिति घटनोत्तम्भितमिव ।
प्रसन्नं सौजन्यादपि च करुणैर्गाढकरुणं
द्रवीभूतं प्रेम्णा तव हृदयमस्मिन् क्षण इव ॥"

भवभूतिर्भावानामुदरदरीं प्रविशति, स मर्मभागोन्मीलननिपुणेन वेदाध्ययन तानभिव्यनक्ति, स तादृशान् एव शब्दान् प्रयुनक्ति यादृशा शब्दा कमपि भाव मनोवेग वा दर्शयितु प्रभवन्ति । तदीय लक्ष्यमेवेद यद् गूढातिगूढानि तत्त्वानि प्रकाशमृच्छेयु । न स भावसौन्दर्यकल्पनाय उपमोत्प्रेक्षयोरवलम्बने नितरा मनो निबध्नाति । ते ऋजुतयैव सन्निधातुमीहते स । चित्रदर्शनावसरे समुद्गतान् राम हृद्गतान् हृद्यान् भावान प्रस्तौति स इत्थम्—

'अय ते बाष्पौघस्त्रुटित इव मुक्तामणिसरो
विसर्पन् धाराभिर्लुठति धरणीं जर्जरकण ।
निरुद्धोऽप्यावेग स्फुरदधरनासापुटतया
परेषामुन्नेयो भवति च भराध्मातहृदय ॥'

संस्कृतभाषाया कवे पूर्णोऽधिकारो वर्तते । स अत एव, यस्य पदार्थस्य निरूपणाय यादृशी भाषापेक्ष्यते तस्य पदार्थस्य निरूपण तादृश्यामेव भाषायां कुरुते । उत्कटवैदुष्यवत्तया तीक्ष्णतरप्रतिभाशालितया कल्पनाकलितचित्ततया च तदीयानि सर्वाण्यपि वर्णनानि प्रवाहपूर्णानि प्राञ्जलानि च भूयोपस्थितानि भवन्ति । युद्धवर्णनकरमिममध स्थित श्लोकमुद्धृत्योपरि निवेदित वच प्रमाणित कर्तुमिच्छाम —

'आगर्जद् गिरिकुञ्जकुञ्जर घटानिस्तीर्णकर्णज्वर-
ज्यानिर्घोषममन्ददुन्दुभिरवैराध्मातमुज्जृम्भयन् ।
वेल्लद्भैरवरुण्डखण्डनिकरैर्वीरो विधत्ते भुव
तृप्यत्कालकरालवक्त्रविघसव्याकीर्यमाणामिव ॥'

भवभूति कविर्यया अलौकिक्या काव्यशक्त्या नितान्तमनुपमस्तथैव शास्त्रीये पाण्डित्ये चाप्युद्भट एवासीदित्येतत् सत्य तदीयादध स्थिताच्छ्लोकादवगम्यते—

'यद् वेदाध्ययन तथोपनिषदां सांख्यस्य योगस्य च
ज्ञान तत्कथनेन किं ? न हि तत कश्चिद् गुणो नाटके ।

यत्प्रौढत्वमुदारता च वचसां यच्चार्थतो गौरवं
तच्चेदस्ति, ततस्तदेव गमकं पाण्डित्यवैदग्ध्ययोः ॥

तस्य शास्त्रीय-पाण्डित्यस्य प्रकाशकानि कानिचन उदाहरणानीह प्रदर्श्यन्ते— महावीरचरिते कविरयं पुरोधःप्रशंसायां 'राष्ट्रगोपः पुरोहितः' इत्याकारकम् ऐतरेयब्राह्मणस्य मन्त्रमुद्धरन् वीक्ष्यते। उत्तररामचरितस्य चतुर्थेऽङ्के जनकमुखादेव 'असुर्या नाम ते लोकाः' इत्यादिवाक्यानि निर्गमय्य स ईशावास्योपनिषद्विज्ञतां विज्ञापयन् प्राप्यते। तत्रैव च—

"विद्याकल्पेन मरुता मेघानां भूयसामपि।
ब्रह्मणीव विवर्तानां क्वापि प्रविलयः कृतः ॥"

इत्यनेन श्लोकेन स अद्वैतवेदान्तवेदुष्यमुद्भावयन् समासाद्यते। मीमांसकदण्डायनसंवादश्रवणेन तस्योक्त्या मीमांसाभिज्ञता धर्मशास्त्रपारगामिता च स्पष्टं सुविदिता भवति। इत्थमाननस्य विलोकनेन तस्य नानाशास्त्रनिष्णातता-नायासेनैव ज्ञाता जायते।

भवभूतिरुत्तररामचरितस्य कृते कथावस्तु वाल्मीकिरामायणाद् जग्राह। स तस्य पल्लवनाय च विशिष्य वर्णने ऋणी कविकालिदासस्य। अत्र प्रति सोऽस्यांशतोऽधमर्णः। विदुषां कथनमिदं यत् तदीयान्तर्दर्शनं कविकालिदासस्य—

'तयोर्यथाप्रार्थितमिन्द्रियार्थानारेभुषोः सद्मसु चित्रवत्सु।
प्राप्तानि दुःखान्यपि दण्डकेषु सञ्चिन्त्यमानानि सुखान्यभूवन् ॥'

इत्येतस्या उद्भावनाया एव विस्तरो विभाति।

सीता शकुन्तला च द्वे अपि गर्भं अभरतां यदा ते अन्तर्वत्न्यावास्ताम्। कालिदासस्य रामः सीता परित्यागावसरे शोचति—

'राजर्षिवंशस्य रविप्रसूतेरुपस्थितः पश्यत कीदृशोऽयम्।
मत्तः सदाचारशुचेः कलङ्कः पयोदवातादिव दर्पणस्य ॥'

भवभूते रामोऽपि एवमेव दूयते—

'यत् सावित्रैर्दीपितं भूमिपालैर्लोकश्रेष्ठैः साधु शुद्धं चरित्रम्।
मत्सम्बन्धात् कश्मला किंवदन्ती स्याच्चेदस्मिन् हन्त धिङ् मामधन्यम् ॥'

सीता शकुन्तला—द्वे अपि महिष्यौ—सर्वथैव स्वस्वपत्या पर्युज्झिते भवतः। सीतायाः पती रामः शकुन्तलायाश्च पतिर्दुष्यन्तो बहुदिनानन्तरं हि

आश्रमे स्वात्मजान् ऋषिपालितान् प्राप्नुत । द्वावपि राजानौ स्वस्वसुतस्याकृतिं स्वकीयाकृतिसंवादिनीं वीक्ष्य विचारमग्नौ भवत । कालिदास अभिज्ञान-शाकुन्तले सप्तमेऽङ्के 'अस्य बालकस्य रूपसंवादिनी ते आकृतिः' इति किञ्च भवभूतिरपि उत्तररामचरिते षष्ठेऽङ्के 'अये न केवलमस्मत्संवादिनी आकृतिः' इत्येतद् उपन्यस्यति । कालिदासस्य शकुन्तला भवभूतेश्च सीता द्वे अपि स्वस्व भर्तृविरहदुःखात् नितान्तमेव दूयेते । चिरकालव्यापिविच्छेदमनन्तरं यदा शकुन्तला दुष्यन्तं पश्यति तदोद्गिरत्येव 'न खलु आर्यपुत्र इव' इति, भवभूते सीतापि एवमेव तमालोक्य बहुकालानन्तरमाह—'हा कथं प्रभात-चन्द्रमण्डलपाण्डुराकृतिः' इति । दुष्यन्तः शकुन्तलामधिकृत्य यदि वक्त्येव—

'वसने परिधूसरे वसाना नियमक्षाममुखी धृतैकवेणिः ।
अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं बिभर्ति ॥

तदा उत्तररामचरितेऽपि सीतामुद्दिश्य तमसामनति तदवैवम्—

'परिपाण्डु दुर्बलकपोलसुन्दरं दधती विलोलकबरीकमाननम् ।
करुणस्य मूर्तिरिव वा शरीरिणी विरहव्यथेव वनमेति जानकी ॥'

भासस्य स्वप्नवासवदत्तीयात् पञ्चमादङ्काद् भवभूतिः स्वकीयोत्तरराम चरितस्य तृतीयाङ्क प्रणेतुं साहाय्यं लभत इति च विचक्षणानां विचारः । अस्तु तावत् किमपि । कवेर्भवभूतेः रचनेयमुत्तररामचरिताभिधा श्रेष्ठरचनास्ति । गोवर्द्धनाचार्यस्तस्येमां कृतिमुद्दिश्य सर्वथैव सत्यमाह—

'भवभूतेः सम्बन्धाद् भूधरभूरेव भारती भाति ।
एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रावा ॥'

वाक्पतिराजश्च 'गउडवहो' काव्ये प्रशंसतिस्म एवं कविवरमिमम्—

भवभूतिजलधिनिर्गतकाव्यामृतरसकणा इव स्फुरन्ति ।
यस्य विशेषा अद्यापि विकटेषु कथानिवेशेषु ॥ (संस्कृतच्छाया)

धन्यो धन्यो लोकातिशायियशोराशिसमुद्भासितो विश्वविदितमहानुभूति-र्भवभूतिः ।

—o※o—

# भारविः

दुर्दैववशाद् भारतवर्षादार्यज्ञानभास्करे चिरायास्तमुपेतेऽपि तमसमावृतहृदया भारतीया आर्याः कथमधुनापि विगतानन्दनिकुरम्बं सुखस्मृतिमाः सर्वस्वं स्वजीवनं सफलमिव मन्यन्ते इति चेद् विचार्यते केनचिद् विचारवता, तर्हि तन्मानसे पुनरेव प्रतिभासते यदेतस्यां विजयवैजयन्तीविभूषितायां वसुधायामिदानीमपि नन्दन्ति केशवजनाखिलभुवनमनआवर्जनकुशलानां तत्त्वात् गौरवविभा याभिः प्रमोदितस्वान्ता. मन्येऽस्मिन्नप्यनेहसि मर्त्ये पुरुषश्रेष्ठे। पुरुषोत्तमाङ्घ्रिपङ्कजपरागपावनीकृते भारते जनुर्ग्रहणेन स्वं कृतार्थीकर्तुं कामयन्ते। देशस्यास्य विशालस्य नैसर्गिकसुषमामहीयसा सनातनधर्ममहिम्ना सुरसरस्वतीश्रिया च साम्प्रतमपि भारतीकमासाममलं सर्वोपरि वेविदीति।

समज्ञासुधाशुक्लीकृतदिक्प्रान्तानां सरस्वतीचरणसरसिजचञ्चरीकाणां व्यासवाल्मीकि-कालिदास-भवभूति-बाणा-म्बिकादत्तव्यासप्रभृतीनां महादेशस्यास्य कविप्रवराणां कविसर्वाङ्गकथनं यद्यपि अस्मद्दुर्नियतिविधानाधिरोपैः तिरोहिततामधिजगाम तथाप्यमृतस्यन्दिनी तदनुरागधारानिलयमयी स्वां समर्पयन्तीव स्मारयन्तीवातीतगौरवगाथा, उत्पादयन्तीव कौतूहलं वैदेशिकविपश्चिन्मन्दोहानां, मज्जयति सुखपारावारेऽपारे रसिकनिकरम्।

एतस्मिन् विपुलविपुले वसुधातले न विद्मः कियन्तोऽसुमन्त उत्पद्यन्ते लीयन्ते च दिवानिशम्; परं 'कीर्तिर्यस्य स जीवति' इत्येतामुक्तिमन्वर्थीकर्तुमेवेदानीमपि कविभारवेरर्थगौरवगुणगिरोपन्यासविदग्धस्य विमलयशोऽभिरामायाः गम्भीरायाः सुरवाचायाः शान्ता प्रतिभा सुमनसां मानसेष्वजस्रं शान्तिसुरसरितं सञ्चारयति।

यद्यपि महामहिमशाली महाकविर्भारविः कविकुलललामकालिदासभवभूतिवद् यशोऽधिगन्तुं मानमवाप्तुं वा न शशाक तथापि कठोरतरसाधनसन्तोषिताया सकललोकाराध्याया वाग्देवतायाः प्रसादिता सुधीस्तोमे कवित्वशक्तेरुत्कर्षं प्रदर्श्य महतीयमनन्यसुलभमासनमलङ्कृतम् इत्यत्र नास्ति कश्चन

निप्रतिपत्ति । यथर्तुषु कुसुमाकरस्तथैव कविषु कालिदासोऽपि वरीवर्ति इत्येतद् यद्यपि सत्यं, परं तथात्वेऽपि भारविकविता रसपिपासूनां सहृदयानां पेयैव ।

प्रतिरूपे काव्ये भवति कापि विलक्षणता । वसन्ते विद्योतते कापि कमनीया कान्तिर्नूनं, परं तत्र न सा रमणीयता या नीलाम्बुदघटासु शोभते एवमेव तासु घटास्वपि न राजते सा सुन्दरता या पार्वणशारदेन्दोश्चन्द्रिकाया विलसति । भवति वस्तुनिष्ठा सुन्दरता । कस्मै कापि शोभा रोचते कस्मै च कापि । क्षीरस्य मधुरिमा स्वकीय एव, द्राक्षाया मधुरता स्वीयैव, शर्करायाश्च माधुर्यं नैजमेव । एवमेव प्रतिकवि कविता स्वा स्वा सरसता समुपस्थापयति । रसपिपासव सर्वेभ्योऽपि सरसेभ्यस्तेभ्योऽनारत रस पायं पायमात्मान परिप्रीणयन्ति तस्माद् भारवे कविताया अपि गभीरार्थसौन्दर्यसुन्दरत्वादानन्दाधायकत्वाल्ललितपद-पावनत्वात् सतां धीमतां नितरां सा प्रीतिकरी ।

भारविः, कलापक्षेऽभिनिवेश विदधानोऽपि माघ इव न शब्देऽर्थे चोभयोर्गम्भीरतामभिलषते न च स श्रीहर्ष इव प्रौढोक्तीनां दीर्घदीर्घतरोत्प्लवने परीरम्भक्रीडयात्र प्रीतिविशेषं पुष्णाति । तदीया चित्तवृत्तिर्विशेषतोऽर्थगरीयस्त्वतायां रमते । वर्णनात्मके तर्कप्रधाने ओजसि भूयसीं मुदं विन्दते । शब्दक्रीडायामपि सा तृप्तिमश्नुते भृशम् । तस्यास्तद्विधाया रुच्या दर्शनं विशेषत पञ्चमे पञ्चदशे च सर्गे भवति । सा श्लेषेऽनुरज्यतीति सत्य परं तदीया सानुरक्तिर्न तावतीं सीमामालिङ्गति यावतीं माघस्य श्रीहर्षस्य वा । काव्ये प्रयुक्तेषु पदेषु स्फुटत्वमर्थे गुरुत्वे वचस्यपौनरुक्त्यमथ चार्थसामर्थ्येऽप्रतिहततानिरत स्यादित्येष एव तदीय कलानुपक्त सिद्धान्त प्रतिभासते ।

'स्फुटता न पदैरपाकृता न च न स्वीकृतमर्थगौरवम् ।
रचिता पृथगर्थता गिरा न च सामर्थ्यमपोहितं क्वचित् ॥

इत्येतेन नैजेन श्लोकेन कवि स्वाभिमतमेवमुद्भावयन् प्रतिलक्षयते ।

भारवे कविताया नैतिकानि तत्त्वानि स्वकीयामाभामादधाना प्रायेण सर्वत्रैव दीप्यन्ते । तस्य व्यावहारिक शास्त्रीयश्चानुभव परिपक्व प्रगल्भश्च । पण्डिता अपि तदीयास्तान् नैतिकान् सिद्धान्तान् अनुभवभावितानि वचांसि च रसनाग्रवर्तीनि विधायात्मान धन्यं मन्यन्ते ।

अनुभवेन स यद् यदर्जितवान् तत् तत् तस्य काव्ये यत्र तत्र विकीर्णं वर्तते । हितकारके हि वचने मनोहारिता दुर्लभा इत्येतमनुभवं स इत्थ प्रकटीकरोति—

'क्रियासु युक्तैर्नृप चारचक्षुषो
न वञ्चनीयाः प्रभवोऽनुजीविभिः ।
अतोऽर्हसि क्षन्तुमसाधु साधु वा
हितं मनोहारि च दुर्लभं वचः ॥'

महात्मनि कृतो विरोधोऽपि नाशुभं जनयति। तेनापि विरोधी लाभवान् एव जायते। अतः स आह—

तथापि जिह्मः स भवज्जिगीषया
तनोति शुभ्रं गुणसम्पदा यशः ।
समुन्नयन् भूतिमनार्यसङ्गमाद्
वरं विरोधोऽपि समं महात्मभिः ॥

यस्य कोपोऽवन्ध्यो ह्यापदां विनाशने प्रवृत्तिश्च तस्य वशवर्तितया सकलमपि जगद् भवति इत्येतद् वीक्ष्य वदति सः —

अवन्ध्यकोपस्य विहन्तुरापदां
भवन्ति वश्याः स्वयमेव देहिनः ॥

अविमृश्यकारिता विपदामास्पदमित्येतदनुभूय निगदति सः —

सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥

जगति सर्वत्र विलोक्यते यद् यो जनः शठेषु शाठ्यं नाचरति स दूयते तस्मात् स ब्रवीति—

व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः ।
प्रविश्य हि घ्नन्ति शठास्तथाविधानसंवृताङ्गान्निशिता इवेषवः ॥

गुणैर्मनुष्य आदरं लभते न च वपुर्विस्तारेण इत्येतत् कथयति—

प्रविवेश गामिव कृशस्य नियमसवनाय गच्छतः ।
तस्य पदविनमितो हिमवान् गुरुतां नयन्ति हि गुणा न संहतिः ॥

अधिकारी स्वामिनः सत्कारसम्मानमवाप्य वर्धिततेजा जायते अत आह—

लेभे परां द्युतिममर्त्यवधूसमूहः
सम्भावना ह्यधिकृतस्य तनोति तेजः ।

वस्तुतो भारवेः काव्ये पदे पदे नैतिकाः सिद्धान्ताश्चरित्रनिर्माणकारिण्यः सूक्तयः समवाप्यन्ते। 'नयवर्त्मगाः प्रभवन्ति हि श्रियः', 'न निहन्ति धैर्यमनु-

भावगुण'; 'गुणरतास्मरे हि विराजते', 'गुणा प्रियत्वेऽधिकृता न संस्तव', 'न रम्यमाहार्यमपेक्षते गुणम', 'वस्तुमिच्छति निरापदि सर्व' इत्यादिविधाभि प्रचुराभिः सूक्तिभिः समग्रमपि काव्यं प्रपूर्यते।

भारविर्निर्यथा स्वकीयेऽमरकाव्ये लोकानुभवान् प्रचुरान् प्रयुङ्क्ते तथैव स हृदयादर्पणकारिणीं, सामग्रीमपि सुमृदुलां भूयसीमुपयुङ्क्ते दृश्यते। स मृदुलमृदुलतरागां भावानामपि सन्निवेशने क्षमता बिभर्ति—

मध्यमोपलनिभे लसदंशौ
एकतश्च्युतिमुपेयुषि भानौ।
द्यौरुवाह परिवृत्तिविलोला
हारयष्टिमिव वासरलक्ष्मीम्॥

मानवो निसर्गतो विविधाभरणधमनादिर्वैभवेषु रुचिं प्रदर्शयति। तस्य मानसे एवंविधा भावाः सदा उद्बुद्धा भूत्वा निवसन्ति ये सुखेषु स्पृहयालवो विनोदेषु चञ्चला क्रीडासु उत्कण्ठिता कलासु कुतूहलिनो भवन्ति। उपरिस्थितेन श्लोकेन कविर्मानवस्यालङ्कारप्रिया भावुकतामभिव्यनक्ति।

अंशुपाणिभिरतीव पिपासुः
पद्मजं मधु भृशं रसयित्वा।
क्षीबतामिव गतः क्षितिमेष्य-
ल्लोहितं वपुरुवाह पतङ्गः॥

इत्येतेन श्लोकेन कविर्मानवहृदयस्यान्तराले सोऽपि भाव उत्तरलितो भूत्वा वतिष्ठते येन प्रेर्यमाणः स (मानवः) मधुपानादिनारमानं रमयितुमुत्कण्ठामिच्छां करोति' इत्येतं भावं प्रकाशयन् समवाप्यते सः।

मानवस्यायमपि स्वभावो दृश्यते यदसौ नवे नवे प्रीतिं योजयितुमुत्सहते। न स एकस्मिन् एव तृप्नोति। स उपभुज्यैकं वस्तु वस्त्वन्तरमुपभोक्तुमीहते। कवि कदाचिन्मानवस्यैतादृशीमेव भावुकतामध स्थितेन श्लोकेनाभिव्यनक्ति—

प्राक्प्रसादपि जने नतमूर्ति
प्रेम तत् प्रवणचेतसि हित्वा।
सन्ध्ययानुविदधे विरमन्त्या
चापलेन, सुजनेतरमैत्री॥

मनोरञ्जनं विना न मानवो जीवितुमर्हति। विनोदस्तस्य जीवनशक्तिमेधयति,

तेन स प्रमोदति । तस्मै विविधता विचित्रता च रोचते, न स अपरिवर्तनीयता-मिच्छति; एकरसता तस्मिन् जुगुप्सां जनयति, स मनो नन्दयितुमनेकव्यापारेषु प्रवर्तते-तदेतं तदीयं भावं दर्शयितुं नूनं स आननति—

मज्जिता नु विदिशान्तरशैला-
नाशितं नु गगनं स्थगितं नु ।
पूरिता नु विषमेषु धरित्री
संहृता नु ककुभस्तिमिरेण ॥

मानवो न सदैव मनो निगृह्य स्थातुं शक्नोति । अतएव स कदापि यदि भगवन्तं भजमानः प्राप्तो भवति तु कदापि सः अर्थार्थं विगृह्णाति संलग्नो भवति । मनश्चाञ्चल्यात् स कदापि अन्यविधेनापि साधनेन मनो विनोदयितु-माकाङ्क्षति । कवि —

"व्यानशे शशधरेण विमुक्तः
केतकीकुसुमकेसरपाण्डुः ।
चूर्णमुष्टिरिव लम्भितकान्ति-
र्वासवस्य दिशमंशुसमूहः ॥"

इत्येतेन श्लोकेन मानवस्य मनोविनोदिनीं प्रकृतिं स्पष्टमेव निर्दिशति । एवं विधानि बहूनि स्थलानि काव्येऽस्य कवेः शोभन्ते । यानि मानवस्य सुमृदुलां भावनां नितरामेव मोदयन्ते ।

कवेः काव्यस्य कथावस्तु महाभारतस्यामेकां अल्पमानघटनामाश्रित्य सुगठि-ततां नीतमस्ति । अस्ति सा घटना शत्रून् जेतुं पशुपतेः सकाशाद्दिव्यास्त्रलाभाय अर्जुनस्य तपश्चरणविषयेषा न यद्यपि मनःप्रोत्साहकारिणी परं कविस्तामपि नीरसां घटनां नितान्तमेव सरसां विधाय काव्ये वर्णयति—इत्येतदस्ति प्रशंस-नीयं कलाकौशलमस्मिन् कवौ ।

कवेः काव्यमिदं वीररसस्य काव्यमस्ति । तस्य नायकोऽर्जुनोऽस्ति यो महान् धानुष्कः शूरशिरोमणिरपराजेयश्च महारथिश्चास्ति, तस्य नायिका द्रौपद्यपि वीराङ्गनास्ति । सा वीरवंशस्य दुहितास्ति च वीरवंशस्य वीरस्नुषा । कविः स्वयमपि वीररसानुरागी । ओजसि तेजसि यशसि शौर्य-साहसोत्साहवत्सु कार्येषु तदीया रुची रमते—इत्येतत्परस्यामपि स्थित्यां यस्या न तत्र गन्धर्वाणामप्सरसाञ्च

कुसुमचयनादिविविधक्रीडाना पानगोष्ठीसुरतादिरुनाञ्च वर्णनं क्वापि मुक्तमिथ्ये-तदभिधानं न समीचीनम् । कविरेतादृशी मनश्चमत्कारिणी कर्त्तव्यमार्गप्रदर्शिनी-साध्यसंहरणपटीयसी स्थिती सविस्तरं साटोपमुच्चैस्तरां वर्णयित्वा स्वनायकस्य धीरधुरीणता दर्शयितुमिच्छति । "विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीरा" इत्येतदवगमयितु म तत तत्सर्वं जगौ । . तादृशेषु प्रत्यूहेषु सत्स्वपि तदीयो नायको न स्वकर्त्तव्यपथाद् मनागप्यस्खलत, अप्सरस सुराङ्गना स्वकी-याभिर्योगिजनहृदयहारिणीभिरपि सुन्दरताभिर्विकारोत्पादननिपुणो मनोरमो मधुरो मधुममयोऽपि स्वकीयया सुषमयापि नार्जुनं वशीकर्तुमीशते स्म इत्येतत् तथ्यं सर्वेऽपि तत्काव्यपाठका सम्यग् जानीयुरित्येतेन प्रयोजनेन कवि स्वीये वीररसप्रधानेऽपि काव्ये तत्सर्वं निबबन्ध । तद्वर्णनस्यैदमेवोद्देश्यं नान्यत् कि-मपि । "कविस्तत्सर्वं निरूप्य स्वीयां काव्यकलानैपुणीं ज्ञापयितुमना" इति चेत् तदापि न कथमप्यनुचितम् । काव्ये तस्य सर्वस्यापि वर्णनन्तु नितरामपेक्षितं भवत्येव । न तद्विध वर्णनमन्तरेण कापि कृति काव्य भवितुमर्हति । काव्यलक्षणे तस्याप्यन्तर्भाव साहित्यशास्त्रिभि क्रियते । कविकर्म नितान्तं दुरूहम् । तदति-गहनम् । प्रसिद्धौचित्यस्योपनिबन्धन न यदि कृतं स्यात् तदपि न वरम् । तदनु चितम् । तेन रसो भवति भङ्गोऽतएव नूनम्—

"अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम् ।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत् परा ॥"

कवि स्वनायकस्य धीरधुरन्धरताया प्रदर्शन निमित्तेन कलाया उपयोगं विधाय वस्तुतस्तस्या ( कलाया ) उत्कर्षमेव वर्धयामास । अन्ये कवयो बहवो यदा केवल कलाया प्रदर्शनाय कलामात्स्याश्रकुस्तदैव कविर्वर्ण्यमानस्यापि पदार्थस्य मध्ये जीवन सञ्चारयितु तां प्रयुञ्जानोऽग्राह्यो भवति । तस्मात् तद्विभे-भ्य कविभ्यस्त्वय महीयान् ।

भारवि कविरभिलषते यत् तस्य काव्यमधीत्यालोच्य च समाज समुन्नत संयमी दृढप्रतिज्ञ कर्त्तव्यनिष्ठश्च स्यात् भवेच्च स निर्भय उत्साहवांश्च । स्वपाठ-काना मानसेऽदम्योरुकठोरसाहोत्पादनार्थ तन्मनसि एतावती सुदृढा स्पृहा जागर्ति यदसौ प्रथम एव सर्गे द्रौपदीमेवावतारयति प्रथमम् । स तद्द्वारेणौजस्विनी उत्साहवर्धिनी शक्तिमच्चारिणीर्गिर समुपस्थाप्य ताःकर्तुमुपक्रमते यत् तदीयमिह वर्णयतीति । श्रूयन्तामिह तदीयानि कतिपयानि वचांसि वर्चस्वन्ति—

गुणानुरक्तामनुरक्तसाधनः कुलाभिमानी कुलजां नराधिपः ।
परैस्त्वदन्यः क इवापहारयेन्मनोरमामात्मवधूमिव श्रियम् ॥
भवन्तमेतर्हि मनस्विगर्हिते विवर्तमानं नरदेववर्त्मनि ।
कथं न मन्युर्ज्वलयत्युदीरितः शमीतरुं शुष्कमिवाग्निरुच्छिखः ॥
परिभ्रमँल्लोहितचन्दनोचितः पदातिरन्तर्गिरि रेणुरूषितः ।
महारथः सत्यधनस्य मानसं दुनोति नो कच्चिदयं वृकोदरः ॥

अहो कुरुनृप विजित्य यः प्राप्तं वसु प्रायच्छत् तं वीराग्रणीं धनञ्जयं वल्कवाससमपि वसानं विलोक्य कथं तव हृदयं न व्यथते ? अपि किमेतौ द्वावप्यनुजौ कान्तारे भ्रमन्तौ यमौ प्रेक्ष्यापि तव मानसं न भिनत्ति ? अहह, कीदृशी शोचनीयावस्था तव सञ्जातास्ति । कदापि स समय आसीद् यदा त्वं चारणकृतस्तुतिगीतिमङ्गलैर्बोधितोऽभवः सम्प्रति हन्त, त्वां क्रोष्टारो जागरयन्ति । अयि नृपेन्द्र ! चेत् वनमेव सुखसाधनमवगच्छसि तदा—

"विहाय लक्ष्मीपति लक्ष्म कार्मुकं जटाधरः सञ्जुहुधीह पावकम्" ।

भारविः समुचितमनापूर्णमेव काव्यं करणीयत्वेन साधु मेने । स ओजोमयं भाषणं स्वकीये काव्ये सन्निवेशयति स्म येन दुर्बलः सबलतां गच्छेत्, उत्साहविहीनः उत्साहं लभेत, नूनमपि अभिभूतस्यापि चेतः चेतनां प्रपद्येत । एतन्महीश्वरस्य पूर्वपक्षमयो स्वीये काव्ये प्रचण्डशक्तिशालिनमुद्धतधीरं भीमं समुद्धतभावप्रवर्तनतया द्रौपदीञ्च मानधनां वीराङ्गनामुचितोज्ज्वलवाक्प्रयोग-प्रगल्भतया समुपन्यस्यति स्म ।

कविभारविर्न केवलं वीरताभूर्णानां भावानां प्रकाशने एवीयसीं प्रौढां भारतीं बिभर्ति स्म राजनीत्यामपि महान् पारदर्शी आसीत् । भीमं यम्भारत-राजनीतिपरमुक्तिजातं स वादयामास तत्र तस्य ( कवेः ) तद्विषयिका सा विदग्धता स्फुटं प्रकटं भवति या राजनीतिप्रकाण्डपण्डितानामपि चेतांसि विस्मापयति नूनम्—

"द्विषन्मुदयं सुमेधसा गुरुरस्वन्ततरः सुमर्षणः ।
न महानपि भूतिमिच्छता फलसम्पत्प्रवणः परिक्षयः ॥
अचिरेण परस्य भूयसीं विपरीतां विगणय्य चात्मनः ।
क्षययुक्तिमुपेक्षते कृती कुरुते तत्प्रतिकारमन्यथा ॥

प्रभव खलु कोपदण्डयोः कृतपञ्चाङ्गविनिर्णयो नयः ।
स विधेयपदेषु दक्षतां नियतिं लोक इवानुरुध्यते ॥"

इत्याद्यनेकश्लोकानुपस्थाप्य राजनीत्युपदेशप्रदानं, स स्वपाठकेषु राजनीत्य भिज्ञतामपि सञ्चारयितुमना अस्ति येन ते छलप्रपञ्चकुटिलताकुलेऽस्मिन् संसारे स्वकीयं जीवनं नेतुं पारयेयुः तत्तुभ्यो रक्षाञ्च स्वीयां कर्तुमर्हन्तु ।

कस्मिन् अवसरे कीदृशानि वचनानि प्रयोज्यानीत्यत्र पूर्णतया विचार्य वाक्यावलिं कविर्निदधाति । स उत्तेजनाकारिणां वचनानां प्रयोगे यथा नदीणः स्तथैव स सान्त्वनाकारिणामपि वचसां निबन्धने निपुणः ।

अपवर्जितविप्लवे शुचौ हृदयग्राहिणि मङ्गलास्पदे ।
विमला तव विस्तरे गिरां मतिरादर्श इवाभिदृश्यते ॥

इत्यादिश्लोकावलौ तस्यैव गुणविशेषोऽपि प्रगुणीभवन् समक्षे स्थितः सञ्जायते ।

भारविकवेर्वाण्यां भूयांसो गुणा विराजन्ते । तत्र श्रुतिसुखदता शोभते तत्र तद्वैशिष्ट्यं विलसति येन द्विषामपि मानसानि प्रसीदन्ति, तत्रत्येषु वर्णेषु मनोज्ञाच्छटाच्छुरिता भवन्ती सर्वतश्चकास्ति । तत्रत्यानि पदानि गम्भीराणि परं न तानि प्रसन्नतां विजहति वस्तुतः एवंविधा वन्दनीयां गिरां कृतपुण्यकर्माण एव विन्दन्ति ।

अथ कविर्यदपि वर्णयति तत्सजीवं विधाय साकारं कृत्वा पुरः पाठकाना मुपस्थापयितुमद्भुतामेव कोविदतामधिकरोति ।

शारद्रियं ईक्ष्यन्ताम्—

कृतोर्मिरेखं शिथिलत्वमायता
शनैः शनैः शान्तरयेण वारिणा ।
निरीक्ष्य रेमे स समुद्रयोषितां
तरङ्गितक्षौमविपाण्डु सैकतम् ॥

ततः स कूजत्कलहंसमेखलां
सपाकसस्याहितपाण्डुतागुणाम् ।
उपाससादोपजनं जनप्रियः
प्रियामिवासादितयौवनां भुवम् ॥

अस्य कवेः काव्येऽलङ्काराणामपि सन्निवेशो दर्शनीयः । तेषां सन्निवेशनं कार्ये यत्र यत्र कृतं तत्र तत्र ते द्विगुणामाभां परिगृह्य प्रतितिष्ठन्तो दृश्यन्ते ।

"जनैरग्राममनिन्द्यकर्मभिः . . . मनुपथामामनिविशतेऽस्य" इत्यत्रोपमा । "विपाण्डुभिर्ग्लानतया पयोधरैः . . .

न दिग्वधूनां कृशता न राजते ॥" इत्यत्र रूपकम्,

"नवविनिद्रजपाकुसुमत्विषां द्युतिमतां निकरेण महाश्मनाम् ।
विहितसान्ध्यमयूखमिव क्वचित् निचितकाञ्चनभित्तिषु सानुषु" ॥

इत्यत्रोत्प्रेक्षा, "मनाक्कनति नितम्बरुचिरं
चिरं सुनिनदैर्नदैर्वृतममुम् ।
मता फणवतोऽवतो रसपरा
परास्तवसुधा सुधाधिवसति ॥"

इत्यत्र समासोक्तिर्यमकञ्च, स्वर्गीयस्पर्शेनपूर्वकमलङ्कारद्वयस्य च स्वरूपमतितरां मधुरमुन्मीलयितुं समुद्यतन्ते ।

ततः कार्यं स्वयुगस्य भावनानामादर्शो भवति । एतस्मादेव कारणात् कालेऽस्मिन् चित्रकाव्यस्यापि समृद्धा प्रवृत्तिः । कविः स्वयुगस्य काव्यरसिकानां चित्रकाव्यचारुतासुधापिपासाकुलां चेतोवृत्तिं तर्पयितुं यानेकान् श्लोकान् अरचयत् तेषु एक एवात्रोद्ध्रियते—

"न नोननुन्नो नुन्नोनो नाना नानानना ननु ।
नुन्नोऽनुन्नो ननुन्नेनो नानेना नुन्ननुन्ननुत् ॥"

इत्थमेकेनैवाक्षरेण नकारेण "अयन्तु नैनाहगतो न पलायितव्यम्" इत्येतं भावं प्रकटीकृतवान् कविः । अहो, एतादृश्या रचनया भावोद्भावनं कियत् कठिनम् । शब्दक्रीडेयमित्यभिप्राय न कदाप्येवंविधां रचनां उपेक्षां वा निन्दां नेतुं शक्नुमः । येषां कवीनां वैदुषी प्रतिभा चित्रकाव्यप्रणयनचातुरी च भवति त एव स्वरचनायामेतादृशीं कलां दर्शयितुं क्षमन्ते । एषापि कला स्वकीयं सौन्दर्यं निदर्शयति ।

भारवेः प्रकृतिवर्णनमुद्दीपनात्मकमालम्बनात्मकञ्चेक्ष्यते । सूर्यास्तवर्णने, रात्रि प्रभातादिशोभानिरूपणे उद्दीपनात्मकता, किञ्च चतुर्थे तथा पञ्चमे च सर्गे आलम्बनात्मकता तदीया दृग्गोचरीभवति । प्रकृतिवर्णनेऽलङ्काराणां प्रयोगस्त्वस्यैव परम् अप्रस्तुतविधानस्य सहचारि विभाति—

"उत्फुल्लस्थलनलिनीवनादमुष्मा-
दुद्धूतः सरसिजसम्भवः परागः ।
वात्याभिर्वियति विवर्तितः समन्ता-
दाधत्ते कनकमयातपत्रलक्ष्मीम् ॥

इत्यत्र भारवेरप्रस्तुतविधानमेकान्ततो मौलिकतां गतमास्ते । इयं कल्पना कवे स्वीया । अतएव तु कविरयम् 'आतपत्रभारवि' इत्येतया प्रशस्त्या प्रथितो विपश्चितां समाजे । अन्यथा निदर्शनापि अपूर्वैव ।

कविर्भारविश्छन्दःशास्त्रेऽपि सुधीः । तदीये काव्येऽत एव समा प्रभा प्रमिताक्षरा रथोद्धता-कान्तोत्पीडा-जलोद्धतगति-शालिनी वंशपत्रपतितप्रभृतिविविधानि छन्दांसि दृष्टानि भवन्ति ।

काव्येऽस्मिन् न क्वापि समुदाचारस्य विनयस्य चातिक्रमणम् । भीमो महान् उद्धतो भटः क्रोधी च । परं तदीया अपि उक्तयो न क्वचिदपि मर्यादोल्लङ्घनकारिण्य प्राप्यन्ते ओजस्विनी भवन्त्यपि वाणी तदीया न परुषा । कवेः पात्राणि स्वविरोधिनां वाचः शान्तस्वान्ततया शृण्वन्ति । तानि स्वपक्षस्य मण्डनं युक्तियुक्तेन तर्केण विदधानानि लक्ष्यन्ते । न तेषूद्वेगः कदापि विलोक्यते । न दैन्यं क्वापि तत्र मनागपि वर्तते । द्रौपदी भारताधीश्वरी अस्ति, अतो यादृशा हृदयभावा यादृशाश्च व्यवहारा उपयुज्यन्ते तादृशा एव कविना तस्यां दर्शिता । सा सम्पत्काले कुसुमपरिपेलवा परं विपद्वेलायां कठोराणि कष्टान्यपि सहमानावाप्यते । तस्यां समुत्तेजनापूर्णभावानां भव्या भा भासते, तत्र सा वाणी तरलितास्ति या विपक्षविध्वंसाय मन्युमपि समुत्पादयितुं क्षमा । न सा परं परोक्षरयाममूयावती किन्तु तस्यामात्मीयजनाभ्युदयाभिलाषानलः प्रचण्डतया विजृम्भते । सा युधिष्ठिरं यदुवाच तत्र सा शालीनता समुन्मीलति यास्ति भारतीयाङ्गनानां भूषणम् । इयं द्रौपद्या एव वाणी याराजितिरस्कारजनितपाण्डवानामनुतापाशुशुक्षणिं दुधुक्षे राजानं तद्वन्धूंश्च सपत्नानुच्छेत्तुं प्राहरत्, कृष्णद्वैपायनस्य च सहकारित्वमदीदपत् किञ्च धनञ्जयं दिव्यास्त्राधिगमनायानुदत् ।

कालिदासादिकवितया सह कवितामेतदीयां तुलयतोऽयं यदिदं दुष्करमेव तत्—

कालिदासस्य कविता शारदी चन्द्रिकेव कुसुमसम्भारसम्भृता नवीना वल्लरीव निसर्गरमणीयालङ्कारान् आदधाना रूपसम्पदा सम्पादिताभिधाना तरुणीव स्वसौन्दर्येणैव स्वयमुन्मनस्का विद्वज्जनान् समापतितैव मनोहारिणी च । भवभूतिकविता तु

वर्षीयसीव महिषी, अभयप्रदायिनी कात्यायनीव स्नेहसुधाप्रस्रवणभूता कल्याणमयी जननीव शान्तिसम्पर्कमधुरा स्निग्धा च । भारविकविता तु सुगम्भीरमागमेतिह निराभरणा धूसरकान्तिः । अक्षसूत्रमात्रसम्भृतकरा सन्यासिनीव, तपस्विनी निर्ग्रन्थिनीव गाम्भीर्यवती ।

कविकुलशिरोमणेः कस्य अस्य कवितायाः प्रशंसया केनापि सत्यमुक्तम्—

प्रकाशं सर्वतो दिव्यं विदधाना सतां मुदः ।
प्रबोधनपरा हृद्या भा रवेरिव भारवेः ॥



## महाकविर्माघः

महाकवे कालिदासस्य भावतरलता भारव कलाकुशलता, भट्टिश्चे वैयाकरणता इत्येतास्तिस्रोऽपि विशिष्टता श्रेष्ठा कविकुलतिलकस्य माघस्य कवितायां समवेता भवन्त्यो भासन्त इति सर्वेषा रसिकशिरोमणीना विदितमेव सम्यक। तत्रत्य कलापक्षो भारव कवितायां विद्योतमान कलापक्ष यथा निशम्यमान परिलक्ष्यते तथैव तत्रस्य वैयाकरणत्व भट्टिकाव्य विभ्राजमान व्याकरण विषयक वैदुष्य न्यक्कुर्वाणमिव समवलोक्यते। कलाकौशलकुशलतायां यद्यपि माघोऽद्भुतमनन्यश्रित बुधत्व बिभर्ति पर सत्यपि तथात्वे, न तत्र सा भावतरलता विलोक्यते या कालिदास परिस्फुरति। निश्चप्रचभावेन सत्यमिद, यन्माघस्य भावपक्षो भारवेर्भट्टेश्च भावपक्षाद् गरीयान् पर तदीयोऽसौ भावपक्ष कालिदासस्य भावपक्षेण परिभूयते। उत्तरकालवर्तिषु कविषु च प्राधान्येन कलामेव अवरोपयत्सु सत्सु भारविर्माघ श्रीहर्षश्च तस्मादेतानेव कवीन्द्रान् दृष्ट्वा समक्षे सन्निधाय माघस्य स्थानमिह निर्णेतु यत्न कृत स्यात्। कालिदासो न कलापक्षपातिनां कवीना समुदाये परिगण्यते, भट्टिरपि स्वतन्त्रमेव मार्गमवलम्बते। तस्मान्माघ तुलायां नेमावुभावप्यपेक्षितौ।

भारवि स्वकीय किरातार्जुनीय काव्ये कलाया यदुज्ज्वल रूप दर्शयामास माघ स्वकीये शिशुपालवधे काव्ये तस्या रूप ततोऽप्युज्ज्वलतर प्रकाशयामास। यद्यपि श्रीहर्षे कलाकलननैपुणी चरमोत्कर्षनिवासिनी दृश्यते तत्र भाव विभावन चातुरी च विपश्चिन्मनस्तोषिणी परिलक्ष्यते पर माघ एतयोरुभयोरपि क्षेत्रयो क्वचित् क्वचित् श्रीहर्षमपि अतिक्रममाण पर्यवलोक्यते। एतावदस्य यत् स स्वकीय माघ नाम काव्य तादृशीभि क्लिष्टाभिर्ग्रन्थिभिराकीर्यमाण न कर्तुमियेष यादृशीभिर्जटिलताभिर्विकटाभिरुद्विध्यमान स्वीय काव्य श्रीहर्षश्चकार। प्रकृष्टतमकाव्यस्रष्टृगुणशालिरचित काव्यमिद श्रीहर्षकृत ततस्ततो जटिलमपि सत् नैषधीयचरित न जातुमर्हत्यत एव महाकविर्माघ 'काव्येषु माघ' इत्येतद् यश श्रियोऽधिगमनसौभाग्यमुपभुञ्जान कवीना जगति विराजते।

महाकविर्माघ स्वपूर्ववर्तिनां कवीनां प्रभावेण परिगृह्यमाणो दृश्यते तद्वत्

नाया। क्वापि कालिदासादृहीतसरणिभिन्नत्वात्, क्वापि भट्टिकविस्वीकृतव्याकरण-पाटवप्रदर्शनपद्धतिनिष्ठत्वात् किञ्च सर्वत्रैव प्रायेण भारविगृहीतवर्णनविधि-विलम्बितत्वात्।

माघं कालिदासस्य मनःप्रमोदनपटीयसी पद्धति प्रीणाति स्म नु परं स स्वपाण्डित्यप्रकाशनव्यामोहं न संवरीतुं शशाक अतएव तदीयकाव्यस्य एकादशे त्रयोदशे च सर्गे तदनुसृतकालिदासवर्णनविधा अलङ्कारभरनिर्मुक्ता अतिविस्तररहिता च न दृष्टा भवति। कालिदासस्य वर्णनं मितं सदपि मार्मिकं भवति माघस्य वर्णनं विस्तृतं परं न मार्मिकम्। तद्विस्तीर्णतायामपि तत्सौन्दर्यं न स्प्रष्टुं शक्नोति येन मानसं स्वशिरो धुन्वत् स्मेराननं सञ्जायते।

द्वाभ्यामप्येताभ्यां वर्णितायां प्रभातशोभाया विद्योतमानं वैशिष्ट्यमीक्ष्यताम्—

निद्रावशेन भवताप्यनवेक्ष्यमाणा
पर्युत्सुकत्वमबला निशि खण्डितेव।
लक्ष्मीर्विनोदयति येन दिगन्तलम्बी
सोऽपि त्वदाननरुचिं विजहाति चन्द्रः॥ (कालिदास)

उदयमुदितदीप्तिर्याति यः सङ्गतौ मे
पतति न वरमिन्दुः सोऽपरामेष गत्वा।
स्मितरुचिरिव सद्यः साभ्यसूयं प्रभेति
स्फुरति विशदमेषा पूर्वकाष्ठाङ्गनायाः॥ (माघ)

पुरसुन्दरीवर्णनमुभाभ्यामेव विहितं परं तत्रापि भेदोऽवाप्यते। कालिदासकृतं तद् वर्णनं चेत् व्यञ्जनाप्रधानमस्ति, तदा माघस्य तद् विलासिताऽस्मिन्नति-तरामालोक्यते—

जालान्तरप्रेषितदृष्टिरन्या
प्रस्थानभिन्नां न बबन्ध नीवीम्।
नाभिप्रविष्टाभरणप्रभेण
हस्तेन तस्थाववलम्ब्य वासः॥ (कालिदास)

वलयार्पितासितमहोपलप्रभा-
बहुलीकृतप्रतनुरोमराजिना।
हरिवीक्षणाक्षणिकचक्षुषान्यया
करपल्लवेन गलदम्बरं दधे॥ (माघ)

श्रीहर्षकविप्रयुक्तेषु पदेषु यादृशं लालित्यमुत्तालं भवति तादृशमेव माघेऽपि बहुत्र सुजदवलोक्यते—

राजीवराजीवशलोलभृङ्गं मुष्णन्तमुष्णं ततिभिस्तरूणाम् ।
कान्ताऽलकान्ता ललना सुराणां रक्षोभिरक्षोभितमुद्वहन्तम् ॥ ( माघ )

सितांशुवर्णैर्वयति स्म तद्गुणैर्महासिवेम्नः सहकृत्वरी बहुम् ।
दिगङ्गनाङ्गाभरणं रणाङ्गणे यशःपटं तद्भटचातुरी तुरी ॥—श्रीहर्ष

माघः कविः कविरेव न बभूव स प्रकाण्डपाण्डित्यपेशलोऽखिलशास्त्रपारदृश्वा मेधावान् विद्वान् अपि आसीत्। यथा श्रीहर्षोऽगाधवैदुष्यविलासः तथैवास्मिन् कवावपि विपुलविद्योद्भवान् उत्तरङ्गितः सन् जगर्ज। नूनमेतदीया विद्वत्ता भारवेः श्रीहर्षस्य च विद्वत्तातोऽप्यधिकतरासीत्। तत्र शास्त्राणामनेकेषां ज्ञानमतितरां सुदृढं समासीत् गुरुतरञ्च व्यराजत इत्येतत् तत्काव्यानुशीलनेन स्पष्टमेव सुविदितं सञ्जायते। पदे पदे ह्येतदीयं काव्यमेतस्य महाकवेः गम्भीरतरं वैचक्षण्यं प्रस्फुटीकुर्वत् प्रतिभातं भवति। टीकाकारेषु श्रीपण्डितमल्लिनाथोऽग्रेसरः। स नानाशास्त्रमर्मवित् विद्वन्मूर्धन्यः सुप्रथितः। तस्य कविमिममुद्दिश्य—

ये शब्दार्थपरीक्षणप्रणयिनो ये वा गुणालङ्क्रिया-
शिक्षाकौतुकिनो विहर्तुमनसो ये च ध्वनेरध्वगाः ।
क्षुभ्यद्भावतरङ्गिते रससुधापूरे निमङ्क्षन्ति ये
तेषामेव कृते करोति विवृतिं माघस्य सर्वङ्कषाम् ॥
.. .. ... ...

धन्यो माघकविर्वयन्तु कृतिनस्तत्सूक्तिसंसेवनात् ॥

इत्येतदुदीरणं विद्वल्ललामस्यास्य कवेर्महनीयं परमप्रकृष्टं कवित्वं साहित्यशास्त्रपारावारीणत्वं च विशिष्टमुद्योतयति।

महाकविर्माघो यद्यपि उत्कृष्टप्रतिभाशाली कविरासीत्। तदीये काव्ये च अद्भुतः प्रौढिमा श्लाघनीयो दृढबन्धः प्रकृष्टश्च प्रागल्भ्यं प्रतिपदं समुच्छलन्ति परं प्रबन्धकाव्यं यादृशमितिवृत्तनिर्वहणमपेक्षते तादृशं तत् तत्र न वीक्ष्यते। कविः कदाचित् तत्पर्याप्तामेव चकार। स तु तस्यां दिशायां तावदपि ध्यानं दर्शयन् न दृश्यते [illegible] प्राप्यते। न तस्य काव्यं सन्तुलितं कथानकेषु न च प्रासङ्गिकवर्णनान्यत्र सन्तुलितसौष्ठववन्ति दृष्टानि भवन्ति। प्रबन्धकाव्ये तेषां सन्तुलनमतितरामपेक्ष्यते। काव्ये शेषं कथावस्तु न तस्य वर्णनेन तु विस्तारमाकाङ्क्षति यो विस्तारस्तद्वर्णनविषयक-

स्तत्र चतुर्थात् सर्गात् त्रयोदशसर्गपर्यन्तं कविना व्यक्तानि। काव्याभिमता मूलकथा प्रथमे द्वितीये किञ्च चतुर्दशात् सर्गात् विंशं सर्गं यावत् समवाप्यते। कतिपयेष्वपि गीतकल्पेषु सर्गेषु प्रसङ्गप्राप्तेषु गौणेषु वर्णनेषु ध्यानविशेष निबद्धा संलक्ष्यते। प्रबन्धकाव्ये तत्रापि वीररसप्रधाने इतिवृत्ते एवंविधमकाण्डलुठनमपि च शृङ्गारलीलानां तावान् विस्तृतालापो नानुचित प्रतिभाति। काव्यस्यास्य शृङ्गारः प्रबन्धकाव्यानुरूपो न, अपि तु स मुक्तककाव्यकृतेऽतिशयनयोचितः प्रतीयते। मारवैरिनिवृत्ते तु अप्सरसां वनविहरणं युक्तं तासां शृङ्गारिकाश्च भावाश्च सङ्गताः प्रतिलक्ष्यन्ते परं राजसूयं यज्ञं सम्पादयितुं प्रस्थितानां यदूनां रैवतकगिरौ केवलैकदिवसाभिव्यापिनो निवेशस्यावसरे तासां विलासमयीनां चेष्टानां तद्विधेन विस्तरेण सन्निवेशनं नाधिकं समीचीनमिव लक्ष्यते। शृङ्गाररसस्य प्राचुर्यात् वीररसप्रधानमपि काव्यमिदं शृङ्गाररसप्रधानमिव प्रतीयते। शृङ्गाररसेन वीररस इह अभिभूयमान उपमर्द्यमानश्च प्रेक्ष्यते। कवौ यद्यपि सा प्रतिभा परिस्फुरति या सफलतापूर्वकं वीररसमयीं शृङ्गाररसमयीञ्च कवितां स्रष्टुमीष्टे परं हन्त, न कविः स्वां स्पृहणीयां प्रतिभां तदर्थं प्रायुङ्क्त। कवेः प्रभूतवेगवती मनोभावनातरङ्गिणी कामरस्यामेवाशां तां निनाय। यद्यपि कविर्न चरितकाव्यं स्रष्टुमस्मानं नियुङ्क्ते स्म परं स कदाचित् तद्भावनानेहसि विस्मारैवेदं तथ्यम्। तस्मादष्टादशः सर्गः प्रायेण तादृशमेवायोधनीयं वातावरणं स्पृशति यादृशं चरितकाव्यपरम्परायामवाप्यते। तत्रत्यौ श्लोकौ द्वौ ईक्ष्येताम्—

"आयन्तीनामविरतरयं राजकानीकिनीना-
मित्थं सैन्यैः सममलघुभिः श्रीपतेरूर्मिमद्भिः।
आसीदोघैर्मुहुरिव महद्वारिधेरापगानां
दोलायुद्धं कृतगुरुतरध्वानमौद्धत्यभाजाम्" ॥

"ओजोभाजां यदुपरि परिस्पन्दमानामदन्तीः सार्धमङ्गेन नूनम्।
ज्वालाव्याजादुद्वमन्ती तदन्तस्तेजस्सारं दीप्तजिह्वा चचार" ॥

कवेः काव्यस्यास्मिन् सर्गे वर्णिते रणाजिरे भूमौ पर्यस्तानि पूर्णेन्दुप्रभाणि छत्राणि क्वचित्, जनं मृद्नन् मत्तो द्विपेन्द्रः क्वचित्, तूर्यारावाः क्वचित्, सङ्ग्रामघातैर्दारितं दन्तिकुम्भस्थलं क्वचित्, शिरश्छेदी सैन्यवीथीर्विच्छिन्दन् आक्रान्तकोऽपि दूरं भ्रमन् वीरः क्वचित्, शस्त्राघातघातेन चन्द्रहासेन विदारितो भट-

कवचं क्वचित्, क्वचिद् वाजिनां हेषा, दुन्दुभिनादप्रणादो दृश्यन्ते श्रूयन्ते च निरन्तरम् ।

प्रथमे सर्गे च केचन श्लोका वीररसात्मका शोभन्ते । सन्ति ते वीररसस्य मनोहराणि चित्राणीव । पदविन्यासस्य धीरा गभीरा च गतिर्नराणामेव हृदयाकर्षिणी प्रसादगुणं बिभ्रन्ती वीररसात्मकस्य तस्य वर्णनस्य सौन्दर्यमेधयन्ती वीक्ष्यते । बोध्यताम्—

'बृहच्छिलानिष्ठुरकण्ठघट्टनाद्विकीर्णलोलाग्निकणं सुरद्विषः ।
जगत्प्रभोरप्रसहिष्णु वैष्णवं न चक्रमस्याक्रमताधिकन्धरम् ' ॥

धीरधुरन्धराणां धैर्यस्य विध्वंसि, उद्भटानामपि भटानां निर्भयेषु मानसेषु च कम्पनोत्पादनकारि लङ्केशस्य शौर्यं कियता ओजस्विना प्रकारेण वर्णयतः कवेः पुनः प्रेक्ष्यतां युगम्—

'विभिन्नशङ्खः कलुषीभवन्मुहुर्मदेन दन्तीव मनुष्यधर्मणः ।
निरस्तगाम्भीर्यमपास्तपुष्पकं प्रकम्पयामास न मानसं न सः " ॥
"रणेषु तस्य प्रहिताः प्रचेतसा सरोषहुङ्कारपराङ्मुखीकृताः ।
प्रहर्तुरेवोरगराजरज्जवो जवेन कण्ठं सभयाः प्रपेदिरे" ॥

काव्यमिदं वस्तुतः कविप्रतिज्ञवीररसात्मिकायाः रचनायाः रचनार्थं प्रभूतं स्वल्पमपि प्रायच्छत्, परं कविः स्वमानसस्य शृङ्गारप्रियत्वात् प्राप्तमपि तमवसरमनुकूलं स्वकीयाद्धृदयादस्रंसयत् । सोऽपि भारविरिव श्रीहर्ष इव च कामवासनोद्दीपनपरं विलासिताप्रियवृत्तिसंवर्धनरतं शृङ्गारं परमोद्धतेन प्रवाहेण सर्वङ्कषेण वेगेन समुल्लासयन् नितरां पर्यवेक्ष्यते । भारवेः शृङ्गार इव अस्यापि शृङ्गारो नानौचित्यकारी वर्तते । न हर्षभारव्योः शृङ्गार इव एतदीयोऽपि शृङ्गारोऽन्तःकरणस्यान्तराले प्रविश्य सहृदयं रञ्जयति भृशम् । यथा कालिदासस्य शृङ्गारो मनः परिप्रीणयन् जीवनसहचरो जायते न तथा अस्य शृङ्गारोऽस्मदीयो जीवनसुहृद् भवति । अस्य शृङ्गारोऽपि हर्षभारव्योः विशृङ्गार इव क्षणं मानसं समुद्दीप्य विरमति । न तस्य प्रभावः कालिदासस्य शृङ्गार इव स्वान्ते शाश्वतिको भूत्वा भवति स्थिरः । परं कलायाः महत्त्वं पुरो निधाय चेद् विचारो विधीयते तदा तु अयं कविर्भारविमपि श्रीहर्षमपि क्वचित् क्वचित् अतितरां लङ्घयन् दृष्टिगोचरीभवति । वस्तुतः इमे त्रयोऽपि कवयः कलायाः प्रकर्षं दर्शयितुं तद्विषयिण्याः सुन्दरतायाश्चरमां सीमां समुपस्थापयितुमेव स्वस्वकाव्यमसृजन् । तस्मात्

कालिदासेन सह एषां तुलायामारोपणमुचितं न भवति। कलाया अपि निजं सौन्दर्यमस्ति, तस्या अपि स्वकीयं महत्त्वं विद्यते तस्या, अपि स्वीयं मूल्यं वर्तते। तस्मात्तत् सौन्दर्यं तस्मात्तन्महत्त्वं तस्मात्तन्महार्घं वैलक्षण्यं येषां कवीनां काव्येषु नितरां समुल्लसद् वीक्षितं जायते ते सन्ति माघश्रीहर्षभारवयः। एतेषां त्रयाणामपि माघ एव श्रेष्ठः। यतो हि तत्कृतौ कलायाः कोविदतायाश्च द्वयोरपि सार्वभौमं सौन्दर्यं परिवीक्ष्यते सार्वदेशिकञ्च रमणीयं समवलोक्यते। अस्य कवेः कविवरस्य चतुरस्रतया परिपूर्णत्वाच्च विद्वांस एतदीयं ग्रन्थं शिशुपालवधं काव्यनायकत्वेनोररीकुर्वन्ति।

माघकवेः काव्ये ऋतुवर्णनस्य वनविहारस्य जलक्रीडायाः सन्ध्यायाः प्रभातवेलाया विलासिनीनां शृङ्गारचेष्टायाश्च यानि चारुतराणि चित्राणि चकासति तानि निष्प्रपञ्चभावेन साहित्यसंसारस्य श्रेष्ठनिधित्वेन सहृदयसुधियो मन्यन्ते। कविरयं वर्णयितुमुपक्रमते तत्र न केवलं वर्णनीयः पदार्थ एव स्वसौभाग्यानुपमतया रसिकानां चेतांसि चोरयति अपि तु अन्यानि बहूनि सौन्दर्याणि स्वकीयान् भवद्गतान् विशेषान् उपायनीकृत्य भावुकान् नितरां रमयन्ति। पश्यन्तु प्रथमं प्रेक्षावन्त ऋतुषु कुसुमाकरस्य लक्ष्मीं ललामाम्—

'मधुरया मधुबोधितमाधवी-मधुसमृद्धिसमेधितमेधया।
मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे॥
विलुलितालकसंहतिरामृशन्मृगदृशां श्रमवारि ललाटजम्।
तनुतरङ्गततिं सरसां दलत् कुवलयं वलयन्मरुदाववौ॥'

इत्येताभिः पेशलपदपङ्क्तिभिर्वसन्तस्य कविः यच्चित्रं चित्रयितुं प्रयतते तत्र न केवलं वसन्तस्यैव दर्शनं भवति, लुलितालकानां ललनाललामानामपि परमानन्दकरं दर्शनमपि समवाप्नुते, एतावदेव न मधुरमधुरतरपदविन्यासस्य विभाषा अनुप्रासयमकयोः कमनीयतायाश्छटाया वैदर्भ्याश्च विलासश्रियोऽप्यन्यमेव मनोमोदविधायकं दर्शनं समुपलभ्यते।

वनविहारं वीक्ष्य सम्प्रति मोदन्ताम्—

'अनुवनमसितभ्रुवः सखीभिः सह पदवीमपरः पुरोगतायाः।
उरसि सरसराग-पादलेखा-प्रतिकृतयानुययावसंशयानः॥'

एतद् वनविहारस्य चित्रमसितभ्रुवमनुगच्छन्तं कामिनन्तु दर्शयत्येव परं तत्र संदष्टकनखानिगतो वस्तुध्वनिरपि स्वीयं प्रसारं सर्वतः प्रसारयन् प्राप्यते।

तद्देनोर्यत् सौन्दर्यं रसिकाना पुर उपतिष्ठते तदपि प्राज्यतया प्रमोदयति प्रर्धासमाजम् ।

इमा प्रेक्षन्ता सलिले क्रीडन्तीं युवतीम् । इय स्वसौन्दर्येण देवानामपि स्वान्ति विस्मापयति । एतदीयौ सुकोमलौ करौ कमलविभूषितौ स्त । इय सलिलात् उत्तरन्ती समुद्रात्मथ्यमानात् प्रादुर्भवन्ती लक्ष्मी इव अहो प्रतीयते इत्येवविध बन्धुर दृश्य येषु मनोज्ञेषु पदेषु कवि अलङ्कारध्वनिसुषमामनुपन्यास पूर्वक दर्शयति तान्यपि प्रेक्षन्ताम्—

'दिव्यानामपि कृतविस्मया पुरस्ता
दम्भस्त स्फुरदरविन्दचारुहस्ताम् ।
उद्वीक्ष्य श्रियमिव काञ्चिदुत्तरन्ती
मस्मार्षीज्जलनिधिमन्थनस्य शौरि ॥'

अहह, अत्यासक्ता अपि कामिनो धनानुरागिणीभिर्वारयुवतीभिरभ्यर्थ्यन्ते । अवधूताश्च ते हन्त, कथञ्चन मुञ्चन्ति ता इत्येतद् बोधयितु कविना कीदृशी सुमृद्वी शब्दसरणिरनुसृता सा ध्यानपूर्वक विलोकनीया—

"आर्द्रत्वादतिशयिनीमुपेयिवद्भि ससक्ति भृशमपि भूरिशोऽवगाहैः ।
अङ्गेभ्य कथमपि वामलोचनानां विश्लेषो वत नवरक्तकैः प्रपेदे" ॥

कवय स्व भावमाविर्भावयितु न शब्द न च अर्थमेव अपि तु द्वावव अवलम्बन्ते । द्वयोरपि समाश्रयणमात्रेण न ते तोष मवन्ध्न्त प्राप्यन्ते ते तु तावदवलम्बमाना सहृदयहृदयसहितमात्मान नन्दयितु ध्वननव्यापारमपि सश्रयन्ति । अस्मादेव कारणात् इहोपयुक्त भावमभिव्यङ्क्तु माघ कवि शब्दशक्तिमूलध्वनिमुद्भावयन् पर्यवलोक्यते ।

सूर्यास्तवेलामनोहरताधुना निभालनीया—

"प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्तुरभून्न पति यत करसहस्रमपि" ॥

जीवने न केवल सुखसम्पद एव तत्र दु खविपदोऽपि वर्तन्ते । आयान्ति तत्र विविधानि विचित्रतराणि परिवर्तनानि हाहाकारमयानि उत्कटोल्लासमयानि च । सत्पारोऽय सुखे भवति सुहृत् न च दु ख—इत्येतदुपदिशन् कृपालु कवि अस्ताचल गतस्य सूर्यस्य स्मरणीय दृश्यमर्थान्तरन्यासालङ्कारालङ्कृत विधाय प्रस्तौति ।

वर्णनं तु सर्वे एव कुर्वन्ति । मूर्खा अपि कुर्वन्ति पण्डिता अपि, वैज्ञानिका अपि इतिहासकारा अपि राजनीतिज्ञा अपि अर्थशास्त्रिणोऽपि नीतिशास्त्रिणश्च अन्येऽपि सर्वे । परं कवीनां वर्णनपद्धतिः सर्वेभ्योऽपि विलक्षणा भवति । कविभणितिः न श्रवणयोरेव अपि तु मनसः आत्मनश्च उपरि स्वकीयं प्रभावं समुपस्थापयति । अन्येषां कथनं न चिरस्थायि भवति कवेः कथनं तु मानव आजीवनं न विस्मरति । तत् शाश्वतिकं भूत्वा मानवस्य अन्तःकरणे स्वकीयं किञ्चिद् कृत्वा तत्र स्वकीयं जननान्तरस्थाय्यैश्वर्यं प्रतिष्ठापयति । इदमस्ति कविकविताया अनन्यगं वैशिष्ट्यम् । स कदापि स्वं वक्तव्यं समासोक्त्या, कदापि अप्रस्तुतप्रशंसया, कदापि पर्यायोक्तेन, कदापि परिसंख्यया, कदापि श्लेषेण, कदापि विरोधाभासेन, कदापि उत्प्रेक्षया, कदापि च अलङ्कारान्तरेण प्रकटीकरोति, कदापि स सहस्राणामपि ध्वनिभेदानां मध्यऽन्यतमेन ध्वनिभेदेन व्यक्तीकरोति, स्वां विवक्षां कदापि च शब्दार्थमाधुर्येणैव । माघोऽपि कविः स्वकीयेऽस्मिन् महाकाव्ये सर्वान् अपि ललिततमान् मार्गान् स्वीकुर्वाणः सर्वत्र बोधयते । तदीयं प्रतिवचनं सौन्दर्येणानुप्राणितं भवति ।

अस्य कवेर्लेखन्या अद्भुतः प्रभावोऽयं यत् निराकारमपि भावं साकारं कृत्वा श्रोतुः पाठकस्य च पुरः सा सफलतापूर्वकं निधातुं क्षमते । सा निर्जीवमपि सजीवं विदधाति, दुःखिनमपि सुखिनं, नीरागमपि सरागं कुरुते । को हि जन-एतादृक् यः —

"पानधौतनवयावकरागं सुभ्रुवो निभृतचुम्बनदक्षाः ।
प्रेयसामधररागरसेन स्वं किलाधरमुपालि ररञ्जुः" ॥
"अंशुकं हृतवता तनुबाहुस्वस्तिकापिहितमुग्धकुचाग्रा ।
भिन्नशङ्खवलयं परिणेत्रा पर्यरम्भि रभसादचिरोढा" ॥

इत्येतद्विधानि सरससरसानि पद्यानि निशम्य तां दशां न गच्छेत् यां हि दशां कविरस्मानेतादृशैः श्लोकैः प्रापयितुमभिलषते ।

अस्य कवेः प्रकृतिवर्णनं कल्पनाभिराकीर्णं यमकैः परिपूरितं च सत् यथा मनो रमयति सर्वेषामतितरां तथैव तदीयम् अप्रस्तुतविधानेन आवृतं सदपि नितरां मनः प्रीणयति प्रभातादिवर्णनम् । क्वचित् तु कवेः प्रकृतिर्यमकैरलङ्कृता, क्वचित् शृङ्गारिणा अप्रस्तुतेन विधानेन क्वचिच्च सा अन्यविधेन अप्रस्तुतविधानेन विभूषिता दृश्यते । कविः सर्वत्र मानवोचिताः शृङ्गारसमुद्दीपितचेष्टाः प्रकृत्या-

मारोपयन् प्राप्यते। अप्रस्तुतविधानेषु च स्वकीय शृङ्गारप्रिय पाण्डित्य च विनिगमयन् स सलक्ष्यते। सर्वत्रैव तदीयमप्रस्तुतविधान हि तस्य विलासिनानुरागिणीं प्रकृतिं सूचयति। एतदर्थं षष्ठ सप्तमनवमैकादशसर्गास्तु देदीप्यमानानि प्रमाणानि सन्ति।

माघ स्वभावोक्तेश्च कुशलश्चित्रकारो वर्तते। स्वभावोक्तिमाचार्या अलङ्कारेषु गणयन्ति पर राजानककुन्तकस्तु तस्या अलङ्कार्यत्वमेव मन्यते। स्वभावोक्ते रुत्कृष्टतमा सफलता तदा मता भवति यदा वर्ण्यस्य विषयस्य चित्र पाठकस्य मानसपटले यथायथतया अवतरितुमर्हति। अस्य क्व स्वभावोक्तिषु राजते द्वयमेव विशिष्टता, नैतादृशी विशिष्टता अन्येषु कलावादिषु कविषु दृश्यते। स्वभावोक्त्या द्वावेव कवी विश्रुतौ। प्रथम कालिदासस्ततश्च द्वितीयोऽय माघ। पञ्चमे, एकादशे, द्वादशे, अष्टादशे च सर्गे स्वभावोक्ते कतिपयानि चित्राणि तु अतिसुन्दराणि दृश्यन्ते। दृश्यतामिह तस्या श्री —

'गण्डूषमुज्झितवता पयस सरोष नागेन लब्धपरवारणमारुतेन।
अम्भोधिरोधसि पृथुप्रतिमानभागरुद्धोरुदन्तमुसलप्रसर निपेते॥'
'प्रहरकमपनीय स्व विनिद्रासतोच्चै प्रतिपदमुपहूत केनचिज्जागृहीति।
मुहुरविशदवर्णां निद्रया शून्यशून्या दददपि गिरमन्तर्बुध्यते नो मनुष्य॥

सन्त्वादाश्च माघस्य अतिमरला ओज पूर्णाश्च भवन्ति—

उदाहरणत्वेन तस्यैक श्लोक इह निधीयते—

'अनृता गिर न गदसीति जगति पटहैर्विघुष्यते।
निन्द्यमथ च हरिमर्चयतस्तव कर्मणैव विकसत्यसत्यता॥

छन्दसा प्रयोगे सुकविर्माघो भारवि कालिदासमपि अतिक्रमते। अथ विविधानि भूयिष्ठानि च छन्दांसि प्रयुञ्जान प्राप्यते। सर्वेषामपि छन्दसामद्भुत सफलश्च प्रयोग विदधाति। पञ्चमे सर्ग प्रयुक्ता वसन्ततिलका किञ्च एकादशे मालिनी नितरामेव सुन्दरता वहत।

पदविन्यासे यद्यप्यतदीये विकटबन्धत्वाभिबद्धा गौडी विजृम्भते पर तत्र परमप्रियम् आकर्षण दृश्यते। वस्तुतो यादृशी सुन्दरपदशय्या अस्य कवे पर्यवलोक्यते न तादृशी अन्यस्य कव काव्य सा प्राप्यते। रत्नाकर हरिश्चन्द्र प्रभृतयो बहुतरा कवय एतदीयपदविन्याससौन्दर्यस्य पुरत स्वकीय भाल

स्यादरं नमस्यन्ति । नवनवशब्दप्रयोगे नितरामभिरुचिं विलोक्य च तत्र विद्वांस कविमिममेव प्रशंसन्ति च 'नवसर्गगते माघे नवशब्दो न विद्यते' इति ।

इदानीमेतस्य महाकवेः काव्यात् त्रिचतुराणि तानि उद्धरणानि निर्धार्यन्ते यैः अस्य नानाशास्त्रनिष्णाततावगम्येत—

'प्रतिशरणमशीर्णज्योतिरग्न्याहितानां विधिविहितविरिब्धैः सामिधेनीरधीत्य ।
कृतगुरुदुरितौघध्वंसमध्वर्युवर्यैर्हुतमयमुपलीढे साधु सान्नाय्यमग्निः ॥'

एतेन वेदवैदुष्यं किञ्च—

'संशयाय दधतोः सरूपतां दूरभिन्नफलयोः क्रियां प्रति ।
शब्दशासनविदः समासयोर्विग्रहं व्यवससुः स्वरेण ते ॥'

एतेन तस्य वैदिकस्वराभिज्ञत्वमथ च चतुर्दशे सर्गे कृतं क्रतुवर्णनं तदीयं तस्य श्रोत्रियत्वं ज्ञापयति ।

अथ सांख्ययोगशास्त्रे स्वीयमधिकारं निदधौ—

तस्य सांख्यपुरुषेण तुल्यतां बिभ्रतः स्वयमकुर्वतः क्रियाः ।
कर्तृता तदुपलम्भतोऽभवद् वृत्तिभाजि करणे यथर्त्विजि ॥'

'मैत्र्यादिचित्तपरिकर्मविदो विधाय क्लेशप्रहाणमिह लब्धसबीजयोगाः ।
ख्यातिं च सत्त्वपुरुषान्यतयाधिगम्य वाञ्छन्ति तामपि समाधिभृतो निरोद्धुम् ॥

मीमांसायाञ्च स गम्भीरं पाण्डित्यमवाप—

'शब्दितामनपशब्दमुच्चकैर्वाक्यलक्षणविदोऽनुवाक्यया ।
याज्यया यजनकर्मिणोऽत्यजन् द्रव्यजातमपदिश्य देवताम् ॥'

आस्तिकेषु दर्शनेषु यथा स प्रावीण्यमधिजगाम तथैवासौ नास्तिकदर्शनेष्वपि उच्चस्थानमविन्दत्—

'सर्वकार्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकम् ।
सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम् ॥'
इत्यादिश्लोका अस्यां दिशि सङ्केतं कुर्वाणाः प्राप्यन्ते ।

काव्यस्यास्य द्वितीयः सर्गो राजनीतिविशारदतां च कवेः प्रख्यापयति यत्र

स्थले व्याकरणशास्त्रस्य सूक्ष्मसूक्ष्मतरान् अपि प्रयोगान् प्रयुञ्जानोऽयं कविः प्रेक्ष्यते किञ्च भाषेमं भुजिष्येवानुगच्छन्ती सर्वत्र समवाप्यते ।

यादृशं प्रकृष्टतमं शास्त्रेष्वस्य कवेः पाण्डित्यं निदधौ भगवदनुकम्पया तादृशीमेव कवित्वशक्तिमपि निदधाति स्म तस्मात् काव्यमस्य महाकवेः काव्यत्वदृष्ट्या पाण्डित्यदृष्ट्या च उभयविधया दृष्ट्या श्रेष्ठं काव्यं मतम् । एतादृशविलक्षणकाव्यस्य स्रष्टारं प्रति विद्वद्धीराणामिमा उक्तय सर्वथैव युक्ता.—

कृत्स्नप्रबोधकृद् वाणी भा रवेरिव भारवेः ।
माघेन चाघ माघेन कम्प कस्य न जायते ॥
माघेन विघ्नितोत्साहा नोत्सहन्ते पदक्रमे ।
भा रवेरिव स्मरन्तः कवयः कपयो यथा ॥



# कविर्दण्डी

कस्यचनापि देशस्य साहित्यं तदीय-वाङ्मयगरिम्णो भवति दोधूयमानं देदीप्यमानं च प्रतीकम्। तद्भवति समाजस्य दर्पणम्। समाजस्य सर्वमानवि भावनानां किञ्च परिवर्तनशीलानां विचारधाराणां तत्र प्रतिबिम्बनम्भवत्। तस्मात्त्वद् कश्चित् भारतीय-समाज भावना धारणा विचारधारा-संस्कृति-सभ्यता-रीति-नीतिकल्पं ज्ञातुं कामयते तदा स संस्कृत-साहित्यमनुशीलयतु। तत्रैकतोऽस्मद्दृष्टिपथ पुरातनतमस्य वैदिककालस्य हृदयाभिरामा सरलावदाता सन्तापा सात्त्विकी नैसर्गिकी श्रीः अवतरति, एकत्रश्च रामायण-महाभारत-जातक-मेघदूत-नैषधीयचरित-गीतगोविन्द-भामिनीविलास-सप्तशत्यादिकालस्वरूप-प्रदर्शकानि नवनवानि ललितानि चित्राणि च दृग्गोचराणि जायन्ते।

संस्कृतसाहित्ये यत्रोत्कृष्टोत्कृष्टतराणि महाकाव्यानि, रूपकाणि, गीतिकाव्यानि च दृश्यन्ते, तत्रातिवया रमणीया गद्यरचनाश्च भूयस्य परिस्फुरन्ति। साम्प्रतिकेऽस्मिन्नहस्युपलभ्यमानस्य गद्य-प्रविद्धस्य कथा-साहित्यस्य प्रत्यानानन्तरो कनेन स्फुटतरमेव प्रतीयत इद यत् संस्कृतगद्यसाहित्यस्यैव कथात्मको विकासो भिन्न रूपद्वयमाप्य अचकात्। कथा-साहित्यं वस्तुजातं तु परिगृह्णाति लोककथाभ्यः, पर तत्र प्रभावो महाकाव्यानां पद्धते पर्यवलोक्यते। इमानि कथावस्तूनि कानिचन तु ऐतिहासिकी घटना आश्रयन्तिकानि चन च कवि-कल्पना। एवंविधानामपि कथानकानां सद्भावोऽवाप्यते यत्रैतिहासिकी घटना कविकल्पनाश्च द्वे अपि सम्मिलतः। अत्र सर्वत्रापि वर्णनविधि स एव विलसति यो महाकाव्येषु। यस्को वर्णनानि सर्वत्र समासप्रधानानि अलङ्कारबहुलानि श्लेष-गुम्फितानि च समुपलभ्यन्ते। तत्रापि सा सरसा ध्रियमूर्तीं छटा गिरिसरिदादीनां हस्तौ वन-विहारजलकेल्यादिसम्बन्धिनीनामासां पर्यवलोकयितुं सद्वमाप्नुते। एवंविधं सकलं सर्वाङ्गपूर्णञ्च सौन्दर्यं वासवदत्ता-हर्षचरित-कादम्बर्यादिषु परिस्पन्दमानं केन न वीक्ष्यते? अस्मद्दृश्यमानस्य दण्डिकविकुलललामस्य रचना

कोटिमिमामाटीकमानापि न तमलङ्कृत-परिवेषं परिष्वजते यं सुबन्धु बाणप्रभृतीनां रचना। सुबन्धो बाणस्य च रचनासु दृश्यमानं गद्यं काव्यगद्यमस्ति न च गद्यं केवलम्। परं दण्डिनो रचना केवलगद्यमयी भवन्ती अस्माकं पुरतः समुपस्थिता जायते। स्वकालवर्तिन्या गद्यलेखनपद्धत्या आवर्जितो भवन्नपि दण्डी नात्मानं शाब्द्यां क्रीडायामरीरमत्।

संस्कृतगद्यसाहित्यस्य द्वितीयं रूपं पञ्चतन्त्र हितोपदेशादिनामिकासु नीतिकथासु दृश्यते। इमा गद्यकाव्य-परिधेर्दूरे स्थिता भवन्त्यः स्वाभाविकेनैव प्रकारेण विचकाशिरे। आसां नीतिकथानां गद्यमेव नैसर्गिकत्वात् सर्वसामान्यबोधगम्यमस्ति। दण्डिनो गद्यं गद्यस्योपर्यभिहितयोर्द्वयोरपि रूपयोर्मध्ये एकतरमपि नावलम्बते। तदस्ति मध्यममार्गस्य निदर्शनम्। गद्य-काव्येषु कथावस्तु भवति अल्पीय परं तद्-वर्णनं भवति भूय शाब्दिकश्चमत्कारश्च गरीयान्। परं नैसर्गिक्या रीत्या प्रणीतेषु गद्य ग्रन्थेषु न वर्णनस्यानवधिको विस्तारो न च शाब्दिकस्यैव चमत्कारस्य गुरुत्वबहुलतैव भवति। कथावस्तुनः प्रवाहस्तत्र स्वाभाविकीं गतिं विदधान प्रवहति। दण्डिमहाकवेर्दशकुमारचरिते कथावस्तु कुत्रापि वर्णनविपुलयोद्ग्रथितं नास्ति। न तत्र क्वापि श्लथतास्ति न च तद् दुर्बोधमेव वर्तते। भाषास्ति तत्र प्रवाहमयी स्वाभाविकी च। यदपि स्थलं समासातिशयवद्दृश्यते तत्रापि नास्वाभाविकतास्ति।

संस्कृतगद्यलेखकेषु दण्डी एव ईदृग् गद्य-लेखकोऽस्ति येन न कृत्रिमतापूर्णं गद्यं भृशमादृतं न च पञ्चतन्त्रादिप्रयुक्ता सरला सुबोधा च गद्यशैली अत्यन्तमुपेक्षिता। तस्याभिरुचिर्द्विविधयोरपि गद्य सौन्दर्ययोरासीदत स तं मार्गं परिजग्राह यत पाठक उभयोरपि गद्य-सौन्दर्ययो सुखमास्वादयितु शक्नुयात्। स अस्मिन् प्रयासे नितरां साफल्यमपि अधिजगाम। सुबन्धुबाणाभ्यां स्वस्वरचनायां यद् गद्यं श्लेष विरोधाभास-परिसंख्यादिनानालङ्कारालङ्कृतं दीर्घदीर्घतरसमाससमाकुलं शब्दचमत्कारचाम्तरम् निहितवन्तौ तदपि तद्विधानां कल्पनालोकवर्तीनां कथानां कृते युक्तं समीचीनं च वर्तते। यदा च तस्मिन् महनीये उद्देश्ये दृष्टिः क्षिप्यते यदुद्देश्येन सुबन्धुबाणादयस्तादृशं गद्यं निबबन्धुस्तदा तु तासु तासु कृतिषु प्रयुक्तस्य तद्विधस्य गद्यस्योपयुक्ततोपादेयता ततोऽप्यधिकतरं प्रकाशं समायाता जायते। दण्डिन पुन कथावस्तु उद्देश्यश्च अन्यविधमेवासीत्। आदर्शसंसारसम्बन्धिनी कथा न तस्य समक्षे स्थितासीत् तस्य स्वप्ने यथार्थस्य लोकस्य कथा

बभूव । तस्य तत्र स्थितिं प्रति काव्यादर्श-प्राचीनटीकाकार-तरुणवाचस्पतिमुधियोऽप्य स्थित पद्यमिदृश कुरुते—

नासिक्यमध्या परितश्चतुर्वर्णविभूषिता ।
अस्ति काचित् पुरी यस्यामष्टवर्णाह्वया नृपा ॥

इतिहासकाराणां प्रथममभिधानमिदमासीद् यद् दण्डिन प्रपितामहो भारविरासीत् पर सम्प्रति—

स मेधावी कविर्विद्वान् भारवि प्रभव गिराम् ।
अनुरुध्याकरोन्मैत्रीं नरेन्द्रे विष्णुवर्धने ॥

इत्येत द्वितीयविभक्तियुक्तभारविपदवन्त श्लोकमाश्रित्य तेषामिद मत यत् तस्य प्रपितामहो दामोदर आसीत् । एष विषयो वस्तुनोऽधुनापि सन्दिग्ध एव ।

काव्यादर्शोल्लिखितो राजवर्मा ( रातवर्मा ) एव नरसिंहवर्मा द्वितीय इति मन्वानौ प्रो० र० नरसिंहाचार्य—डॉ० बल्वल्करौ द्वावपि "दण्डिन समय सप्तमशतकोत्तरार्धभाग" इत्याचक्षाते । प्रो० बल्देव उपाध्यायश्च स्वकीये 'संस्कृतसाहित्येतिहासे' तस्य विद्यमानतां सप्तमशतकस्यान्तिमे किंवा अष्टमशताब्द्या प्रारम्भे मन्यते ।

दण्डिनस्त्रयो ग्रन्था परम्परया सन्ति प्रख्याता । तत्र काव्यादर्श दशकुमारचरिताभिधानौ ग्रन्थौ तु नि सन्दिग्धतया तदीयौ मतौ स्त । केचन छन्दोविचितिमपि तस्य रचनां मन्यन्ते । पर छन्दोविचितेरुल्लेख सुबन्धोर्वासवदत्तायामपि प्राप्यते । द्वयोरपि विभिन्नकालगामित्वात् छन्दोविचितेर्न दण्डिकर्तृत्व सिद्ध्यति । डॉ० कीथस्यापि मतेन छन्दोविचिते पृथग् ग्रन्थत्व नोपपद्यते । 'लिम्पतीव तमोऽङ्गानी'त्येत श्लोक काव्यादर्शेऽपि प्राप्य विद्वान् पिशेलो मृच्छकटिक दण्डिरचित मन्यते । परमन्वेषणपरा नात्र श्रद्दधते । श्रीचन्द्रबली पाण्डेयप्रभृतिभिस्तस्य ( मृच्छकटिकस्य ) पुष्टै प्रमाणै शूद्रककर्तृत्वमुपपादितमस्ति । अवन्तिसुन्दरीसञ्ज्ञिकाया रचनाया प्राप्त्या नाधिक कालो जात । सापि रचना दण्डिकृतैव विद्वद्भिर्मतास्ति । एषा कथा गद्ये पद्ये च समवाप्यत । गद्यात्मिकावन्तिसुन्दरी दशकुमारचरितस्य पूर्वपीठिकाया प्रारम्भिक रूप प्रतीयते । यद्यपि डॉ० आगाशे 'काव्यादर्श-दशकुमारचरित'योः प्रणेता दण्डी एव न, अपि तु

द्वयोरपि ग्रन्थयोर्ग्रन्थयिता भिन्न-भिन्नोऽस्ति' इति भणति परं विदुषामधिकतरा संख्या न तन्मतेऽस्ति । अतः काव्यादर्श-दशकुमारचरितावन्तिसुन्दरीत्येतन्नामधेया कृतयो दण्डिन एव सन्ति ।

केचन विद्वांसो दण्डिन उपरि गुणाढ्यस्य प्रभावं पश्यन्ति । तेषां मतेन दण्डी गुणाढ्यरचितबृहत्कथावर्णितघटनाधार एव दशकुमारचरितं प्रणिनाय । अस्तु नाम किमपि । दण्डिनो दशकुमारचरितं तस्योत्कृष्टप्रतिभावत्त्वमुच्चैः प्रमाणीकरोति । कविः स्वकीयेन प्रतिभाकौशलेन कल्पनाचातुर्येण च तद्रचनां तथा कृतवान् यथा तत् लोकप्रियतामास्वादयेत् । कविर्नैतेऽस्मिन् प्रयासे पूर्णा सफलता प्रयातोऽस्ति ।

दशकुमारचरिताध्ययनेन विदितं सञ्जायते यद् दण्डी समवाप्तसर्वाप्तलोकाचार-विचारानुभवो गुणाढ्यो मेधावी विद्वान् आसीत् । तस्य दशकुमारचरिते विराज-मानाभिर्नानाविधाभिरुल्लासपरिपूर्णाभी रोमाञ्चकारिणीभिर्घटनाभिस्तस्यानुभवशा-लित्वप्रतिभासत्त्वादिगुणा स्फुटतयैव प्रकटीक्रियन्ते। रोमाञ्च-साहसविस्मयगर्भाभिर्घ-टनाभिः समुल्लसितत्वाद् दशकुमारचरितस्य जगदाधुनिकाज्जगतो भिन्नम् । छल-कपट-हिंसा-प्रताडनाडम्बरालीकानलीकनादिभिस्तद् वस्तुतस्तु मानवलोकोप-स्थापनं परम् । घटनानां यथार्थत्वे प्रगेतुः प्रतिभायाश्चरितार्थत्वप्रति पृष्ठ संलक्ष्यते । मुख्या कथानेकावान्तरकथाभिरुद्ग्रथिता वर्तते । तत्रापहारवर्मणश्चरितमतिमात्रं हृदयाह्लादकं विधत्ते । तेन सार्धं तपस्विनो मारीचस्य हृदयविहीनाया गणिकाकाम-मञ्जर्या जैनभिक्षोश्चावान्तरकथा कविना समुपस्थापितास्ति । न केवलं तच्चरितेन साकमन्यान्यकुमाराणां कथाभिश्च महापि कतिपयावान्तरकथाः विदुषा ऐक्येन प्रस्तुतीकृताः सन्ति । सर्वत्रापि तासु तासु कथासु तथ्यवादि-वातावरणं वीक्ष्यते । न दण्डिनो लक्ष्यं नीतिशिक्षणं न च सचेतोजनहृदयरञ्ज-नमेव । तस्य तूद्देश्यमस्ति स्वसमयसम्बन्धिन्या नानाविधायाः भारतीयसमाजस्य यथार्थचित्रसमुपस्थापनम् । तस्य लेखनी समाजगतान् दोषान् उन्मीलयति ताननावृत्यास्मत्पुरतः सच्छिद्रानि । सुबन्धोर्बाणस्य च दृष्टिरस्त्यादर्शमात्रप्रेक्षिणी परं दण्डिनो दृष्टिः तादृशी । सास्ति यथार्थावलोकनशीला । तस्माद् स समाजस्य सर्वविधानां दोषाणां समुपस्थापनाय विविधानि पात्राणि सङ्कलय्यन्ते समुपलभ्यते । सा कलानुरागिणी चास्ति परं कलापक्षः सोऽनुरागान्तरया उपरि

नैव स्वच्छन्दं शासनं न कुरुतेऽपि तु सैव तं स्वेच्छया शास्ति। अत एव तद्रूपाया तद्विधस्थिति चित्रणापेक्षी प्रवाहः सर्वत्र समुद्दीप्यते।

दण्डिकवेर्विशिष्टतेयमस्ति यदसौ सुबन्धु किञ्च बाण इव न दिव्यशक्तीरूपयुनक्ति। न तस्य कथावस्तुनि गन्धर्व किन्नराप्सरसामवतारणा कृतास्ति। न तत्र सामान्यजनबुद्ध्यगम्याश्चमत्कारचमत्कृता प्रदर्शिता सन्ति। तस्यास्था न दैवेऽपि तु पौरुषेऽस्ति। पूर्वपीठिकाया दैवस्य महत्त्वे दैवे च बले विश्वासोऽस्ति दर्शितः, मालवेश्वरः शिवप्रसादाल्लब्धया वीरारातिनाशननिपुणया गदया मगधेश्वरं पराभवति, मगधेश्वरश्च ऋषि वचने विश्वस्य भाविनो निजसूनोर्वल पौरुषयोगे मुख्य दधानः कान्तारे एव दिनानि व्यत्ययेति, परं नैषा हि पूर्वपीठिका दण्डिप्रणीता नापि प्राक्तनरचनानुसारिणी। दण्डिना प्रणीते कथाभागे तु ईदृश्यो नियत्यधीना घटना न दृष्टा प्राप्यन्ते। सर्वे एव कुमारा किञ्च सर्वाण्यप्यवान्तरकथागतानि पात्राणि स्वपुरुषार्थसम्पन्नैव स्वयं जयन्ति। नैजाभिप्रेतसाधने ते नूनमुचितमनुचितमुपायजातमवलम्बन्ते। परं तत् सर्वं प्रदर्शनं कवेरभिमतमेव। न केवलं पुरुषपात्राणां चित्रणं तत्र, प्राणवत् कृत्वा विहितं नारी पात्राणि चाप्युपस्थित विधाय चित्रितानि सन्ति। गणिका कुलटादिवनितानां, कलहपराणां धूर्तानां, दम्भरतानाञ्च मनुष्याणां चरित्राणि समुपन्यस्य दण्डी स्वकृत्या तां योग्यतामुत्पादयितुं प्रयतते स्म यथा पाठकास्तत्समयवर्तिनः समाजस्य सर्वा अपि दशा सम्यग विलोकयितुं प्रभवन्।

दण्डी नोच्चतरवर्गस्य वृत्तमालिखितुमभिलषते स तु मध्यमवर्गस्य जीवनगाथां वलीयसीमुत्सुकतां निदधाति। अत एव तस्य रचनायां क्षपणका, ऐन्द्रजालिका, भ्रष्टास्तपस्विना, राज्यच्युता राजानो राजतनया, वाराङ्गना, कुट्टिन्यो, नर्मव्यापारसहायका धूर्ता, दूती-कर्म प्रवीणा भिक्षाचर्य, सिद्धहस्ताश्चौरा, द्यूतक्रीडानिरताश्चरित्रभ्रष्टा भिक्षव—सर्वविधा एव जना—द्रष्टुं शक्या सन्ति। नृपाणामादर्शमयानि चरित्राणि प्रति किञ्च त्रिकालदर्शिना महर्षीणां दैव्या शक्तेश्चमत्कार प्रदर्शनम्प्रति दण्डिनोऽभिरुचिर्मनागपि न प्रतीयते। स न भूलोकव्यवस्था विहायस्वर्गचित्रणमाकाङ्क्षति। तदीया तु दृष्टि सर्वथैव सैद्धान्तिकी व्यावहारिकी च विद्यते। चेन्मानवो युगपदत्र धर्मार्थकामान् न निषेवितुं पारयेत् तदा तेन एको द्वौ वा, कियन्ति दिनानि, हातव्यौ, तथाचरणेन न काऽपि स्याद् हानिः। अरिश्चेद् बलेन पुरुषार्थेन वा न जितो भवेत् तदा भेददण्डादिपरा कापि

नीतिरनुसरणीया। प्रयोक्तव्या च सा। अपहारवर्मविश्रुतादिकानां चरित्राणि इदमेव तथ्यं सङ्केतयन्ति। एतावदेव न, दण्डिना तु अलौकिकशक्तिसम्पन्नानामप्युपयोग एतादृशानामेव दुष्कर्मणां कृते कृतः। दण्डी गणिकया मारीचं वशीकृतं कारयित्वा तपस्विनां चपलकानां साधूनां मिथ्याचाराणां दुर्बलतां समीचीनतया समुपन्यस्यति। न स सामाजिकदोषनिगूहनपक्षे आसीत्। वस्तुतोऽन्यत्रैतादृशी याथार्थ्यप्रियता दुर्लभैव वर्तते।

दण्डी नारीहृदयाभिज्ञाने परमिव पटुतां गाहते। तद्रचनायां क्वापि पतिवञ्चिकायाः नृशंसमानसायाः नार्याः जघन्यं चित्रं दृश्यते, क्वापि च पतिप्राणायाः मृदुलस्वान्तायाः पतिव्रतायाः मनोरमं चेतःपावनकारि चित्रं आभा विभाति। 'धूमिनी' नारीहृदयस्य निर्दयतायाः अग्निगर्भितं प्रतीकं यदि, तदा 'गोमिनी' पतिप्राणायाः पतिव्रतायाः सुगृहिण्याः अवदाता प्रतिमा भाति।

अस्यां कथायां कौतुकोत्पादकाश्चर्यकारककथानान्वितत्वात् तत्राद्भुतरसस्य प्रभूतता सर्वत्रमवलोक्यते। नानाविधानकलाविशारदत्वात् दण्डिनः स्वस्य रचनायां राजनीतेर्निशितानामङ्गानां, कामशास्त्रस्य निगूढानां तथ्यानां तथा चौरशास्त्रस्य विचित्रविचित्राणामुदन्तानां बहुलता दृष्टा भवन्ति। तस्मिँल्लिङ्गैर्दण्डी विचित्रपाण्डित्यवत्त्वं प्रकटीकरोति। एतत्पूर्ववर्तिनां दुरवस्थायामुपगतानुपभुञ्जानार्थे दण्डी वस्तुतो जनतायाः कविरस्ति। यदि सुधियः सहस्राब्दपूर्ववर्तिन्याः भारतभुवो जनतायाः हर्षविषादौ, सुखदुःखे, आमोदप्रमोदौ, क्रन्दन-गर्जने, आचारविचारौ च ज्ञातुं कामयन्ते तदा ते दण्डिनो दशकुमारचरितं परिशीलयन्तु इति स्पृह्यते।

श्रेष्ठस्य कवेः काव्ये तत्समयवर्तिनः संसारस्य सर्वाङ्गीणं दर्शनं भवतीत्येतत् कथनं दण्डिनः कृत्यां सर्वथैव चरितार्थीभवति। तस्मिन् काले समाजस्याभिजनस्ताम्रचूडयुद्धदर्शनेऽरज्यत—"मार्गं च सहति नियमे श्रमणानां ताम्रचूडयुद्धकोलाहलो सन्ततं न।" तदा जनेषु व्याघ्रचर्मणो वस्त्रस्य व्यवहारो सुलभ आसीदिति दृष्टे तद्विक्रयो वणिजोऽभूत्—"अस्मात् चर्म तत्र व्याघ्रचर्मे वस्त्रं विक्रयार्थं आगत, किं न जानासि।" कृपाणोऽपि रक्षणार्थं तदानीं बहुनाऽऽस्या प्रयोगः कृतः - भवत्—"...त च बाल वनितालीमुग्धोद्धताभिरङ्गि...तं उत्कृष्टतमम्" तस्मिन् युगेऽपि जना उपवनविहारं अवलोकयन्। उत्सवेषु कर्मोत्सवः प्रमुखः

मत आसीत्—"मदनमहोत्सवाय रसिकमनासि समुल्लासयन्", "अभूच्च घोषणा-श्च कामस्तव ।" द्यूतप्रथा प्रचलितामीद् भृशम्—"अनुप्रविश्य च द्यूतसभा मध्यधूर्तं समगांसि ।" वासताम्बूलवीटिकार्ता नितरा निषेवणमदृश्यत—"हेमकरण्डवाह, वासताम्बूलवीटिका कर्पूरस्फुटिका निरष्टीवम् ।" क्रीडासु विविधासु च तदा जनतानुरागोऽवाप्यत—"तस्मिन् कन्दुकोत्सवे पुन समाश्वासितास्मि ।" नृत्य गीतचित्रादिकलासु प्रेम प्रतिगृह व्यालोक्यत—"बुद्धिश्च निसर्गपट्वी कलासु नृत्यगीतादिषु चित्रेषु च काव्यविस्तरेषु ।"

दण्डिनो दशकुमारचरित, साहित्यिकदृष्ट्या, वस्तुत एका परमप्रशसनीया रचनास्ति । सा हि रचना-रयानककाव्ययोरुज्ज्वल निदर्शनमस्ति । तस्याख्या नस्य सप्राणानां पात्राणां चित्रण शिष्टहास्यसुविलसितमधुरव्यङ्ग्यभुव उपरि कुशलेन लेखकेन प्रस्तुतीकृतमस्ति । आख्यानस्योक्त सौन्दर्यं खलु अर्थस्य विशदतया, रसस्य मनोज्ञाभिव्यक्त्या, प्रतिपदरमणीया ललिततया, व्यवहार-क्षमया प्रवाहपेशलया च भाषया नितरा कमनीयतरता नीतमस्ति । अत सुवर्णं मिह ससौरभ भवत् सकलमपि लोक परिप्रीणयत् समवाप्यते ।

नानागुण सुन्दराया रसपरिप्लवायास्तस्या रचनाया इह काश्चन पङ्क्त्यो भिन्न भिन्नस्थलगता समुद्ध्रियन्ते सचेतसा चेतासि नन्दयितुम्—

( क ) 'अम्ब किं ब्रवीमि दौर्भाग्य नाम जीव-मरणमेवाङ्गनानाम्, विशेष तश्च कुलवधूनाम् । तस्याहमस्म्युदाहरणभूता । मातृप्रमुखोऽपि ज्ञातिवर्गो मामवज्ञयैव पश्यति । तेन सुदृष्टां मां कुरु । न चेत् त्यजेयमद्यैव निष्प्रयोजनान् प्राणान् । अविरामाच्च मे रहस्य नाधाव्यम्' इति पादयो पपात ।

( पृ० २२६ नि० प्रे० )

( ख ) विभावरी च व्यभासीत् । अभूच्च मे मनसि 'किमय स्वप्न, किं विप्रलम्भो वा किमिदमासुरी दैवी वा कापि माया । यद् भावि तद् भवतु । नाहमिन् तत्त्वना नावबुध्य मोक्ष्यामि भूमिशय्याम् । यावदायुरन्ग्यायै देवतायै प्रतिशयितो भवामि' इति निश्चितमतिरतिष्ठम् । ( पृ० १९४, नि० प्रे० )

यत्र वस्तुनो, दृश्यस्य, स्थितेर्वा प्रकर्षो विना दीर्घदीर्घतराणि वाक्यानि किं वा अन्तरेण समासावलीं न प्रकटीभवितु शक्यस्तत्र कविना तद्विध-सौन्दर्याविर्भावनप्रयोजनानुरोधेनैव तदाश्रयश्च कृत । दृश्यताम्—

(ग) एवमनेककरणमधुरं विहरन्ती आननानिलवेगदोलितैर्दन्तच्छदरश्मिजालैर्लीलापल्लवैरिव मुक्तकमलपरिमलप्रहृष्टलोलालीनलिनस्ताडयन्ती गोमूत्रिकाप्रचारेषु घनदर्शितरागविभ्रमा विद्युल्लतामिव विडम्बयन्ती, अवपतनोत्पतननिर्व्यवस्थमुक्ताहारम्, अङ्कुरितघर्मसलिलदूषितकपोलपत्रभङ्गशोषणाधिकृतश्रवणपल्लवानिलम्, आगलितस्तनतटांशुकनियमनव्यापृतैकपाणिपल्लवं च निषद्योत्थाय निमीलितोन्मीलितं स्थित्वा गत्वा चैवातिचित्रं पर्यक्रीडत राजकन्या।

(पृ० २०९–२११, नि० प्रे०)

दशकुमारचरिते कविना व्यावहारिकशैल्यनुगुणान्येव पदानि प्रावचितानि सन्ति। कानिचन तु पदान्यनेनादृतान्यपि शोभन्ते यानि प्रयुञ्जानः कविस्तेषु व्यवहरणीयतानुरूपं बलमपि सञ्चारयति। उदाहृतिका मलनम्लोद्गमनीपोद्गम किशारु-कालेय-मद्गु पञ्चवीरगोष्ठादिकानि पदानि बहूनि यानि पदानि कविना प्रयुक्तानि तथा प्रयोगस्येदमेव प्रयोजनं यत् तानि व्यवहारे समागतानि स्युः। तत्र—"गृहिणि प्रियहिताय दारगुणाः", "दुष्करसाधनं प्रज्ञा", 'इह जगति हि न निरीहं देहिनं श्रियः संश्रयन्ते' —इत्यादिकाः सूक्तयोऽपि च—

"... आगमदीपदृष्टेन खल्वध्वना सुखेन वर्तते लोकयात्रा। दिव्यं हि चक्षुर्भूतभवद्भविष्यत्सु व्यवहितविप्रकृष्टादिषु च विषयेषु शास्त्रं नामाप्रतिहतवृत्ति। तेन हीनः सतोरप्यायतविशालयोर्लोचनयोरन्ध एव जन्तुरर्थदर्शनेष्वसामर्थ्यात् " इत्यादिका (पृ० २५४, नि० प्रे०) राजनीतिविषयका उपदेशाश्च पाठकान् मधुरमुपदिशन्त्यः समुल्लसन्ति।

दण्डिनो रचना-शैली वस्तुतोऽनुपमा प्रभावशालिनी ओजस्विनी च वर्तते नितराम्। यदि रचना तेन गुणेन सा नैसर्गिकैर्गुणैः परामेवोत्कृष्टतामुपेतास्ति। काव्यादर्शसंदर्शितोऽलङ्कारशास्त्रस्य महान् ग्रन्थः, दशकुमारचरितं गद्यकाव्येषु अद्भुतं ग्रन्थरत्नम्, किञ्च तस्यावन्तिसुन्दरी, या अपूर्णैव प्राप्यते, च अनितरामेव सहृदयहृदयाभिरामा रचनास्तीति को न सचेता वेत्ति। प्राचीनानामालोचकानामस्य कविकुलशिरोमणेर्दण्डिनो विषये तु सम्मतिरियम्—

"जाते जगति वाल्मीकौ कविरित्यभिधाऽभवत्।
कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि॥"



# वेणीसंहारम्

अमरवाणीपर्युपासकैर्नाट्यशास्त्र पारावारीणैः स्वसिद्धान्तानां प्रतिपादनार्थं येभ्यो रूपकेभ्यो हि उदाहरणान्यचीयन्त तेषु वेणीसंहारं नाम नाटकमुल्लेखनार्हं मस्ति प्रामुख्येण। वेणीसंहारं भट्टनारायणो रचयाम्बभूव। आसीत् स कान्य कुब्ज (कन्नौज)-वास्तव्य। न स स्वरचनायां नैजजीवन परिचयं स्तोकमपि प्रददावतस्तस्य जीवनविषयकं उद्दन्तस्तमोगर्भ एव दीयते। वङ्गदेश ादिशूरम्न भूमिदेवजनितामापदं विनिवारयितुं यज्ञार्थमाजुहावेति केषाञ्चनेतिहासविदां मतम्। वदन्ति च ते यदसौ महीपतिः सप्तमेशवीयाब्दे समजनि। यद्येतत्स्यत्तथ्यं तदा भट्टनारायणस्य स्थितिकालः ईशवीयं सप्तमं शतकं सिद्ध्यति किञ्च तत्रैव वङ्गाधिराजस्य छायायां स वसतिञ्चक्रे—इत्यप्येतदप्युचितं भवति। मन्य म एव विद्वत्प्रियो राजा 'मृगराजलक्ष्मेत्येतेनोपाधिना त कविकुलमूर्द्धन्यं विभूषयाञ्चकार। केचित् कथयन्ति स गुप्तराज्यानेहसि चतुर्थे खिष्टीयशतके प्रादुर्बभूव। अन्ये वदन्ति यद् बहिरङ्गेभ्य प्रमाणेभ्यस्तस्य काव्यालङ्कारसूत्रवृत्तिकारात् वामनात् प्राक्तनत्वं निष्पद्यतेऽतस्तस्य समयो निश्चप्रचतया सप्तमशतकवर्ता पनायते। वामनः स्वकीये ग्रन्थे भट्टनारायणकृताद् वेणीसंहारादुद्धरणमेकमुद्धरन् प्राप्यत तस्मात् स अष्टमशतके सञ्जाताद् वामनात्तून प्राचीनतर इति म नतिभाति।

वरीवर्ति वेणीसंहारस्य कथावस्तुन आधारो महाभारतम्। द्रौपदी वेणी बन्धनमसन्धिनी घटना या महाभारते वर्णितास्ति तामवाप्य नाटककारो नाटकं रचकाय प्रणिनाय। परं नाटकीयां सुन्दरतां सञ्चारयितुं स तत्र यथेष्ट परिवर्तनमपि चकार।

सन्ध्यवस्थार्थप्रकृतीनां प्रतिष्ठापनं नाटके यथास्थानं विधातव्यमिति यन्नाट्यशास्त्राभिमतं तस्य पालनं वेणीसंहारे पूर्णत्यास्ति विहितम्। सन्ध्यङ्गयोजनाया

भरतस्य नाट्यशास्त्रप्रदत्त क्रमो नानुसृत मनुपलभ्यते । तथा हि, नाट्यविषयकेषु ग्रन्थेषु मुखसन्ध्यङ्गेषु प्रथमं विलोभनस्याङ्गस्योल्लेखः कृतस्ततश्च प्राप्ते परं वेणीसंहारे प्रथमं प्राप्त ततश्च विलोभनस्योल्लेखोऽधिगम्यते । एवमेवान्यत्रापि सन्ध्यङ्गयोजनाया समासाद्यते व्यतिक्रमः । वेणीसंहारनाटकगतकथावस्तुनोऽस्ति प्रमुखं साध्यं दुश्शासनयाया वेण्या उत्तमनम् । कार्यस्यास्य बीजमस्ति युधिष्ठिर-स्यामर्षो न च भीमस्य । तदमर्षोदयमन्तरेण सयुगाद्घोषणं न सम्भवितु शक्नोति । सम्पराय विना चिकीर्षितस्य कार्यस्य सम्पादनमपि सर्वथैव दुर्घटम् । नाटकस्य प्रथमेऽङ्के विद्यमानात्—

‘निर्वाणवैरदहनाः प्रशमादरीणां नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥’’

इत्येतस्माच्छ्लोकात्—

“यत् सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता ॥
तद्द्यूतारणिसम्भृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत्कुरुवने यौधिष्ठिरं जृम्भते ॥’’

इत्येतच्छ्लोकं यावत् युधिष्ठिरस्य क्रोधः बीजमेवोक्तम् । अतः प्रथमेऽङ्के मुखसन्धि-शोभते । द्वितीयस्मिन्नङ्के प्रतिमुखसन्धिरुपनिबद्धोऽस्ति । तत्र युधिष्ठिरस्य मन्यु-रूप बीज बिन्दुवत् प्रयाय प्रसरति । कविर्भानुमतीदृष्टं स्वप्नं वर्णयित्वा ‘सह भृत्यगणं सबान्धवं समित्रं’ मित्यादि दुर्योधन-व्याहृत वाक्यं निधाय कौरवाणां विनाशस्य प्रयासफलता सूचयति । तृतीयस्मादङ्कात् गर्भसन्धिर्भवति प्रारब्धः । सोऽङ्कं पञ्चमं यावदवतिष्ठते । षष्ठेऽङ्के—

“भीमेन प्रियसाहसेन रभसात् स्वल्पावशेषे जये
सर्वं जीवितसंशय वयममी वाचा समारोपिताः ॥’

इत्यतोऽवमर्शसन्धेर्जायते प्रारम्भः । स च भीमाभिज्ञानकारिणी घटना यावद् वर्तितोऽस्ति । निर्वहणसन्धिस्ततः प्रारभ्यते यतो भीमं कञ्चुकी अभिज्ञातुमर्हति । स सन्धिः पर्यवस्यति नाटकपर्यवसान एव ।

शास्त्रीयदृष्ट्या वेणीसंहारस्य कथावस्तुना विकास दर्शयति गुरुरूपो नाटक य

कला विधानदृष्ट्या न निर्दोष सिद्धयति। नाटकस्य वेणीसंयमनरूपा प्रधान-घटनारम्भान भीम प्रतिज्ञया सार्धं निबध्नाति। पर नाटककारो न महाभारतस्य समस्तस्यापि कथावस्तुन समावेशनविषयक लोभ संवरीतु पारयति तस्मात् सोऽसम्बद्धा अपि घटना सयोजयितुमीहते। एष तदीयोऽभिनिवेश कथा गतिं प्रति बाधक सञ्जात। वीररसप्रधाने रूपके दुर्योधन भानुमत्यो प्रणयचित्रण नितान्तमनुपयुक्त वर्तते। काव्यप्रकाशकार साहित्यदर्पणकारश्चोभौ सूरामुपक्रोशन्तौ विलोक्येते प्रवृत्तिं ताम् प्रतीच्य प्रथी डॉ० कीथोऽपि न सङ्गता मन्यते। य खलु नाटकस्यास्य नायक दुर्योधन मन्यन्ते ते प्रणयचित्रणस्यास्यौचित्य प्रतिपादयन्ति। पर सत्यपि नायकत्वेन दुर्योधनेऽङ्गीकृते नेद प्रणयदृश्यमुचित प्रतिभाति। न तेन हि कथावस्तुनो गति प्रकर्षं वा प्रौढतामुपैति न च दुर्योधनस्यैव चरित्रमुत्कृष्टत्वमासादयति। एवमेव तृतीयाङ्कस्थित कर्णाश्वत्थाम्नोर्वाग्युद्धमतितरा प्रभावपूर्णं सदपि न किमपि नाटकीय प्रयोजनमुद्दीपयति अतस्तदपि नापवादाय कल्पते। अश्वत्थाम्न शस्त्रत्यागानन्तरमपि भीमकर्तृक दु शासन वधचित्रणेन तत्र च दु शासन रक्षणविषयिकायाश्चेष्टाया अश्वत्थाम्नो विरतत्वस्याख्यानेन न भीमस्य महत्त्वोपचयमृच्छति। अश्वत्थाम्नि दु शासन गोपायितु प्रक्रान्ते सति यदि भीमस्तदुरःशोणितपाने साफल्यमध्यगमिष्यत् तदा भीमस्य गौरवमवर्धयत्। षष्ठे अङ्के चार्वाकराक्षसमवतार्य कथामावर्तयितु विधीयमान प्रयासोऽपि नापेक्ष्यते। तद्घटनायोजनया तु धीरोदात्तनायको युधिष्ठिर उपहास गमित इव प्रतीयते। तामवस्थां नीतस्य तस्य तत्कालिक चित्रण न कमपि प्रभाव जनयति। तत्त्वस्वाभाविकमेव प्रतिलक्ष्यते।

नाटकेऽस्मिन्नाटककारेण महाभारतीयानां बहूना घटनाना समुपस्थापनार्थमीहा तु कृतासीत् पर न स तास्सकलघटनामुक्ता एकस्मिन् सूत्रे प्रोतुमलमत। न यावन्नाटकीया कथा विकास मनु धावेत् न च यावत् सा धारेव गतिशीला स्यात् तावन्नाटक कला न गरिमाण गन्तुमर्हेत्। नाटकऽत्रैतद्विधमपि वैशिष्ट्य नोपलभ्यते। नाटककारा वर्णनेन तु कथां विन्यस्त सलक्ष्यते पर स तत्र ( कथायाम् ) व्यापारेण गतिं प्रददान समवाप्यते। चतुर्थेऽङ्के सुन्दरककृत रणाजिरवर्णनमस्ति तु कश्चिदस्खलित पर तद् कथावस्तुनो गतिं क्षपयति। अस्ति च तत् विगलितप्रभावम्। एवमेव भानुमतीकृत स्वप्नवर्णनमपि न तावन्त विस्तारमपेक्षते यावान् स तत्र वीक्षितो भवति। इत्थ वेणीसंहारस्य

निश्वनाथमतेनैताहशी योजना 'पताकास्थानकं तृतीय'मस्ति। अन्यत्रापि अहि-शतनकुलादिपदप्रयोगस्थले नाटककार कौतूहलोत्पादनस्य कृते प्रयतमानोऽवाप्यते। वस्तुतो नाटकस्य कथावस्त्ववश्यमेव रुचिरं परं नाटकीया कला न तत्र समुचितां सज्जा श्रयन्ती दृग्गोचरीभवति।

नाटकस्यास्य नायको दुर्योधन इति केचन, तदपरे भीमो नायक इति, तदितरे नायको नाटकस्यास्य युधिष्ठिर इति मन्यन्ते। ये दुर्योधनं नायकं मन्यन्ते, तेषां कथनमेतत्—

(क) दुर्योधनस्य चरित्र-चित्रणे परिवर्तनं विशिष्टतया विधाय नाटककारस्तं (दुर्योधनम्) चारित्र्येणोच्चैरुत्थापयितुं यतमानो दृश्यते। इदं ज्ञापयति यत् कवेर्दुर्योधनस्य नायकत्वमभिलषितम्।

(ख) प्रथममङ्कं विहायावशिष्टेषु सर्वेष्वप्यङ्केषु दुर्योधनो रङ्गमञ्चे दृश्यते। प्रथमेऽङ्केऽपि स. स्वकार्यकलापम्प्रति प्रेक्षकाणां दृष्टिमावर्जयन् विलोक्यते।

(ग) दुर्योधनगता शूरतासम्मानभावना च तमस्मदादरभाजनतां प्रापयति। अस्ति स उद्भटो भटो विश्वसनीय सुहृत् स्नेहार्द्रश्च भ्राता। न स भीम इव विकत्थनाप्रियः। तदीयानि दौर्बल्यानि अस्मदीयां समवेदनां तदर्थं जागरयन्ति। मानवतायां स भीमान्महीयान्। स॰ पराजितोऽपि विजेतुर्भीमाद् गरीयान्।

(घ) नाटकीयं कथावस्तु दुर्योधनहेतोरेवातितरां मनोग्राहिणी हृदयाकर्षणकारिणी च।

नाटकस्य नायको भीम इत्येतन्मानिनां मतमेतत्—

आदिमादङ्कादन्तिमाङ्क यावद्—

"चञ्चद्भुजभ्रमितचण्डगदाभिघात-
सञ्चूर्णितोरुयुगलस्य सुयोधनस्य।
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि भीमः॥"

इत्येतां प्रतिज्ञां बिभ्राणो भीमः सर्वत्र गर्जन् श्रूयते। द्वितीय-तृतीय-चतुर्थाङ्केषु स रङ्गमञ्चे नोपस्थितः प्राप्यते परं तदीयस्य कार्यभारस्य सूचनां प्रेक्षका लभमाना उपलभ्यन्ते। द्वितीयस्मिन्नङ्के कञ्चुकी भीम मरुता रथकेतन-भङ्गस्य सूचनां प्रददाति। तृतीयस्मिन्नङ्के भीमस्यैषा गर्जना नेपथ्ये श्रुता भवति—

"कृष्टा येन शिरोरुहे नृपशुना पाञ्चालराजात्मजा
येनास्याः परिधानमप्यपहृतं राज्ञां गुरूणां पुरः।
यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवान्
सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः॥"

चतुर्थेऽङ्के सुन्दरको भीम-पराक्रममुपस्थापयन् प्राप्यते। इत्थं भीमो वेणीसंहारीय-कथावस्तुनो मूलाधार एव सिद्ध्यति। वेणीसंहारनाट्या यत्नैव प्राधान्येन भीममवलम्बते। वेणी-संहारहेतोर्भीमस्य—

"मथ्नामि कौरवशतं समरे न कोपाद् दुःशासनस्य रुधिरं न पिबाम्युरस्तः।
सञ्चूर्णयामि गदया न सुयोधनोरू सन्धिं करोतु भवतां नृपतिः पणेन॥"

इत्येषा प्रतिज्ञैव बीजं प्रतीयते। भीम प्रतिज्ञामेतां पूरयितुमादितोऽन्तपर्यन्तं यत्नशीलः समासाद्यते। तत्कोपेन तु ज्ञातं भवतीदं यत् स आज्ञालङ्घनमपि स्वप्रतिज्ञा-पूरणाय समुद्यत आसीत्। चेत्नाटकाद् भीमस्य व्यक्तित्वं पृथक् क्रियेत तदा तत्रावशिष्येत एव किम्? नाटकस्य नामापि वस्तुनो भीमस्य प्राधान्यं साधयति। अतो भीम एव नाटकस्यास्य नायको मन्तव्यः।

एतस्य नाटकस्य नायकत्वं हि युधिष्ठिरे समुद्घयतोऽत्रैतद् अभिदधतां विचारा इमे—युधिष्ठिरो नायक-गुणान् निदधाति। स महासत्त्वो गम्भीरोऽविकत्थनः स्थिरो निगूढाहङ्कारो दृढव्रतोऽस्ति। सः सन्धिं पातुं कुल-क्षयाशङ्कया शान्ति-प्रतिष्ठापनप्रयोजनेन युद्धाद् दूरीभवितुं सन्धिञ्च कर्तुं नितान्तमेव प्रयासं कृतवान्। शान्तिप्रियता तस्मिंस्तां सीमां गतासीद् यत् सा न तस्य भ्रातृभ्योऽरोचत। सः न कदापि मनागप्यविमृश्यकारितायां मतिं बबन्ध। नितरामयतत यद् दुर्योधनो नैजं दुरभिनिवेशं परित्यजेत्; कृतेऽपि महति प्रयासे यदा स (दुर्योधनः) कीदृशमपि सन्धिं कर्तुं नोद्यतः सञ्जातस्तदा बाधित एव भूत्वा युधिष्ठिरो युद्धमन्वमुन्यत्। आसीदसौ परमसौम्यः परमोदात्तस्वभाव औदार्यादात्तमानसः। रूपककारस्तस्य यं क्रोधमस्फुरतो निदर्शयति तत्र सौम्यता तेजस्विता च इत्येते द्वे अपि विशिष्टे शोभेते—

"यत् सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता।
तद्द्यूतारणिसम्भृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत् कुरुवने यौधिष्ठिरं जृम्भते॥"

अयोऽपि युधिष्ठिरस्य क्षमाशीलता श्लाघ्नते । तेऽपि विश्वसन्ति यद्युधिष्ठिरस्तेष्वपि न द्वैधधियं निदधाति । शालीनत्वात् सर्वशुभचिन्तनकारित्वात् तस्य, तेऽपि तस्मिन् श्रद्दधते । धृतराष्ट्रस्तमधिकृत्य वक्ति दुर्योधनमाश्वासयन्— "वत्स एव गतेऽपि मत्प्रार्थनया किम करोति युधिष्ठिर ? अन्यच्च सर्वमेवापकृत नानुमन्यते ।' युधिष्ठिरस्य भ्रातृप्रेमास्यनुकरणीयम् । भीमस्यानृत-निधनवार्तामाकर्ण्य स स्वयमपि प्राणान् हातु चितायां, सज्जायते सन्नद्ध । तस्य युद्धजनितजय पराजयरूपफलभोक्तृत्वादथ च नाटकान्ते "प्रीततरश्चेद् भगवास्तदिदमस्त्वि' ति भरत वाक्याभिधानकारित्वात्, स एव नाटकस्यास्य नायक इति ।

नाटके यादृशमुज्ज्वलतर चरित्र नाटककारेण युधिष्ठिरे दर्शित न तादृश तत् स न भीमे न च दुर्योधने दर्शयन् समवाप्तो भवति तस्मात् कवरपि युधिष्ठिरस्य नायकत्वमिष्टमिति प्रतीयते ।

उदात्तचरित्रेषु पात्रेषु श्रीकृष्ण एव प्रामहर । नाटककारेण स भगवदवतार त्वेन चित्रितो न सामान्यपुरुषत्वेन । "प्रवेशकाल किल तत्र भगवत पाराशर्यनारदतुम्बरुजामदग्न्यप्रभृतिभिर्मुनिवृन्दारकैरनुगम्यमानस्य भरतकुलहित काम्यया स्वय प्रतिपन्नदौत्यस्य देवकीसूनो ' इत्यादिकै प्रथमाङ्के समुपस्थापितैर्वाक्यैस्तस्य सर्वश्रेष्ठव्यक्तित्व नाटककार आलिखति । स दुर्योधनसभायां गत्वा दौत्यकर्म येन पाटवेनानुष्ठितवान् यां हि स राजनीतिकौशलाश्चर्यकरी कुशलता दर्शितवान् तत् पाटव सा च कुशलता रूपककृता विलक्षणेनैव प्रकारेण प्रकटीकृतास्ति । दर्शको रङ्गमञ्चे तत् तत् कार्यं कर्तुं नोपस्थित पश्यति त पर तदीया सा तथापि पटीयस्कता तत्समक्षे समुपतिष्ठते । स पष्ठेऽङ्क एव समुपस्थितो जायते नाटक कथायां । सूत्रधार स एव इत्येतत् तस्य कस्य न सचेतस पुर समुपस्थित भवति ? स एव युधिष्ठिरमभिषेक्तु द्रौपद्या केशसयमनोत्सवञ्चारब्धुमादिदेश । नाटकस्य समाप्तौ नाटककारस्तेनैव "तत् कथय महाराज, किम स्मात् पर समीहित सम्पादयामि" इति व्याहारयति । एतत्सर्वमेव श्रीकृष्णस्यानन्यगामिनीं महत्तां ज्ञापयति । वस्तुत एव श्रीकृष्ण एव यस्मात्साहाय्येन यद्राजनीतिचातुर्येण यल्लोकोत्तरप्रतापेन पाण्डवा स्वसाध्यस्य साधने तस्मिंश्च महासमरे विजयश्रियमधिगन्तु प्राभवन् यत्र द्रोणाचार्य भीष्मपितामह कर्णप्रभृतयोऽन्यनिखिलविश्वसुविदितशौर्यास्तद्विपक्षे समतिष्ठन्त ।

पुरुषपात्रेषु कर्णोऽश्वत्थामा च प्रमुखपात्रे स्तः। अश्वत्थामचरित्रे विशेषेण द्वे विशिष्टे वीरपुरुषस्य पितृभक्तत्वं च। पितृनिधनोदन्तमाकर्ण्य सोऽतितरां दूयते। तच्छोकेनाहतो भू शायानिषु स्वशोकस्य यामभिव्यक्तिं विदधाति स, सा नितरामेवाभिनन्दनीया। तदीय प्रभाव सर्वत्राभिव्याप्तो भूत्वा विजृम्भते। सेनानायकत्वमप्राप्य समुपस्थित प्रत्यूह विनाश्य स यां प्रतिज्ञां परिगृह्णाति सापि नास्वाभाविकी। यः प्रतिज्ञाबद्ध स यदा शत्रोर्दुःशासनं रक्षितुं न शक्नोति तदा सा कृता प्रतिज्ञा तस्मात्समनुतापमुत्पादयति किञ्च कर्तव्यापूर्तिग्लानिम्। रूपककारस्तस्य वक्ष्यमाणामेतामवस्थामालिख्य तच्चरित्रमुद्भता प्रापयन् प्राप्तो भवति :—

"मर्यादृश्यनृतं श्रेयो धिक्स्वर्गं नरकोऽस्तु मे।
भीमाद् दुःशासनं त्रातुं त्यक्तमप्यक्षमायुधम्॥"

नाटके कर्णो महोद्भटवीराग्रणीत्वेन चित्रितः परं तदभिहितानि खलु "एवं किलास्याभिप्रायो यथाश्वत्थामा मया पृथिवीराज्येऽभिषेक्तव्य इति। तस्याभावाद् वृद्धस्य मे ब्राह्मणस्य वृथा शस्त्रग्रहणमिति तथा कृतवान्। एतदर्थञ्च कौरव-पाण्डवपक्षपातप्रवृत्तमहासंग्रामस्य राजकस्य परस्परक्षयमपेक्षमाणेन तेन प्रधान पुरुषवध उपेक्षा कृता।" इत्येवमादीनि वचांसि तच्चरित्रमपकर्षं नयन्ति।

नारी पात्रेषु द्रौपदी भानुमती च मुख्ये। नाटकाद् द्रौपद्या वीरक्षत्रियाङ्गनात्वस्य परिचयः समवाप्यते। तस्याः क्रोधे वीरवंशोद्भूतायास्तनयाया, वीरवंशस्य वीरस्नुषायास्तेजस्विता विद्युदिव परिस्फुरन्ती समवलोक्यते। "णाह, उदासीणेसु तुम्हेसु मह मण्णु, ण उण कुविदेसु।" इत्यादीनि तस्या वचनानि कौरवकृतावमानना जनित क्रोधानलज्वालया सन्तप्यमानं तस्या मानसमस्मत्-पुरतः सन्निदधति। परमन्ततो गत्वा द्रौपद्याः कोपो नाटकीयकथावस्तुनो न बीजमिव प्रतिभाति। अवान्तरबीजत्वेनैव तस्याः क्रोधः प्रतीयते।

भानुमती नाटके पतिव्रतपरा नारी इव चित्रितास्ति। दृष्टाद् दुर्भात् स्वप्नात् तस्याः हृदयमत्यनिष्टाशङ्कि। सा सततं स्वभर्तृकल्याणकाङ्क्षयैवात्मानं कष्टे निपात्यापि व्रतं साधयति। "अज्जउत्त, जइवि एव्वं तहवि गुरुक्किदपडिण्णाभागेट्ठाणं वसु मह्वाए"-इत्येतानि तदुक्तानि पदानि तस्या विवेकवर्तित्वं प्रथयन्ति। "स्त्रीभावेऽपि वर्तमाना वरं भवती पुनर्महाराज" इत्येतद् कञ्चुकिनोदीरितं वचो युगपदेव तद्गतानेकान् गुणान् अभिव्यनक्ति।

नात्र सन्देहो भट्टनारायणेन पात्राणां चरित्र चित्रणे प्रशंसनीयं साफल्यं संलब्धमस्ति तच्चित्रितेषु चरित्रेषु न क्वापि कृत्रिमत्वं दृश्यते। सर्वत्रैव तत्र स्वाभाविकत्वमुपलभ्यते। अत एव तु नाटकमेतच्चरित्रप्रधानेषु नाटकेषु गण्यते।

यद्यपि रूपके रसस्तृतीयतत्त्वेन मतस्तथापि तत्राभिनेयत्वस्य स्थानं प्रमुखम्। अतस्तत्सर्वमप्यतिशय्य सन्निष्ठते। वेणीसंहारनाटकमभिनयदृष्ट्या न सफलं नाटकम्। न केवलं तत्राभिनयनैपुण्यं कुशलत्वमपि तु तत्र कथावस्तुनि गतिशीलं न वीक्ष्यते। व्यापाराणां च संयोजनमपि न प्रशस्तम्। न तस्य दृश्यकाव्यत्व निकषे शुद्धं सिध्यति। रस परिपाकदृष्ट्या तु नाटकमिदमेकं सफलं सुन्दरं प्रभावोत्पादकं नाटकं वर्तते। नाटकेऽत्र प्रधानो रसोऽस्ति वीरः। तस्य रसस्य प्रवाहः प्रथमाङ्कादेवानवच्छिन्नया गत्या प्रवहन्ननुभूयते। स रसान्तराणाञ्च स्रोतांस्यात्मनि सन्निदधानो नाटकभूभागमाप्लावयन्नन्ते आनन्दे परिणमते।

वीरभावभावितस्य भीमस्य तु—

(क) "मथ्नामि कौरवशतं समरे न कोपाद्
दुःशासनस्य रुधिरं न पिबाम्युरस्तः।"

(ख) "मन्थायस्तार्णवाम्भः प्लुतकुहरचलन्मन्दरध्वानधीरः,
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः॥"

(ग) "अन्योन्यास्फालभिन्नद्विपरुधिर वसामांस मस्तिष्क पङ्के।
मग्नानां स्यन्दनानामुपरिकृत पदन्यास विक्रान्तपत्तौ॥"

इत्यादिका पुंस्कला वीरोक्तयस्तु श्रावित एव श्रुतिगता भवन्त्येव अन्येषामपि दुर्योधनाश्वत्थामप्रभृतीनां वीरपुङ्गवानामुक्तयो नितरां वीरभावमुत्साहञ्च हृदये सञ्चारयन्ति सर्वेषामपि मानवानाम्।

द्वितीयस्मिन्नङ्के पार्थस्य जयद्रथ वधप्रतिज्ञया भीतां जयद्रथमातरं दुःशलां सान्त्वयता दुर्योधनेन कृतं स्वचमूवर्णनं वीररसस्यातिमनोज्ञं निदर्शनमस्ति—

"कोदण्डज्याकिणाङ्कैरगणितरिपुभिः कङ्कटोन्मुक्तदेहैः,
श्लिष्टान्योन्यातपत्रैः सितकमलवनभ्रान्तिमुत्पादयद्भिः।
रेणुप्रस्तार्कभासां प्रचलदसिलतादन्तुराणां बलानां
माक्रान्त्वा भ्रातृभिर्मे दिशि दिशि समरे कोऽस्य सम्पतन्ति॥

स्वपितृनिधनवृत्तं निशम्याश्वत्थाम्नो हृदयं शोक सन्तप्तं शत्रुञ्च प्रति दृप्त स्नि

तद्विध्वंसनप्रेरणया प्रेरितं च जायते । तदानीं भवति तन्मानसं वीरोत्साहवत् । तदुत्साहाभिव्यञ्जना विलोक्यतामस्मिन् श्लोके —

'पितुर्मूर्ध्नि स्पृष्टे ज्वलदनलभास्वत्परशुना
कृतं यद्रामेण श्रुतिमुपगतं तन्न भवता ।
किमद्याश्वत्थामा तदरिरुधिरासारविषमं
न कर्म क्षायान्ध प्रभवति विधातुं रणमुखे ॥"

अर्जुन-वृषसेनयोर्मध्ये युद्धं यद् वर्णितं तदपि वर्तते महोत्साहसञ्चारकम् । अर्जुनस्य युद्ध-कौशलं विलोक्य को न भवत्युत्साहवान् ? यथा नाटके वीररसस्य परिपाकोऽवलोक्यते तथैव रौद्ररसस्यापि । भीमदुर्योधनयोः क्रोधोद्गारास्तु नाटके श्रूयन्त एव परं रौद्ररसपरिपूर्णमानाः गर्जनाश्च यतस्ततः आकर्ण्यन्ते । अश्वत्थाम्न एतस्मिन् वचने रौद्रस्य रसादो गृह्यताम्—

"यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम् ॥"

यद्यपि नाट्यशास्त्रीयनियमात्तु रङ्गमञ्चे युद्धदृश्यमुपस्थापयितुमस्ति निषेधः परमत्र नाटके यत्र यत्र समरवृत्तं वर्णितं तत्र बीभत्सरसस्य सञ्चारः सर्वथैव दृग्गोचरी-भवति । दृश्यताम्—

"इदमसुण्णमाणसोणिदहिं कुम्भसहस्सं वशाहिं शञ्चिदम् ।
अणिशं अ पिबामि शोणिअं वलिशशदं शमले हुवीअदु ॥"

यद्यपि नाटकस्य प्रधानवीररसात्मके वीर-रौद्र-बीभत्सरसानां प्राचुर्यमस्ति परं तत्र द्वितीयाङ्के शृङ्गाररसोऽपि आस्वाद्यते । भीमनिधनस्य वृत्तान्तं श्रुत्वा द्रौपदी-युधिष्ठिरयोः कृते करुणविलापे करुणरस आस्वाद्यतां याति ।

"आत्मारामा विहितरतयो निर्विकल्पे समाधौ
ज्ञानोद्रेकाद् विघटिततमोग्रन्थयः सत्त्वनिष्ठाः ।
यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्तात्
तं मोहान्धः कथमयममुं वेत्तु देवं पुराणम् ॥'

इत्यत्र दार्शनिकी भावना चित्र्या—

"दायादा न ययोर्बलेन गणितास्तौ द्रोणभीष्मौ हतौ
कर्णस्यात्मजमग्रतः शमयतो भीतं जगत् फाल्गुनात्।
वत्सानां निधनेन मे त्वयि रिपुः शेषप्रतिज्ञोऽधुना
मानं वैरिषु मुञ्च तात पितरावन्धाविमौ पालय॥"

इत्यत्र निराशाया वेदनाया आर्त्तताया कीदृशी त्रियती च प्रियाभिव्यक्तिः सञ्जातास्ति।

नाटकार्थं गृहीतं कथावस्तु यद्यपि प्रकृतिवर्णनाय नावसरं प्रददाति परं कविना तदर्थमवसरमधिगन्तुमीहा कृतैवास्ति। नाटकेऽत्र प्रकृतेर्मृदुलं भयङ्करञ्चोभयविधं दृश्यं चित्रयन् कविः प्राप्यते। प्रभातस्य मनोभिरामं दृश्यमीक्ष्यताम्—

"प्रालेयमिश्रमकरन्दकरालकोशैः
पुष्पैः समं निपतिता रजनी प्रबुद्धैः।
अर्कांशुभिन्नमुकुलोदर-सान्द्रगन्ध-
समूचितानि कमलान्यलयः पतन्ति॥

प्रकृतेर्भीषणञ्च दृश्यं विलोक्यताम् —

'दिक्षु व्यूढाङ्घ्रिपाङ्गस्तृणजटिलचलत् पांसुदण्डोऽन्तरिक्षे
झाङ्कारी शर्करालः पथिषु विटपिनां स्कन्धकोषैः सधूमः।
प्रासादानां निकुञ्जेष्वभिनवजलदोद्गारगम्भीरधीर-
श्चण्डारम्भः समीरो वहति परिदिशं भीरु ! किं सम्भ्रमेण॥"

नाटके प्रधानरसानुरूपैव शैल्यपि शोभते। यादृशो रसस्तादृश्येव तत्र भाषा विभाति। यं रसं कविः प्रवाहयितुकामोऽस्ति तद्भावाविर्भावने तस्य भाषा सर्वथोपयुक्ता। भाषायां कवेरेकाधिकारः। वीररसवत्यां रचनायां गौडी रीतिः समुचिता भवति। नाटकेऽस्मिन् वीररसप्रधाने सैव रीतिः परिस्पन्दते। गम्भीरध्वनिमूलकपदानि परिगृह्य समासान्तानि च पदानि प्रयुज्य कविना सर्वत्र ओजोगुणस्य सृष्टिः कृतास्ति। गौडीरीतिसमुद्भासितायां समासबहुलपदगुम्फितायां गम्भीरायां ओजोगुणविभावितायां भाषायां सद्भावात् वीरो रौद्रश्च द्वावपि रसौ नितरां विशदौ भूत्वात्मानं समुपस्थापयितुं प्रभविष्णू सञ्जातौ स्तः। दृश्यकाव्ये एषा शैली यद्यपि न प्रिया मता परं रसपरिपाकस्तु तद्विधेनैव मार्गेण भवितुमर्हति। अतः काव्यान्तरदृष्ट्या तु औचित्यायैव कल्पते स प्रकारः।

नाटकेऽस्मिन् अनुप्रास-यमकादिशब्दालङ्काराणां प्रयोगस्तत्रस्यैव परम् 'आश-स्त्रग्रहणात्-( २, ७ )' इत्यादौ विशेषोक्ति विभावनयोः, "विकिरधवलदीर्घात ( २, १६ )" इत्यादौ कारकदीपकस्य, "किं नो व्याप्तदिशाम् ( ३, १७ )" इत्यादावुपमारूपकयोः, "कुर्वन्त्वाप्ता हतानाम्" ( ५, ३६ )" इत्यादौ सहोक्ते सौन्दर्यमेवमेवान्यत्रान्येषाञ्चालङ्काराणां नाट्यालङ्काराणां च सुषमा कविना मार्दर्शितास्ति। अलङ्कारा इव नाटके अनेकेषां छन्दसां प्रयोगो दृश्यते। तत्र शौरसेनी मागधीप्रभृतिप्राकृतभाषाः अपि सम्यक् प्रयुक्ताः प्राप्यन्ते कथनस्य सारोऽयं नाटकमेतन्नाट्यकलादृष्ट्या यद्यपि नोत्तमं परं काव्यकलादृष्ट्योत्तममनपूर्वं विदुषां समाजे सम्मानं लभते।



# रत्नावली

शास्त्रीयपद्धतिमाश्रित्य विरचितेषु दृश्यकाव्येषु सम्राजो हर्षवर्द्धनस्य 'रत्नावली' नाम दृश्यकाव्यमेकं श्रेष्ठं दृश्यकाव्यमस्ति । तच्छ्रेष्ठताया कारणमिदमस्ति यत् तत्र तेषामुदाहरणानां सत्त्वाधिक्यतमा वर्तते यानि नाट्यशास्त्रे कस्यचन रूपकस्य विशिष्टताया प्रदर्शनाय अपेक्षते ।

रत्नावली नाट्यकलादृष्ट्यैव नोत्तमा अपि तु सा दृश्यकाव्यदृष्ट्यापि एकाभिनन्दनीया कृतिर्वर्तते। नाटिकाकारेण तत्प्रणयने तदद्भुत कौशलमभ्युपागामि येन तत्र शास्त्रीयपद्धतिविषयक सौन्दर्य कलात्मकञ्च मृदुल लालित्यमुभयमपि नितरा मनोऽभिराम भूयत्वमानमुपस्थापयितु क्षमे सञ्जाते स्त । कुशलकलाकारस्य तूलिका मन प्रीतिकरैरङ्गै वर्णैरालेख्यस्य रूपे नैसर्गिकीमाभा किरन्ती प्राणान् प्रवाहयति । न कलाकार शास्त्रीयान् सिद्धान्तानुपेक्षत । स तेषु रमते । ते च तस्मिन् रमन्ते । कलाकारस्यैतद्धि निश्चित वैशिष्ट्य दृग्गोचरीभवति हर्षे, अत एव शास्त्रप्रतिपादित सन्ध्यङ्गक्रम विधान स रत्नावल्या यथाविधि सरक्षन् समवाप्यते । मुखसन्धेर्द्वादशस्वङ्गेषु करणमेकादशमङ्ग वर्तते विलोभनञ्च चतुर्थं पर रत्नावल्या प्रथम करणमङ्कितम् —"नमस्ते भगवन् कुसुमायुध अमोघदर्शनो मे इदानीं त्व भविष्यसि" इति । ततश्च तत्र विलोभनम् —

> "अस्तापास्तसमस्तभासि नभस पार प्रयाते रवा
> वास्थानीं समये सम नृपजन सायन्तने सम्पतन् ।
> सम्प्रत्येष सरोरुहद्युतिमुष पादास्तवासेवितु
> प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्वीक्षते ॥' इति ।

अत्र विलोभनन सहोद्भेदाभिधमपि सन्ध्यङ्ग विभाति । भवति कलाकार स्वतन्त्र । तत्र राजमाना स्वातन्त्र्यप्रियता वस्तुत कला धवलयति प्रसाधयति च ताम् । अगदाय हर्षे कलाकारत्वमन्वर्थता याति ।

अर्थप्रकृतय, कार्यावस्था, सन्धयश्च सन्ति वस्तुविकासस्य साधनानि । हर्षो रत्नावल्या तत् तत्साधनानि सम्यक् प्रयुञ्जान प्राप्यते । रत्नावल्या

कथावस्तुनः प्रधानं ध्येयमस्ति रत्नावल्युदयनयोरुद्वाहः । कविना विष्कम्भके यौगन्धरायणस्य—

"द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥"

इत्येतयोक्त्या साध्यस्य बीजं स्पष्टमेव निर्दिष्टम् । पुनस्तदुपरितनाच्छ्लोकात्—

"प्रारम्भेऽस्मिन् स्वामिनो वृद्धिहेतौ दैवेनेत्थं दत्तहस्तावलम्बे ।
सिद्धेर्भ्रान्तिर्नास्ति सत्यं तथापि स्वेच्छाचारी भीत एवास्मि भर्तुः ॥"

इत्येतच्छ्लोकं यावद् बीजमेवोपस्थापयति कविः । यौगन्धरायणस्येयमुक्तिर्व्यापारस्यावस्थां समुपस्थापयति । बीजाभिधाया अर्थप्रकृतेः आरम्भावस्थायाश्चान्वयो विधीयते मुखसन्धिनैव । अत्र च मुखसन्धावेव बीजस्योद्भव उद्देश्यानां संस्तव छन्दोसाहनादिकञ्च निरूप्यन्ते । एतेषां सद्भावो रत्नावल्याः प्रथमेऽङ्के विद्यते तस्मात् तत्र मुखसन्धिरेव परिस्फुरति ।

"सम्प्रत्येष सरोरुहद्युतिमुषः पादांस्तवासेवितुम् ।"

इत्यादिकां वैतालीयां गिरमाकर्ण्य सागरिका "कहं अअं सो राआ उदअणो जस्स अहं तादेण दिण्णा" इत्यादिकं यदभिदधाति तत् तस्यास्तमसे प्रादुर्भूतं प्रेमाभिव्यनक्ति कथाविकासने च तत्त्वाधने साहाय्यकृत् । कविरित्थमिह अर्थप्रकृतिं बिन्दुमुपस्थापयति । सागरिकोदयनसमालिङ्गितुं यद् यतते तदेव प्रयत्नाख्या कार्यावस्थास्ति बिन्दुप्रयत्नयोः संगतिः प्रतिमुखसन्धिमध्ये भवति । रत्नावल्या द्वितीयाङ्के प्रतिमुखसन्धिरेवातो विद्यते । रत्नावल्या नाटिकात्वात् तत्र पताकाप्रकर्योः सन्निवेशो नापेक्ष्यत इत्येतद् विमृश्य न कविना ते प्रदर्शिते । ते विना कार्यावस्थापि नायकस्यानुगुणैति तस्मात् तदनुपस्थापनं न कामपि हानिं जनयति । तृतीयाङ्के रत्नावली ( सागरिका ) वेषं परिवर्त्य राजानं संगन्तुमभिसरणोपायमवलम्बते परं न वर्तते स उपक्रमो निरापदः । वासवदत्ता तमुपायं व्याहन्तुं यतते । भवति च स उपायो व्याहतः । राजा यद्यपि तत्राकस्मादेव सागरिकामाप्नुते परं तदवाप्तिसमये "सो एव्वं भोदु जदि अआदा वासवदत्ता भविअ ण आअदि देवी वासवदत्ता" इत्येतदभिधाय विदूषको हि वासवदत्ताया आगमनाशङ्कामुत्पादयति इत्येतद्विधाया स्थितेर्विद्यमानत्वात्, तृतीयाङ्कः प्राप्त्याशाभिधावस्था भजते । तथाविधत्वात्, तत्र गर्भसन्धिः समुपतिष्ठते । "देवीप्रसादनं मुक्त्वा नान्यमत्रोपायं पश्यामि"...इत्यादिकानि वचनानि फलप्राप्तिं सङ्केत-

यन्ति। कविना नियताप्त्यवस्थामेव दर्शयितु हि तद्विषयक प्रक्रम समुपन्यस्त। चतुर्थेऽङ्के हि अग्निबाधा यावद् रत्नावल्या प्राप्ति सम्प्रत्यूहा प्रदर्शितास्ति परमन्ते तदवाप्त्यवसरो विघ्नविहीनश्च समुपस्थापित। एतत् सर्वं चतुर्थस्याङ्कस्यावमर्श-सन्धिमस्त प्रथयति। तस्मिन्नेव चतुर्थेऽङ्के सिंहलेश्वरस्य सचिवो वसुभूति साग रिका निर्वर्ण्य बाभ्रव्य "सदृशीय राजपुत्र्या बाभ्रव्य" इति यद् व्याहरति तस्य तद्व्याहरणान्निर्वहणसन्धि समारब्धो भवति। यौगन्धरायणकृत सर्वरहस्यो न्मीलने रत्नावली परिग्रहीतुमुदयनम्प्रति वासवदत्ताविहितेऽभ्यर्थने च फलावाप्ति स्फुटतयैव दर्शकाना समक्षेऽवतरति। अतश्चतुर्थोऽङ्क उपसहृतिसन्धि जुषते। कथावस्तुनि चमत्कारमवतारयितु नाटिकाकारेण पताकास्थानकानामपि प्रयोगोऽस्मिन् कृत। धनञ्जयेन अन्योक्तिरूप पताकास्थानकमथ च समासोक्तिरूप पताकास्थानकमित्येतद् द्वयमेव प्रतिपादितम्। कविनानयोर्द्वयोरपि सन्निवेशो विहित स्वरचनायाम्। "यातोऽस्मि पद्मनयने" इत्यादौ अन्योक्तिरूप पताकास्थानक किञ्च "उद्दामोत्कलिका विपाण्डुररुचम्" इत्यादौ समासोक्तिरूपं पताका स्थानक शोभमान परयन्त्येव भावुका। इद सर्वं नाटिकाया अस्या शास्त्रीयपद्धत्यनुगामित्व बोधयति।

नाटिकाकार प्रस्तावनानन्तर विष्कम्भकद्वारेण नाटिकास्थाया कथाया पूर्ववर्तिनोंऽशस्याभासमात्र प्रददाति। स च अशोऽयम्—'सिंहलेश्वरस्य सुतां रत्नावलीं य परिणे यति स चक्रवर्तित्वमवाप्स्यति' इत्येतज्ज्योतिर्विद्भ्यो कौशाम्बीश्वरस्योदयनस्य मन्त्री यौगन्धरायणो रत्नावलीमुदयनार्थं सिंहलेश्वर याचते पर सिंहलेश्वर उदयनस्य वासवदत्तारागीवत्वात् तस्य ता प्रार्थनां प्रत्यादिशति। ततो यौगन्धरायणो "लावाणके ग्रामेऽग्निना वासवदत्ताऽदह्यत"—इत्येतमनृतमुदन्त वितत्योदयनस्य कृत सिंहलेश्वराद् रत्नावल्या अधिगमनेऽधिगच्छति साफल्यम्। पर दैवाद् रत्नावलीवाही पोतोऽर्णवे निमज्जति। फलकेनैकेन सायात्रिका उद्धरन्ति रत्नावलीम्। आनीता च सा यौगन्धरायणस्य सविधे भवति। यौगन्धरायणस्तां 'सागरिका'त्यतन्नाम्ना प्रत्याप्योदयनस्यावरोधे देव्या वासवदत्ताया सेवायां नियुनक्ति यनादयन स्यादावर्जितस्ता प्रति। रत्नावलीकथयेतदशानन्तर-मारब्धा भवति।

नाटिकाया प्रथमङ्क मदनमहोत्सवस्य दर्शनीय दृश्य समुपस्थित भवति। सागरिका तस्मिन्नेव कमनीये सदवसरे उदयन दर्शनस्य समवाप्ते पुण्यमयां

वेलामनुते प्रच्छन्नाया दशायाम्। तदुपश्रुत्य प्रणयकोपमुक्त्वा प्रथमोऽङ्को भवत्यवसितः।

द्वितीयस्मिन्नङ्के उदयनविरहार्ता सागरिका स्वमनोविनोदनाय राजानमालिखन्ती वीक्ष्यते तत्सख्या सुसङ्गतयोदयनवियोगवह्निदह्यमाना तामनुचरन्ती समुपलभ्यते। राज्ञ उदयनस्यापि एकपार्श्वे सागरिकाऽऽलिखितं तच्चित्रं, यत्र सुसङ्गतया सागरिकापि आलिखितासीत्, अवलोकयति। चित्रं वीक्ष्य नृपः सागरिकायामनुरज्यति। सुसङ्गताया प्रयत्नेन सागरिकोदयनयोः सान्निध्यमपि सञ्जायते। संयोगवशात् तच्चित्रं वासवदत्ताहस्तगतं भवति। नृपः चित्रं विलोक्य वासवदत्ता कुप्येदिति विचार्य चिन्तां प्रतिपद्यते—इत्येतदवस्थितं प्रदर्श्य द्वितीयाङ्कोऽपि समाप्ततामुपैति।

सागरिकोदयनयोर्मिलनार्थं सुसङ्गता विदूषकाभ्यां योजितयोजनाया वासवदत्तावगतत्वात् सर्वमपि समीहितं वैफल्यं याति। राजा वासवदत्तायाः पुरस्तात् भृशं निह्नुते। राजानुनयति तां परं न तस्या रोषो दूरीभवति। यदैषा सर्वापि स्थितिः सागरिकायुत्निमापद्यते तदा सात्यन्तं दूयते भवति च सा आत्मानं व्यापादयितुमुद्यता परं भगवदनुकम्पया न सा दुर्घटना भवितुं पारयति। वासवदत्ताऽपि उभावपि सागरिकाविदूषकवसन्तकौ स्वायत्ततां नयति। राज्ञो वेदनां चिन्तां च वर्धयन्नङ्कस्तृतीयः समाप्तिमेति।

राज्ञी वासवदत्ता सागरिकां बन्दिनीं विधाय निगूहयति च क्वापि ताम्, अथ च प्रचारयति यत् सा उज्जयिनीं प्रस्थापिता। तदीया रत्नमाला कस्मैचन भूदेवाय देया स्यादित्येतां तत्कृतामाकाङ्क्षां जानत्यपि सुसंगता तां (रत्नमालाम्) विदूषकायैव प्रयच्छति। विदूषकस्तया रत्नमालया राजानं रञ्जयितुमीहते। दूतो राजानं विजयवार्तां 'रुमण्वता मन्त्रिणा कोशलेषु विजयो लब्धः' इत्येतेन शुभेन वृत्तान्तेन प्रीणयति। एतस्मिन्नेवान्तराले काञ्चनमालाऽऽहूतः कश्चन ऐन्द्रजालिकः स्वकीयेन्द्रजालविद्यया कौतुकं वितनोति। वासवदत्तासहितो नृपतिः यदा तत्कौतुकजनितमानन्दं गाहमानो राजभवनमध्यास्ते स्म तदैव बाभ्रव्यो नाम कञ्चुकी यो रत्नावल्याः सिंहलद्वीपं गतः अर्थात् किञ्च सिंहलेश्वरस्य मन्त्री वसुभूतिर्यो रत्नावल्या साकमागच्छन् पोतस्य निमग्नत्वात्काष्ठधारणया-हितोऽभूत्, आगतौ। तौ विदूषकस्य ग्रीवां सागरिकाया रत्नमालयालङ्कृतां प्रेक्ष्य 'इयं तु रत्नमाला रत्नावल्याः प्रतीयते' इति शङ्केते। वसुभूतिर्वासवदत्ता-

रहनमव्वन्धिघटनोदन्तमारभ्य जलयान निमग्नता रत्नावलीप्रावनादिविषयक सकल नपि व्यतिकर श्रावयति राजानम्। राजापि यदा तत् सर्वं शृण्वन्नासीत् तदैवान्तःपुरेऽग्निज्वाला प्रसरन्त्यो दृष्टा भवन्ति। विलोक्यानिना दह्यमानमन्तःपुर वासवदत्ता भीता भवन्ती तत्र बन्दिनीत्वेन स्थिता सागरिकामग्ने पातु सोद्वेग नृप प्रार्थयते। राजाऽपि तत्क्षण सागरिकाजीवनरक्षार्थमग्नावेव प्रविशति। वासवदत्ता विदूषक वाभ्रव्य वसुभूतयश्च महीपमनुधावन्ति। पर सागरिकोद्धारेणैव सह अग्निरपि शान्त्यपकरमात्। वस्तुत स अग्निरैन्द्रजालिककौतुकमेवासीत्। नासीत् परमार्थतोऽग्नि। वसुभूति वाभ्रव्यौ 'सा सागरिका तु तत्त्वतो रत्नावल्ये' वेति विज्ञाय नितरा प्रीयेते। तस्मिन्नेवानेहसि यौगन्धरायण सर्वमपि रहस्यमुन्मीलयति। राजा सर्वमपि तन्निशम्य विस्मय हर्षञ्च विन्दति। वासवदत्ताया कृतेन मन्त्रिनयेनानुरोधेन च नृपो रत्नावलीं पत्नीत्वेन परिगृह्णाति—इत्थमत् सर्वमपि वस्तुजात निधाय भरतवाक्येन सह नाटिका भरत्युपसहृता।

नि सशय नाटिकाया कथावस्तु नितान्त सुघटित सद् युक्तियुक्तया रीत्या विश्राममभ्युपैति। नाटिकाकारेण हर्षेण स्वकीयया निशितया प्रतिभया मनोभिरामया च कल्पनया तासा ललितललिततराणा घटनाना योजनाऽत्र विहिता या नैसर्गिकता चमत्कारिता च परिष्वजमाना कथाया कामपि रुचिरा पूर्णां गति सञ्चारयन्ति। सारिकया सागरिका सुसगतयोरालापस्य पुनरावर्तन यत् कविना कारित तेन च उदयनस्य स्वान्ते सागरिकापरकप्रेमाविर्भावनस्य या प्रभावपेशला कान्तभावनोद्भाविता तत् पुनरावर्तन सा च भावना भव्या नाटिकामतितरा गतिमतीं विदधाते। एवमेव नाटिकायां सागरिकाभिसारसम्बन्धिनी किञ्च तदभिमरणोद्वेदविषयिका च या घटना समुल्लसति त द्वे अपि घटने हर्षस्य हृद्याया कल्पनाया परमसमुज्ज्वलनिदर्शनत्वेन विभासते। ऐन्द्रजालिकयुक्त्या वना तु आनन्दपूर्णमद्भुत वातावरण सृजन्ती अनिर्वचनीयायामुज्ञासवत्या भासुराया भूमिकाया नाटिका सवृणुते।

अस्ति नाटिकाया नायक उदयनो धीरललितनायक। तस्य चरित्रे विलासिता, प्रेमपरता, कलाप्रियता, प्रणयपरायणता च दृश्यन्ते। प्रकृत्याऽसि स शिष्टसुकोमलश्च। परिजनेषु च तस्य सहृदयभावो विद्यते। यद्यपि नाटिकानियमवशात्तन्मध्यान्नाटिकाकारेणोदयनस्य विलाससुललित प्रणयप्रवणमेव रूप प्राधान्येन प्रदर्शित पर सापि घटना नाटिकायां कविना सङ्केतितास्ति यया तस्य राजनी-

निर्निमेषनेत्र त्रिलक्षणं च शौर्यमनवगतं जायते । इदमपि स्पष्टं विदितं भवति यत् स प्रणयलोलना मधुरतरतरङ्गासु वेलासु विग्रहवेदनावत्सु क्षणेषु च न राजकार्येभ्यो भवत्युदासीनः । विजयवर्मणः कोशलविजयवृत्तान्तमाकर्ण्य स रुमण्वन्तमपि स्वकीयहार्दिकधन्यवादान् सहर्षं व्याहरन् कोशलनरेशस्य च शूरता श्लाघते—"साधु कोशलपते साधु, मृत्युरपि ते श्लाघनीयो यस्य शत्रवोऽप्येवं पुरुषकारं वर्णयन्ति" इति । तदात्वमन्तरेण सागरिकाऽऽनयनादिप्रसङ्गाद् यौगन्धरायणस्य शङ्कितहृदयता किञ्च 'कथममौ मामनिवेद्य किञ्चित् करिष्यती'त्येतत् तद्वचस्तदीय राजनीतिम्प्रति सतत जागरूकत्वमभिव्यनक्ति ।

वसन्तकविदूषकस्य च चरित्रचित्रणे कविना श्लाघ्या सफलताधिगम्यते । तेन तेन पाटवेन तस्य चरित्रमालिखितं येन विदूषकापेक्षिता सर्वेऽपि गुणाः लोचनगोचरता गच्छेयुः । नर्मसाचिव्य-रहस्य-रक्षण-कुशलत्व-मनोविनोदन-विचक्षणत्व-सुख-दुःखसहचरत्व-हास्यप्रवणत्वादिसद्गुणाः कुशलेन कलाकारेण यथोचितेषु स्थलेषु अस्य समक्षे निधीयन्ते । राज्ञि विदूषकस्य प्रगाढभक्तिरादर्शीयता च वर्तते । स नृपमानसप्रसादनाय वासवदत्ताप्रदत्तं निग्रहं ससुखं सहते, अनल-प्रविष्टे सति भूपतौ सोऽपि तमनुव्रजति । "भोदि सच्चं सच्चम् । भणामि बम्हसुत्तेण जइ ईदिसो कदावि अम्हेहिं दिट्ठपुव्वो", किञ्च "सहत्थदिण्णेहिं मोदएहिं चिरस्स दाव कालस्स उदरं मे सुपूरिदं किदम्", अथच "भो वअस्स ण एदे महुअरा णेउरसद्दं अणुहरन्ति । णेउरसद्दोज्जेव एसो देवीए परिअणस्स···" इत्यादिकतदुदीरितवाक्येभ्यस्तस्योपरिभणितानामनेकेषां गुणानां संस्तवः स्फुटतया समवाप्यते । 'द्विपदीखण्डं' स 'चर्चरी' इति निगद्य तु स्वविदूषकत्वं नितरामेव विवक्तं विधाय समुपन्यस्यति ।

रत्नावल्या मुग्धात्वं विभाति । उदयनप्रथमसाक्षात्कारकाले सञ्जाता तद्दशा तस्या मुग्धतां व्यनक्ति—"एदं पेक्खिअ अतिसद्धसेण ण सक्कणोमि पदादो पदं विगन्तुम्" । तस्यामनिन्द्यं पुनीतमेव सौन्दर्यं समुच्छलदवलोक्यते । नृपोदयनस्य हृदये न मात्रनरेन्द्रियेनदर्पमभ्यवमितः प्रयत्नोऽपि तस्या अनुपमसुन्दरता प्रकटीकरोति । राज्ञः—

"दृशा पृथुतरीकृता जितनिजाब्जपत्त्रत्विषा-
श्चतुर्भिरपि साधु साध्विति मुखैः समं व्याहृतम् ॥

शिरांसि चलितानि विस्मयवशाद् ध्रुवं वेतसा
विधाय ललनां जगत्त्रयललामभूतामिमाम् ॥"

इत्येषा तामधिकृत्योक्तिरपि तस्या अलौकिकसौन्दर्यवत्त्वं वेदयति। अस्ति सा कलापारगता सुन्दरी। चित्रकलायां सा नैपुण्यविशेषं निदधाति। सचित्रफलकं प्रदामति पुनः पुनरतस्तरी सुसगता। राजा तदालिखितचित्रं विलोक्य तस्या मनुरक्तः सञ्जायते। परिस्थितिवशात् सा भवस्यपि राजतनया दासीवोदयनान्तःपुरेऽहानि गमयति एतद्वेतोस्तस्या मनो न जातु ग्लानिमुपैति। तां दशां नीतापि सा स्वपितृकुलमर्यादारक्षायामस्ति सावधाना। यदा पृष्टा सा सुसंगतया बाष्पार्द्रनयना भवति। तूष्णीं भूत्वैव सा स्वस्यां वशायोद्गतां च युगपदेव प्रकटीकुरुते। तादृशं तज्जीवनं न तस्यै रोचते क्षणमपि, परमुदयनगतं प्रेम जीवनं धारयितुं तां सनिर्बन्धमनुरुणद्धि। शसति च सा—"ता परप्पेमणडुम्मिदपि मे जीविदं एदस्स दंसणेण दाणिं बहुमतं संवुत्तम्"। नैजान्वयाभिमानशालिन्यां तस्यामात्मसम्मानभावना बलीयसी भूत्वा स्फुरति। सा अपमानं सहमाना न स्वजीवनं वोढुकामा। तदभिसरगरहस्ये सति ज्ञाते वामदत्तया सा अपमानाद् वरं मृत्युरिति विमृश्य लतापाशेनात्मानं जिघांसते। न तस्या प्रेम औचित्यमतिक्रमते। सुसंगता तत्प्रेमैतमभिनन्दति—"न कमलाकरं वर्जयित्वा राजहंस्यन्यत्राभिरमते"।

अस्ति वासवदत्ता राज्ञ उदयनस्य प्रधानमहिषी। तस्सृहणीयप्रेमहेतो राजोदयनः सर्वथा तदधीन एव। न कोऽपि क्षण एतादृक् यस्मिन् सा राज्ञः प्रेमपारावारे न निलीना प्राप्येत। तज्जीवनमेव तज्जीवनं सदानुकूल्यमेव तस्यास्तस्माद् राजा न कदापि तस्यां प्रमाद्यति। अत्र—

"प्रिया मुञ्चत्यद्य स्फुटमसहना जीवितमसौ।
प्रकृष्टस्य प्रेम्णः स्खलितमविषह्यं हि भवति ॥"

इत्येतदादिकं नृपवचः प्रमाणम्। वासवदत्ताया परमोदारहृदयता तस्या पदममनस्कता च तदानितरामेव स्फुटतया प्रकाशमुपैति यदा राजप्रासादमपि गृहीतं प्राप्य सा सागरिकां बन्दिनीत्वं नीतां सागरिकामागते पातुमवनीन्द्र प्रार्थयत—'एसा क्खु मए णिग्घिणाए इध णिअडेण संजमिदा माअरिआ चिवदिदि। ता न णिरिनाअदु अज्जउत्तो'। परिमन्तु तस्या दाक्षिण्यं सदैवावलाम्बि भवति। विदूषकं निगृह्णन्त्यपि सा सम्मानपुरस्सरं मोचयति।

सुरतसुखमनुभवन् दर्शि—( कण्ठे गृहीत्वा निमीलिताक्ष स्पर्शसुखं नाटयन् ) "अहो घन मेऽपगतोऽद्य सन्ताप । प्रिये, समाश्वसिहि, समाश्वसिहि",

"व्यक्त लग्नोऽपि भवती न दहत्येव पावक ।
यत सन्तापमेतस्य स्पर्शस्ते हरति प्रिये ॥"

तदेव सयोगशृङ्गारस्य परिपाक साधुसफलतया चोपपादित । सागरिकोदयनयो प्रेम विप्रलम्भशृङ्गारे पूर्वानुरागत्वेन समुपतिष्ठते । वियोगाग्निप्रज्वालिताया सागरिकाया वचांसि पद्यसारानि तन्मानसवेदनामुन्मीलयन्ति—"हद्द अ अदिनिमस जम्मदो पहुदि सर सम्बुद्दि इम जण परिहइअ एज्जमेत्त दसण-परिचिद जण अणुगच्छन्तो ण लज्जसि ' " सागरिकाया वचस्येतस्मिन् उद्वेग-प्रलापोन्मादव्याधिप्रभृतिविरहदशा व्यज्यन्ते । उदयनस्यापि विरहदशाधिगम कविना कुशलतया कृतम्—

"बाणा पञ्च मनोभवस्य नियतास्तेषामसख्यो जन
प्रायोऽस्मद्विध एव लक्ष्य इति यल्लोके प्रसिद्धि गतम् ।
दृष्ट तत् त्वयि विप्रतीपमधुना यस्मादसख्यैरय
विद्ध कामिजन शरैरशरणो नीतस्त्वया पञ्चताम् ॥"

विरहे प्रियजनस्य वस्तु नितरां प्रेमोपायनपरस्य मानस धिनोति—इत्येतत् तथ्य च कान्तियमुपायनीकरोति —

"कण्ठाश्लेष समासाद्य तस्या प्रभ्रष्टयाऽनया ।
तुल्यावस्था सखीवेय तनुराश्वास्यते मम ॥"

तदेव पक्षद्वयमपि परिपाक गमितमिह ।

एतस्यां नाटिकायां शृङ्गारस्यास्वादोऽस्त्येव सर्वत्र परमन्येऽपि रसा अनेके तत्र तत्राऽऽस्वाद्यन्ते रसिकजनै । सहृदयजगत्—

"अस्त्रव्यस्तशिरस्त्रशस्त्रकषणै कृत्तोत्तमाङ्गे क्षण
व्यूढासृक्सरिति स्वनत्प्रहरणे वर्मोद्वमद्वन्दिनि ।
आहूयाजिमुखे स कोसलपतिर्भग्ने प्रधाने बले
एकेनैव रुमण्वता शरशतैर्मत्तद्विपस्थो हत ॥"

इत्येतस्मिन् श्लोके वीररसमास्वादयति । तत्र चास्यां नाटिकायां भयानकरस-भास्वाद्यतां याति यत्र कपिरुन्मुक्तो भूत्वा सर्वत्र सम्भ्रमं वितनुते क्वचि पदानि प्रासादे प्रसरति । तत्र करुणरसो रसिकान् परिप्रीणयत्युदेति यत्र वसुभूतितो

रत्नावल्याः सागरे निमग्नत्वं निशम्य मृदुलमानसा वासवदत्ता रोदितुमारभते । ऐन्द्रजालिकदर्शिते चमत्कारपूर्णे कौतुके कविनाद्भुतरसो विनिबद्धः । इत्थमस्यां नाटिकायां सत्यपि प्रधाने शृङ्गारे रसान्तराणामपि सफलाभिव्यञ्जना कविना कृतास्ति ।

हर्षः प्रकृतिप्रेमी प्रतीयते । अतएव नु तेनान्तःपुरप्रेमलीलां वर्णयताऽपि प्रकृतिवर्णनार्थमवसरोऽन्ततोगत्वा लब्ध एव । तेन प्रकृतिर्द्विविधरूपेण वर्ण्यते उद्दीपनरूपेणालङ्कारमार्गेण च । अधस्तने श्लोके प्रकृतेरुद्दीपकं रूपमन्तर्भावितम्—

"उद्यद्विद्रुमकान्तिभिः किसलयैस्ताम्रां त्विषं बिभ्रतो
भृङ्गालीविरुतैः कलैरविशदव्याहारलीलाभृतः ।
घूर्णन्तो मलयानिलाहतिचलैः शाखासमूहैर्मुहु-
र्भ्रान्तिं प्राप्य मधुप्रसङ्गमधुना मत्ता इवामी द्रुमाः ॥"

सम्प्रत्यलङ्कारमुखेन प्रकृतेः श्रीर्निभालनीया—

"देवि त्वन्मुखपङ्कजेन शशिनः शोभातिरस्कारिणा
पश्याब्जानि विनिर्जितानि सहसा गच्छन्ति विच्छायताम् ।
श्रुत्वा त्वत्परिवारवारवनितागीतानि भृङ्गाङ्गना
लीयन्ते कुसुमान्तरेषु शनकैः सञ्जातलज्जा इव ॥"

कविः सूक्ष्मतयापि प्रकृतेर्निरीक्षणे पटीयान् । तदीयमिमं गुणं प्रस्तौति श्लोकोऽयम् :—

"पुरः पूर्वामेव स्थगयति ततोऽन्यामपि दिशं
क्रमात् क्रामन्नद्रिद्रुमपुरविभागांस्तिरयति ।
उपेतः पीनत्वं तदनु भुवनस्येक्षणफलं
तमःसंघातोऽयं हरति हरकण्ठद्युतिहरः ॥"

नाटिकायाः भाषा सरला अप्रतिहतप्रवाहा सुललिता च वर्तते । न तत्र दुरूहाणि पदानि सन्ति, न च समासबहुलता । सर्वत्रैव सा रसानुरूपास्ति । वाक्यानि न सन्ति तत्र दीर्घदीर्घतराणि । "कष्टोऽयं खलु भृत्यभावः"; "मनश्चलं प्रकृत्यैव" इत्यादिसूक्तिभिः समुल्लसति सा । सूक्तिसद्भावात् तत्रार्थे गम्भीरतापि समागतास्ति । तत्रत्य प्रसादो माधुर्यं च कालिदासं स्मारयति । नास्ति कवेः शैली भवभूति-

भट्टनारायणयो शैलीव कृत्रिमा। तस्य शैल्या विशिष्टतेय यत् तत्र चित्रात्मकाना ध्वन्यात्मकानाञ्च पदाना प्रयोगोऽभ्युपगत। मधुरभावनाभिव्यक्त्यर्थं वैदर्भी ह्यपेक्ष्यते। कविना सापि स्वकृतावङ्गीकृतास्ति। कवेर्भाषाया वैशिष्ट्यमेतदपि वर्तते यत् तत्रालङ्कारा स्वाभाविकतयैव समागता सन्ति। तत्रोपमोत्प्रेक्षाप्रतापातिशयोक्तिविभावना-समासोक्त्यादीनामलङ्काराणा श्रीर्भृश सचेतसा चेतो हरति। शब्दालङ्कारेषु श्लेषोऽपि कवये रोचते। नाटिकाया नाट्यकलाया काव्यकलायाश्चोभयोर्मञ्जुलतया समन्वय सञ्जातोऽस्ति तस्माद्रत्नावली सर्वथैवैकान्यतमा सफला कृतिरिति शम्।



## शूद्रककृतस्य मृच्छकटिकस्य

संस्कृतसाहित्ये शूद्रकस्य यशः सर्वत्र प्रसृतं श्रूयते । सोमदेवस्य कथासरित्सागरे[1], दण्डिनो दशकुमारचरिते, बाणस्य हर्षचरिते, कादम्बर्यां[2] च, शिवदासस्य वेतालपञ्चविंशतिकायां, कल्हणस्य राजतरङ्गिण्यां, स्कन्दपुराणे[3] च व्यासस्य, सेशादित्येऽस्य वेदविदांवरस्य सिंहोरसत्वस्य नृपस्य नाम सादरं कीर्त्यते । अन्ये[4] चानेके स्वस्वरचनासु अनवद्यं चरितं चरित्रं च चारुतयास्य चित्रयन्तः प्रेक्ष्यन्ते । मृच्छकटिकस्य आमुखे चास्य प्रशस्तिरीक्षते इयम् । भूयसां विदुषां गीतामिनन्दितो दशसहस्रमानवाधीश्वरः स्वप्रसन्नतिः प्रचयं प्रयाति सन्तुलमसौ मैदिन्यां प्रथितकीर्तिरद्भुतशक्ति-मति-सम्पन्नो विचक्षणमूर्धन्यो विशांपतिर्धर्मवीरोऽभूत । सत्यमपि तदीयायां रचनायां विवादास्पदीभूतायामनन्तसाहित्यसुदेतिहासप्रमाणाभावात्, तस्य बुधबहुलपरिगृहीतत्वात् ततितलोकस्वनापुरस्सरत्वाच्च सोऽस्मरयमेव कविनृपति सौभाग्यवत्यनेहसि भुवनमिदं स्वचरित्रकुसुमसौरभमूर्तेति निर्णीयते ।

एतावत्कालपर्यन्तमपि निश्चयपूर्वकमेतन्नाभिधातुं पार्यते यच्छूद्रकः क आसीत् कस्मिंश्च काले इमां मानवसुन्दरीं गौरवगिरीन्द्रशिखरे शुद्धे समारोपयामास । विद्वद्वरेण्यः श्रीचन्द्रबली[5] पाण्डेय आह यद् वाल्मीकिपुत्र कुलमहिम्नैव

---

[1] तस्माच्च शूद्रकाख्योऽभूद् भूपतिः प्राज्यविक्रमः ।

( कथासरित्सागरे ११वे तरङ्गे, पृ० ४१४ )

[2] 'राजा शूद्रको नाम' ( कादम्बर्याम्, पृ० ९, नि० प्रे० )

[3] स्कन्दपुराणे, कुमारिकाखण्डे ।

( शूद्रकः कलिवर्षेषु ३२९० वर्षेष्वतीतेषु सम्बभूव )

[4] ( अ ) राजशेखरस्य कुट्टनिमत-पञ्चिका-मौक्तिकपुञ्ज शूद्रककथा ।

( आ ) भोजकीर्तिनामधेया पञ्चशिखपालिता प्राकृतकाव्यरूपा शूद्रकथा ।

( इ ) सोमेनाथिलपुत्रेण चतुरङ्गं विक्रान्तशूद्रकं नाम नाटकम् ।

( ई ) काव्यादर्शटीकाया वादिवेतालेनोल्लिखितं शूद्रक-चरितम् ।

[5] श्रीचन्द्रबली पाण्डेयः शूद्रक, पृ० ३८ ।

शूद्रक आसीत् । डॉ० स्मिथ[1] आन्ध्रवंशसम्भवं सिमुकमेव शूद्रकं निर्धारयति । प्रो० स्टेनकोनो वक्ति यत् २४८तमे ख्रैस्ताब्दे सम्भूतः शिवदत्ताख्य आभीर एव शूद्रक आसीत् । दशकुमारचरितरचयिता दण्डी एव शूद्रक इति [2]श्रीपिशेलोऽनुमिमीते । काश्चन हस्तलिपयस्तु वदन्ति यच्छालिवाहननृपतेर्मन्त्री एव शूद्रक इत्येतां संज्ञां जुगुपे । स एव, गच्छता कालेन, प्रतिष्ठानस्य भूपतिर्जज्ञे । इत्थं शूद्रकीयव्यक्तित्वमधिकृत्य महान् विवादः श्रूयते यथा, तथैव तस्य समयमुद्दिश्यापि सन्ति नैके ऊहाः ।

कवि कल्हण शूद्रकं विक्रमादित्यात् प्राग्भवमवगच्छति, परं कल्हणाभिमत कतमोऽयं विक्रमादित्य इति न स्पष्टम् । चेदयं स विक्रमादित्यो यो डॉ० राजबलीपाण्डेयकृतानुसन्धानानुसार कालिदासस्याश्रयदाता मालवगणप्रमुखो विक्रमसंवत्सरप्रवर्तकस्तदा शूद्रक ईशवीयाब्दप्रवर्तनकालात् प्राग्वर्ती सिद्ध्यति । यदि डॉ०स्मिथ विचारोपरि ध्यानं प्रदीयते तदान्ध्रभृत्यसमकालिक प्रतिभाति यस्मादीशवीयाब्दात् प्राग् गामिन्या तृतीयस्याः शताब्द्यां सम्भवेत् । मार्शमैनाख्यप्रतीच्यपण्डितप्रणीत भारतेतिहासानुसारं मगधराजस्य शिवस्वनामा राजमन्त्री १९१तमेशवीयेऽब्दे राज्यं स्थापादित इत्येतेन शूद्रक ईशवीयद्वितीयशताब्द्यां बभूवेति ज्ञायते । डॉ० फ्लीटो विमृशति यच्छूद्रकसुतुरीश्वरसेन आन्ध्रान् पराभूय २४८-४९तमेशवीयाब्दे चेदिसंवत्सरं प्रावर्तयत् इत्येतेन-तदीया विद्यमानता तृतीयशतकव्यापिनी निष्पद्यते । स्कन्दपुराणेऽपि यदि श्रद्धा विधीयते तदा स सहस्रैकतमेशवीयाब्दात्पूर्वमेव वर्तितो ज्ञायते यतो हि पुराणानां[3] रचनोपरिनिर्दिष्टेशवीयशतकं यावदेव सम्पद्यते । अवन्तिसुन्दरीकथायां वर्णितस्य शिवस्वातिमहीपस्य समयेऽयमासीदिति वेषाञ्चन कोविदानां मतमित्थमेव एकाशीतितमे ख्रैस्ताब्दाभ्यर्णेऽजनिष्टेति प्रमाणीभवति । (परं पुराणोत्पत्तिविमाधस्य तु शिवस्वाते काल ख्रैस्ताब्दसमारम्भकालिनि चतुर्थे पञ्चमे वा शतके निर्णीयते ) श्रीजैकोबीमहाभागस्तु प्राह यत् स ख्रैस्तचतुर्थशतकात् प्राक्तन ।

---

[1] स्टेनोकोनो इण्डियन ड्रामा पृ० ५७ ।

[2] ए० ए० मेकडानल, ए हिस्ट्री ऑफ सं० लि० पृ० ३६१ ।

[3] हिन्दी विश्वभारती, पृ० २८९९ ।

[4] दी हिस्ट्री एण्ड कल्चर ऑफ दी इण्डियन पीपुल, सं० ३, परि० १५, पृ० २९८ ।

स्पष्टमेव दर्शनमाप्यते । अतो निश्चयोऽयं भवति यत् शूद्रकः सातवाहनयुगे—ईशवीयद्वितीयशतकस्याहोस्वित् तृतीयस्यान्तरा सम्बभूव ।

मृच्छकटिकस्य कर्तृत्वमधिकृत्यापि तर्काः श्रूयन्तेऽनेके । विदुषां मध्ये बहवो मृच्छकटिके शूद्रककर्तृत्वमभ्युपगन्तुं नोत्सुका दृश्यन्ते । श्री डॉ० पिशेलो[1] नाम प्रथीः मृच्छकटिकस्य कर्ता दण्डीति मन्यते । श्री डॉ० सिल्वा लेवी[2] च मृच्छकटिकं न शूद्रकस्य कृतिं मनुते । तन्मतेन कश्चिदन्य एव कविः शूद्रकनाम्ना तत्प्रकरणं प्रथयामास । श्री डॉ० कीथोऽपि[3] मृच्छकटिकं शूद्रकप्रणीतं नाङ्गीकरोति । तद्विचारानुसारं कश्चित् कविर्भासकृते चारुदत्तनाटके आर्यकविद्रोहकथां समावेश्य विरच्य च तन्मृच्छकटिकनाम्ना स्थापयामास । तदेवं मृच्छकटिकस्य कर्तरि नानाविवादाः श्रूयन्ते ।

यत्तु पूर्वमुक्तं विमुक्तः शूद्रको, वा शिवदत्तः शूद्रको, वा कुमारी शूद्रक इत्यादि तद् यदि सत्यत्वेन सम्भाव्यमस्ति तदा लोकगाद् परम्परात समागता जनश्रुतिः अपि—गवितथो भवितुं शक्या । पौराणिकमाख्यानमपि कमप्याधारमेवाश्रित्य समुत्थितं प्रचलितं च जायते । परकीयसाहित्यालोचनं साहित्यं सम्बहुं शक्नुवन्ति यद् वा कश्चिज्जनः कस्यापि साहित्यसामग्र्यामन्यत् किमपि अयथार्थं तत्र प्रभवत्यन्तर्भावयितुं परं कोऽपि कस्यचन देशस्य जनताया मध्ये प्रचलितां दन्तकथां भ्रमयितुं एमूः न कदापि शक्नोति इत्येतस्मात् कारणादथ च धैर्य विशाल आलम्बनमस्तस्मात् कस्मिन्नपि काले कस्यापि विपुलविद्या गुणवत भाजः समरव्यसनिनो दरिद्रेष्वस्य तपंधनस्य शूद्रकस्य भूपतेः समुत्पत्तिरपि सम्भवा । तेषु तेषु ग्रन्थेषु तस्य चर्चा या श्रूताप्यते न सा सर्वथैवालीकैव सम्भवा। परमेतेनेदं न वेद्य यद् ये सज्जनास्तत्र तत्र जने शूद्रकस्य तर्कयन्ति तेषां तर्केण प्रत्याख्यायते । भारतीय पुरातनतरं यत् साहित्यमिदानीमुपलभ्यते तत्र मृच्छकटिकप्रभावात् प्रबलात् स्वकीये शुद्धे रूपेऽवस्थितं सदास्माकं स्थापयितुं न शक्यं, अतो निश्चयतया किमपि प्रबलं प्रमाणमन्तरेण न वक्तुं शक्यते । तस्मान्मृच्छकटिकस्य कर्ता शूद्रक एव प्रतीयते । यदा हि वामनाचार्यो नैजकाव्या-

[1] मकडानल ए हिस्ट्री ऑफ संस्कृत लि० पृ० ३६१ ।

[2] लीथियेटर इण्डियन १८९०, पेरिस ।

[3] डॉ० कीथ संस्कृतड्रामा, पृ० १३८–१३९ ।

इत्यादावथ च दशमेऽङ्के—

> उत्तिष्ठ भो ! पतित-साधुजनानुकम्पिन्
> निष्कारणोपगतबान्धव ! धर्मशील ! ।
> यत्न कृतोऽपि सुमहान् मम मोचनाय
> दैवं न सज्जति किं न कृतं त्वयाद्य ॥ १०।३१

रोह०—अले चाण्डाल । मं मालेध, गच्छध आवुकं । किं मए गदेण वादव्वं ? इत्यादिषु च करुणरससागर उच्चैस्तरलीभवन् केन न दृश्यते ? कस्य न हृदयं शोकेनाप्लावितं सञ्जायते, को न क्रन्दन् श्रुतो भवति । अष्टमेऽङ्के—'चिट्ठ ले दुट्ठसमणआ ! चिट्ठ' इत्यादीनि वाक्यानि भयमुत्पादयन्ति, "अज्ज गि दे हिअअगदं तुमं च दाणिं जेव मोडेमि" इत्यादिवाक्यानि च बीभत्सं जनयन्ति केन नानुभूयन्ते ? किञ्च चतुर्थेऽङ्के—"एसा उण का ? फुल्लपावारअ-पाउदा उवाणह-जुअलणिक्खित्त-तेल्ल-चिक्कणेहिं पादेहिं उच्चासणे उवविट्ठा चिट्ठदि" · ··"अहो ! से अपच्छिमइड्ढीए पेट्टविथ्थारो । ता किं एदं पवेसिअ महादेवं विअ दुआरमोहाटध घरे णिम्मिदा ?" इत्यादीनि विदूषकवचांसि भृशं हृदये हास्यानन्दं सञ्चारयन्ति सज्जनान् नितरां रञ्जयन्ति । शर्विलकार्यकयोरन्यत्र क्वचित् क्वचिद् वीररसस्याभा सम्यग् वर्णन्ती प्रतिलक्षिता भवति । चिन्ता-निर्वेदग्लानिप्रभृतिभिस्सञ्चारिभावैः यथावसरं रसिकेभ्यः रसा सेना रामर्दयन्तः समवाप्यन्ते । एतेन विवेचनेन शूद्रकस्य कविप्रतिभायाः साधु विदितं जायते । नदं यदेतस्माद् गुम्फात् तस्य रचनाया कमनीयमेव रसव्यञ्जकत्वं प्रस्फुरति ।

कविर्यदपि वर्णयति तस्य दृश्य समक्षे साक्षात् भवत् समुपतिष्ठते । यदाहो—

> "दारिद्र्यात् पुरुषस्य बान्धवजनो वाक्ये न सन्तिष्ठते
> सुस्निग्धा विमुखीभवन्ति सुहृदः स्फारीभवन्त्यापदः ।
> सत्त्वं ह्रासमुपैति शीलशशिनः कान्तिः परिम्लायते
> पापं कर्म च यत् परैरपि कृतं तत्तस्य सम्भाव्यते ॥" १।३६

इत्यादिना दारिद्र्य,

> "चिन्तासक्त निमग्न मन्त्रि सलिलं दूतोर्मिशङ्खाकुलं
> पर्यन्त स्थित-चार नक्र मकरं नागाश्वहिंस्राश्रयम् ।
> नानावाशक-कङ्क-पक्षिरुचिरं कायस्थ-सर्पास्पदं
> नीतिक्षुण्णतटञ्च राज करणं हिंस्रैः समुद्रायते ॥" ९, १४

पत्नीत्वेन सवर्णा स्त्री पर्यगृह्यत परमसवर्णाया ग्रहणमपि प्रतिषिद्धं नासीत्। ब्राह्मणा कस्यापि वर्णस्य नारीं परिगृह्णन्तश्च अदृश्यन्त। सतीप्रथायाः[1] अपि प्रचार आसीत्। समाजे द्यूतस्य प्रचलनं, दास-प्रथा वेश्यापरता च अदृश्यन्त। 'द्यूतं हि नाम पुरुषस्य असिंहासनं राज्यम्', 'सुवृत्त, अदासो भवतु', 'दरिद्र-पुरुषसङ्क्रान्तमनाः खलु गणिका लोके अवचनीया भवती'त्यादीनि वचांस्यत्र प्रमाणम्। तस्मिन् काले कलानामवस्थाप्युन्नतासीत्। जनाना सङ्गीते महती रुचिरवाप्यत—

तं तस्य स्वरसङ्क्रमं मृदुगिरः श्लिष्टञ्च तन्त्री-स्वनं,
वर्णानामपि मूर्च्छनान्तरगतं तारं विरामे मृदुम्।
हेलासंयमितं पुनश्च ललितं रागद्विरुच्चारितं
यत्सत्यं विरतेऽपि गीतसमये गच्छामि शृण्वन्निव॥ ३, ५॥

चित्रकलायाश्च सर्वत्र प्रचार आसीत्—"चित्रफलअ णिसण्णदिट्ठी मदणिआए" (अं०-४) प्रतिमा-निर्माणकलायामपि जना दक्षा आसन् (अ० २), देशस्याऽऽर्थिकावस्था नितरामेव वरमासीत्। शिशवस्तदा सुवर्णघटितक्रीडनकैरक्रीडन्—इत्यस्मिन् विषयेऽपि सङ्केतो लभ्यते। वैदिकधर्मस्य बौद्धधर्मस्य चोभयस्य प्रचार आसीत्—'यासां बलिः सपदि मद्गृहदेहलीनाम्'—अ० १, 'शाक्य श्रमणकं शकुनेति अ, ७। रूपकस्याध्ययनेन स्फुटतयैव तस्मिन् काले राजनीतिकी दशा शोचनीयतां गतासीदिति ज्ञायते। देशो लघु-लघुराज्येषु विभक्त आसीत्। शासन प्रबन्धोऽतिश्लथोऽदृश्यत। अपराधिनोऽतिकठोरतया-दण्ड्यन्त च।

संस्कृतरूपकेषु वस्तुतो, मृच्छकटिकमद्भुतमनुपमञ्च रूपकम्। तत्र रूपककारेणातिनैपुण्येन प्रेमकथा राजनीतिकघटनाभिः सह निबध्य गीतास्ति। संस्कृतसाहित्ये चरित्रचित्रणप्रधानेषु रूपकेष्वन्यतमं रूपकमिदम्। तत्र सर्वविधानामपि पात्राणां सन्निवेशः कृतो रूपककारेण तस्मात् तत्र समाजस्य यथार्थं सजीवं च चित्रं दृग्गतं सञ्जायते। तत्र जीवन-घटनानां च विविधानां समुपस्थितत्वात् तद्रङ्गमञ्च-कृते नितान्तमेवोपयुक्तं वर्तते। प्रकरणस्यास्यैकैकोऽङ्कः स्वस्व-विशिष्टतां विदधाति। नास्त्येकोऽप्यङ्क एतादृक् यो न स्यात् वैलक्षण्यभाक्।

---

[1] अं० १०।

क्वचिद् द्यूतकरस्य संवाहकस्य वर्णनं दर्शकमनो रञ्जयति, क्वचिद् ब्राह्मणं चौरं शर्विलकं स्वप्रगल्भतया वर्णनेन सन्धिमुपतिष्ठति, क्वचित् प्रवहणस्य विपर्ययो भवति क्वचिदुद्याने वसन्तसेनायाः व्यापादनाय कुत्सितं शकार आचरति, क्वचिच्छर्विलकस्य हृदयमस्ति नु क्वचिद् वधस्थलस्य। यत्र पतिभक्तिः, करुणा, गुणेषु आसक्तिः, उदारता च स्वा निष्पापाभा किरन्त्यो वर्धन्ते दृश्यन्ते करुणस्य कौतुकं सौन्दर्यादिविविधविषयाणां मिश्रणेन घोरे वने प्रसूनं दृश्यते।

मृच्छकटिके नवनवा भावा, रमणीया उपमा, मनोज्ञा कल्पना प्रतिपदं नवोन्मेषन्ते। भाषा तत्र सरला प्रवाहमयी च विद्यते। अस्ति स पूर्णतया कथा वस्त्वनुगुणा। तस्याः कालिदासस्य वाग्भिः नवनूतनता न, न च उत्तमस्य महता भयानामपि चित्रणपरं नाटकं मार्मिकं चित्रं यादृशं तत्र चकास्ति तादृशमन्यत्र न।

चरित्रचित्रणेऽपि शूद्रकस्य प्रतिभाऽप्रतिमा। तस्य रचनायां सर्वेऽपि पात्राणि दर्शकस्य मानसपटे नैजं प्रभावं स्थापयन्ति। न सन्त्यल्पान्यपि विस्मर्तुं शक्यानि। देवानि गुणानुरागिणी उदारस्वभावा शरणागतवत्सला दयामयमानसा उपकाररता नानाकलासु कुशला अनाविलचरिता लोकोत्तरलावण्यवती वसन्तसेना सहृदयं हन्त न ददृशे मन्मथ यत् तां स्वभवनमन्दिरं प्रविश्य नाटकं धन्यं मन्यते।

स चारुदत्तः कस्य न प्रियः स्यात्, यः सदाचारस्य परमोत्कृष्टनिदर्शनम् सन्, यो याचकानां मनोरथपूर्तिकृत्, येन निर्धनेन कोऽपि विमानितः, येन स्वचरित्रेण यस्य गरिमा नीता, यः स्वयशोविनाशमेव मृत्युं मनुते, यो हि जगदेवमुपश्लोक्यमानः—

दीनानां कल्पवृक्षः स्वगुणफलनतः सज्जनानां कुटुम्बी
आदर्शः शिक्षितानां सुचरितनिकषः शीलवेलासमुद्रः।
सत्कर्ता नावमन्ता पुरुषगुणनिधिर्दक्षिणोदारसत्त्वो
ह्येकः श्लाघ्यः स जीवत्यधिकगुणतया चोच्छ्वसन्तीव चान्ये ॥१।४८॥

अहह, सुहृदेकप्राणस्य मैत्रेयस्य—

(क) 'किं भणं, तहिं गदुअ गेण्हिस्सदि। पिअवअस्सस्स अणिआदर मह्लदोत्ति'। पृ० २५३, (चौखम्बा सं०)

(ख) "भग भग ममाभत', स इदानीं मम प्रियवयस्य' कुसुमिता माधवीलतामप्याकृष्य कुसुमावचयं न करोति'''स यथर्मादरमकार्यमुभयलोकविरुद्धं करोति ' मस्तकं ते शतखण्डं करोमि । पृ० ५०४ ;

(ग) "जुत्तं णेदं'''ता वसन्तसेणीए दास "पिअवअस्स अणुगमिस्सं" । पृ० ५५५

इत्यादीनि वचनानि स्मारं स्मारं को न मानवो भवति चिरं विस्मृतसकलव्यापारः । अत्र शकार-शर्विलक-संवाहक-स्थावरक-चन्दनकार्यक-धूतादिसाना गल्लानामपि पात्राणां चरित्रस्य चित्रणे कविना स्वप्रतिभाया आश्चर्यकरं कौशलमावर्जितम् । मानवस्याल्पज्ञत्वात् तत्कार्ये दोषस्तु सम्भव एव । अत एव क्वापि चरित्र चित्रणे सञ्जाता कापि न्यूनता नो मनो मनागपि स्पृशति । केनापि मतिमता मनांसि रूपकस्यास्याधोलिखितास्त्रुटयो व्यथयन्ति—

१. प्रकृतिवर्णनस्य न्यूनता, प्रासस्यापि प्रकृतिवर्णनावसरस्योपेक्षणम् ।

२. पञ्चाङ्कस्यदृश्यस्य पञ्चमाङ्कपर्यन्तसमाप्तिमत्या कथाया अग्रवर्तिन्या कथया सह संयोजनेऽक्षमता ।

३. वसन्तसेनां सुप्तां विहाय चारुदत्तस्य पुष्पकरण्डकजीर्णोद्यानगमनम्—इत्येतस्या घटनाया अस्वाभाविकता ।

४. "सुट्ठु ण णिज्झाइदो रात्तीए, ता अज्ज पच्चक्ख पेक्खिस्सं" । इत्येतस्मिन् वाक्ये कथाया उपसंहारेऽसमर्थता ।

५. 'सम्पदं अधिअलणं गच्छिअ ववहालं लिहावेमि' इत्युक्त्वापि शकारस्याधिकरणम्प्रति परस्मिन्नहनि गमनम्—इत्यादिकाभिर्वार्ताभि कथाया अपकर्षणम् ।

६. सत्यामपि वसन्तसेनायामादर्शगणिकायां, तस्या असार्वकालिकत्वार्थदेशिकपात्रत्वम् ।

७. पञ्चमाङ्कस्यान्तिमदृश्यं हित्वा न कस्मिन्नपि दृश्ये कस्यापि रसस्य पूर्णतया परिपक्वत्वम् ।

अस्मिन् रूपके शूद्रकेण मानवस्य प्रेम चित्रयता सन्दिष्टमिदम्—सत्यस्य प्रेम्णस्त्यागस्य च फलं भवति वरम् । एतेषां गुणानां सद्भावे संसारेऽपि सुखमवाप्तुं शक्यम् ।

रूपकनिष्णातस्य विद्वान् केऽभिदधाति—

"दी ड्रामा हज आल्सो पिपुलर इन कन्सीडिरिंग ए लार्ज नम्बर ऑफ कॉण्ट्रास्टिंग कैरेक्टर्स, ड्रॉन फ्रॉम ऑल ग्रेड्स ऑफ सोसाइटी, फ्राम दी हाइ सोल्ड ब्राह्मन टू दी स्नीकिंग थीफ, दे आर प्रजेण्टेड नॉट एज टाइप्स, बट एज इण्डिविजुअल्स ऑफ डिफरेण्ट इण्टरेस्ट; एंड इट इन्क्ल्यूड्स इन इट्स ऑल मूड्स, फार्स एन्ड ट्रेजेडी, सैटायर एण्ड पैथोज, पोयट्री एन्ड विज्डम काइंडली-नेस एन्ड ह्यूमैनिटी।"



## नलचम्पूः

संस्कृतवाङ्मये 'चम्पू' रित्येतामभिधां भजमानस्य काव्यस्य अवतारणा गद्यकाव्यानन्तरं संवृत्ता। चम्पूकाव्यं, वस्तुतः, गद्यकाव्यस्यैव उपबृंहणं मन्यते। तस्मात् तस्य जन्म गद्यकाव्यस्यानन्तरं स्वाभाविकतया च सिद्ध्यति। दशमात् शतकात् प्राक् चम्पूकाव्यस्य न भवति दर्शनम्। यद्यपि वैदिकसंहितासु— कृष्णयजुर्वेदीयसंहितासु—गद्यपद्ययोर्मिश्रणं दृश्यते परं न स गद्य-पद्ययोर्योग एतादृशो, यादृशो हि चम्पूकाव्येऽभिमतः। चम्पूकाव्यं गद्य-पद्ययोर्मिश्रणाय अन्यामेव विधामभिलषते। न सा विधा वैदिके साहित्येऽवाप्यते न च पालीभाषानिबद्धेषु गद्यपद्यमिश्रेषु जातकेषु। आर्यशूरस्य जातकमालायामपि गद्य-पद्ययोर्निधानं येन विधिनानुष्ठितं स विधिरपि न चम्पूकाव्यलक्षणगृहीतमिष्टः। इदमवधेयम् जातकमालायामङ्गीकृता गद्य-पद्यमेलनपद्धतिः किन्तु हरिषेणकृतायां प्रयागप्रशस्त्यां स्वीकृता गद्य-पद्यमिश्रणात्मिका रीतिश्चम्पूकाव्यस्य स्वरूपाधानकर्मणि साहाय्यं प्रादत्ताम्। चम्पूकाव्यस्यान्तर्भावः आख्यायिकायामपि न भवति। आख्यायिकायां नायकः स्वयं वक्ता भवति किञ्च तत्र वक्त्रापरवक्त्रच्छन्दसोः प्रयोगोऽभीष्टो भवति अत्र तु न। चम्पूकाव्यस्य लक्षणं 'गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते' इत्येतद् विहितं यत्, तत्र लक्षणकारैरभिलष्यते यच्चम्पूकाव्ये भावात्मकानां विषयाणां वर्णनं पद्येषु स्यात् किञ्च वर्णनात्मकानां विषयाणां विवरणं गद्येषु। सम्भवतः एतद्विधस्यैव सौन्दर्यस्य चम्पूषु वाञ्छितत्वाद् भोजराजः—

> "गद्यानुबन्धरसमिश्रितपद्यसूक्ति-
> र्हृद्यापि वाद्यकलया कलितेव गीतिः।"

इत्याचष्ट।

साम्प्रतं यानि चम्पूकाव्यान्युपलभ्यन्ते तानि सन्ति दशमशताब्दीकालवर्तीनि। परं षष्ठे शतके सम्भूतो हि काव्यादर्शकारो दण्डी चम्पूकाव्यस्य लक्षणं लिखन् दृश्यते। एतेन तु चम्पूकाव्यानां रचना तस्मिन् काले वा तत्कालात् प्रागपि सञ्जातेति सिद्ध्यति।

पुरातनतमं चम्पूकाव्यत्वेनोपलभ्यते तदस्यस्मदीयं प्रस्तुतमिदं 'नलचम्पूकाव्यम्'। नलचम्पूकाव्यस्य प्रणेता त्रिविक्रमभट्टः पञ्चदशाधिकनवशततमे शकाब्दे संवत्सरे शाण्डिल्यान्वयं संवर्धयामास। नौसारीस्थशिलालेखात् तस्य नेमादित्यसुतत्वं सिद्ध्यति। स हैदराबादान्तर्गतस्य राष्ट्रकूटकुलचूडामणेरिन्द्रराजस्य तृतीयस्य राजसभायाः प्रमुखपण्डित आसीत्। नलचम्प्वा रचनायाः कालोऽन्तरङ्गं बहिरङ्गं च प्रमाणमवलम्ब्य निश्चितो भवितुमर्हति। नलचम्प्वाः प्रथमे उच्छ्वासे त्रिविक्रमो बाणभट्टस्य नाम निर्दिशति—

शश्वद् बाणद्वितीयेन नमदाकारधारिणा।
धनुषेव गुणाढ्येन निःशेषो रञ्जितो जनः॥

एतेन तस्य बाणादर्वाग्वर्तित्वमथ च—

पर्वतभेदि पवित्रं जैत्रं नरकस्य बहुमतं गहनम्।
हरिमिव हरिमिव हरिमिव वहति पयः पश्यत पयोष्णी॥

नलचम्प्वाः श्लोकस्यास्योपरिस्थितस्य भोजराजकृतसरस्वतीकण्ठाभरणे दृष्टत्वात् तस्य स्थितिर्भोजराजात् प्राग्वर्तिनी सिद्ध्यति। इदमस्यान्तरङ्गं प्रमाणम्। अस्त्यन्यत् (हैदराबादमण्डलान्तर्गते) महाराजेन्द्रराजतृतीयस्याभिषेकावसरे (पञ्चदशाधिकनवशततमे शकाब्दे) कुण्डकनाम्नैः स्थाने नैव कविना त्रिविक्रमेण लिखितः। स ताम्रलेखश्च बहिरङ्गं प्रमाणमस्ति। एताभ्यां बहिरङ्गान्तरङ्गाभ्यां प्रमाणाभ्यां नलचम्पूप्रणेतुस्त्रिविक्रमस्य दशमशतकवर्तित्वं स्पष्टमेव विदितं जायते।

त्रिविक्रमस्य द्वे कृती स्तः—मदालसाचम्पूः, नलचम्पूश्च।

संस्कृतसाहित्ये त्रिविक्रमस्य ख्यातौ कारणमस्ति तदीया श्लेषनिबन्धननैपुणी। श्लेषस्य प्रयोगस्तु वासवदत्तायां तेन सुबन्धुनापि कृतो यः स्वयमात्मानं 'प्रत्यक्षरश्लेषमयप्रबन्धविन्यासवैदग्ध्यनिधि'रिति घोषयति। वस्तुतो घोषणायास्तस्या तदीयासामर्थ्यमात्रमपि नास्त्यनृतम्। आसीदपि सः प्रत्यक्षरश्लेषमयप्रबन्धविन्यासवैदग्ध्यनिधिः। अत एव तु तद्रचनां वासवदत्तामुद्दिश्य बाणः शंसति—

कवीनामगलद्दर्पो नूनं वासवदत्तया।
शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम्॥

परं सुबन्धोः श्लेषयोजनाया विद्वांस आपत्तिद्वयं विदधाना दृश्यन्ते। 'सुबन्धोः श्लेषा दुरारोहा भवन्ती'त्येका प्रथमा, किञ्च 'श्लेषयोजनायां प्रायः सभङ्गश्लेषस्यैव चमत्कारो भवती'त्येषाऽस्ति द्वितीयापत्तिः। परं त्रिविक्रमस्य श्लेषयोजना सरला-

सभङ्गा च भवति । सभङ्गश्लेषस्य योजनायां यादृशं सामर्थ्यं त्रिविक्रमो दर्शयति न तादृशमन्य कोऽपि कवि प्रयुञ्जान प्राप्यते । सभङ्गश्लेषस्य प्रयोगो यद्यपि कतिपयै कविभि कृत परमर्थप्रतीत्यर्थं तत्र पदानामेतावदामर्दनं करणीय भवति यच्छ्लेषयोजनं तत् सचेतसामपि चेतस्यि अरुचिं जनयति क्लिष्टार्थप्रतीतिनिमित्तेन सहृदयानां दुस्साध्यश्रमाचरणमवेक्षणीय सञ्जायते । त्रिविक्रमस्य सभङ्गश्लेषा न सन्त्येतद्विधा । पाठकोऽल्पेनैव श्रमेणोभयपक्षस्यार्थबोधने क्षमो भवति । त्रिविक्रमस्य श्लेषे मनोऽनितरां रमते, तन्मतेन पुण्यशालिन कवय एव वाणीं विविधश्लेषविलासैर्विभूषयितु भवन्ति समर्था —

> "प्रसन्ना कान्तिहारिण्यो नानाश्लेषविचक्षणा ।
> भवन्ति कस्यचित्पुण्यैर्मुखे वाचो गृहे स्त्रिय ॥"

लघुलघुषु अनुष्टुप्वृत्तेषु सरलसभङ्गश्लेषयोजने नितरां त्रिविक्रमस्य वाणी महतीं विदग्धतां बिभर्ति—

> "अप्रगल्भा पदन्यासे जननीरागहेतव ।
> सन्त्येके बहुलालापा कवयो बालका इव ॥"

अत्र श्लोके समागतानि 'पदन्यासे', 'जननीरागहेतव', 'बहुलालापा' इत्येतानि पदानि श्लेषवशादेव चमत्कारचारुतां वहन्ति ।

शाब्दीं क्रीडायां निदिनमनस्कत्वात् त्रिविक्रमस्य, तस्य कथाया प्रवाहे न युक्तरं निर्वहणं समवाप्तं भवति । वस्तुत कथानिर्वहणस्य चिन्तैव न तन्मानसे विद्यते । श्लेष विनिबन्धनाय शब्दानां चयनमेव स सर्वत्र मन्यमानस्तत्रैवात्मानं रमयति । प्रथमोच्छ्वासे मृगयाया किञ्च षष्ठोच्छ्वासे विन्ध्याटव्या वर्णनस्य विपुलता कथा प्रवाहं नितरां निरुध्य विजृम्भते । कवि स्वस्य कवित्वस्य प्रयोग श्लेषयोजनायां वर्णनायाञ्च विधायैव परां तृप्तिं गतोऽस्ति । न कवित्व मेतावदेव । येन स आत्मानं कृतकृत्यं मेने तत्तु तदीयं वाग्जालमेव रूपमित्यत्र स श्लोकमपि चिन्तनमुचितं न अमनुत । सप्तमोच्छ्वासे एव कथाया यद्भुतीं गतिरुद्ध चकार तदपि इदमेव स्पष्टयत् प्रतीयते । यथा कवि शाब्द्यां क्रीडायां कुशलोऽस्ति तथैव स आर्थ्यामपि दक्ष । अहो यदा तदीया कल्पना उद्दीयन्ते तदा तु गङ्गायमुने द्वे अपि व्योम्नि प्रवहन्त्यौ दृक्पथेऽवतीर्णे जायेते । तद्विचित्र रूप कवेरसामान्यमिरङ्कुशं प्रगाढं प्रकटीकरोति या आर्थ्यां क्रीडया प्रीयते । वस्तुत

कवीनां सृष्टिर्विलक्षणैव भवति। सहगा गङ्गा यमुना च यदि भूलोके प्रवहतस्तर्हि कवेर्गङ्गायमुने गगने प्रवाहं स्वकीयं वितत्य जगद्वृन्दं परिप्रीणयतः—

उदयगिरिगतायां प्राक् प्रभापाण्डुताया-
मनुसरति निशीथे शृङ्गमस्ताचलस्य।
जयति किमपि तेजः साम्प्रतं व्योममध्ये
सलिलमिव विभिन्नं जाह्नवं यामुनं च॥

एतस्या एव नव्याया ऊहाया हेतोः कविरयं त्रिविक्रम 'यमुनात्रिविक्रम' इत्येतया प्रशस्त्या विश्रुतोऽस्मि बुधमण्डले। चण्डपालः कवेरस्यानया यमुनाविषयिकया कल्पनया परां प्रीतिं विन्दन् कविमिममेवं स्तवीति स्म—

प्राच्याद् विस्फुरदीहितोरपूर्वोऽयं त्रिविक्रम।
निर्ममे विमले व्योम्नि तत्पदं यमुनामपि॥

भावात्मकेष्वपि स्थलेषु त्रिविक्रम श्लेषं प्रयुञ्जानः प्रेक्ष्यते। नलम्प्रति दमयन्त्या हृदयेऽनुरागः समुत्पद्यते, तस्या अङ्गेषु रतिभावोद्बोधकानां सात्त्विकभावानामाभा वीक्ष्यते। त्रिविक्रमो भैम्या एतस्याः स्थितेर्वर्णनाय प्रौढोक्तिं श्लेषोक्तिञ्चाश्रित्य यां विचित्रां चमत्कृतिमातनुते परयन्तु प्रेक्षावन्तस्ताम्—"अथ विश्रान्तवाचि वाचस्पताविवोच्चारितानष्टविस्पष्टवर्गे वर्णितनिषधराजे राजहंसे 'अहं मेवार्थी' इत्यभिधायोपलभ्यमाना कृतोत्तरासङ्गेन द्विजन्मना शुनानुरागेण। धन्ये, चिरान्मिलितासि' इत्युक्त्वैवाश्लिष्टा हृदये प्रवृद्धया चिन्तया। 'पुत्रि कथं कथमपि दृष्टासि' इति संभाष्येवालिङ्गिता सर्वाङ्गेषूत्कम्पजनन्या रोमाञ्चावस्थया। 'तरुणि, त्यज्यतामिदानीं शैशवव्यवहारः' इत्यभिधायेव मुखे स्पृष्टा प्रमुखेन मुखे वैवर्ण्येन। 'मुग्धे मुच्यतां स्वच्छन्दभाव' इत्यनुशास्येव ग्राहिता नियमश्रृङ्खला मकरध्वजेन दमयन्ती।"

एतस्मिन् अवतरणे नलगुणश्रवणप्रेमदृष्टैः कविना दमयन्त्या अनुरागजनितावस्थां वर्णयता तद्गतकम्प-रोमाञ्च-वैवर्ण्यादिसात्त्विकभावानां, चाञ्चल्यादिव्यभिचारिभावानाञ्च, चिन्तादिसञ्चारिभावानाञ्च दिशि मधुरः सङ्केतः कृतोऽस्ति, परं कविसमुत्थापितोऽश्लेषोऽपि चमत्कारमात्मानं शाब्दीं सुन्दरतां परितोष्य एव विरमयति, तच्चमत्कारगान् सचेता दमयन्त्याः औत्सुक्यजनिताया आद्याया रागोद्बोधावस्थाया अनुभूतिमेव विधातुं न पारयति। उक्तेः सकलमपि सौन्दर्यं सभङ्गश्लेषेण हेतूत्प्रेक्षया च ध्वनियन्त्रणे कृतमस्ति।

दमयन्त्या शरीरसौन्दर्यवर्णनेऽपि कवे प्रधान एव तस्या सौन्दर्यविम्बोद्भावन न भूयः साधर्म्यमूलकार्थालङ्कारमालोपस्थापनमेव दृष्ट भवति। दमयन्तीगुण-रूप माधुर्यचित्रणे कवे समग्रापि क्षमता नाधिकसफलतामधिगच्छति। किञ्च कवेर्भणितेश्चमत्कारचारुतापि उत्प्रेक्षापर्यन्तमेव परिस्पन्दते—

'इतस्ततो निपतन्मण्डपमणिमयूखमञ्जरीजालच्छलेनामान्तमिव कान्तिरसविसरमुत्सृजन्तीम्, अशेषाङ्गावयवेषु प्रतिबिम्बितैरासन्नचित्रभित्तिरूपकैर्मायाविभिः सुरासुरैरिव विधीयमानाश्लेषाम्, अग्रस्थिते पद्मरागमणिदर्पणे कन्दर्पातुरे रागिणि शशिनीव करुणयार्पितच्छायाम्, अशेषजगद्विजयाख्यमालामिव मन्मथस्य, सङ्केतवसतिमिव समस्तसौन्दर्यगुणानाम्, अधिदेवतामिव सौभाग्यस्य, विपणिमिव लावण्यस्य, शिल्पसर्वस्वपरिणामरेखामिव विधातुः, अनन्तसंसाररोहणैकरत्नकन्दलीं दमयन्तीमद्राक्षम्।'

त्रिविक्रमस्य प्रकृतिवर्णनमपि एवमेव श्लेषेण प्रौढोक्त्या चाक्रम्यमाणमस्ति। तदीय प्रकृतिवर्णन प्रायेणोद्दीपनरूप विभ्राज्मेव समुपलभ्यते। सरलमपि ससार भ्रमे निपातयन्त्या परिहसितदुग्धफेनधावल्यायाश्चन्द्रिकाया वर्णन यद् भ्रान्तिम दलङ्कारेण कृतमस्ति तदस्ति मनोज्ञम्। पर तदीय सौन्दर्य दर्शि प्रतिभोत्तम्भसरय भ्रान्तिमदलङ्कारालोक परिधेरभ्य-तर्गतमेव वर्तते न ततोऽग्रे—

मुक्तादाममनोरथेन वनिता गृह्णन्ति वातायने
गोष्ठे गोपवधूर्दधीति मथितु कुम्भीगतान् वाञ्छति।
उच्चिन्वन्ति च मालतीषु कुसुमभ्रान्त्या बालो मालिका
शुभ्रान् विभ्रमकारिणः शशिकरान् पश्यन्न को मुह्यति॥

त्रिविक्रमस्य कलायां पाण्डित्यस्य प्रतिभायाश्च हृदयहारी समन्वयो विभ्राजते। तत्र समासा-तपदसघटनाया आभा अनुप्रासिकश्चमत्कार प्रकृष्टकोटिमाटीकमाना-गौडीरीतिश्च विलक्षणामेव लक्ष्मी सृजन्ती पर्यवलोकिता भवति। इह विन्ध्यस्थलीवर्णनात् द्वित्रिस्थलानि उद्ध्रियन्ते। तान्यवलोक्यास्य कवेरपरि निर्दिष्टा विशिष्टता तु भवेदेव ज्ञाता प्रकृतेरपि सौन्दर्यस्योपस्थापने भवभूतिरिवायमपि कवि परमनिष्णात इत्येतदपि विदित स्यात्—

"सान्तिकपोलपालिविगलद्दानाम्बुसिक्तद्रुमा
क्रीडत्क्रोडकुलार्धचर्वितपतन्मुस्तारसामोदिता।

अन्तःसुप्तिनिपातमन्थरमरुल्लोलन्नतामद्रुमा

कम्र्येता न हरन्ति हन्त हृदयं विन्ध्यस्थलीभूमयः ॥"

उपरिस्मिन् श्लोके भवता पुरा विन्ध्यभूमीनां शोभा न्यरूपयत् सम्प्रति नर्मदायाः प्रिय दिशे करन्तु सुधिय —

"एषा सा विन्ध्यमध्यस्थलविपुलशिलोत्सङ्गरङ्गत्तरङ्गा

मम्मोगाम्लनीराश्रयशबरवधूनर्मदा नर्मदा च ।

यस्या मान्द्रद्रुमालोडलिततलमिलत्सुन्दराम्भनिरुद्धं

सिद्धं सेवन्त एते मृगमृदितदलत्कन्दला कूलकच्छाः ॥"

काननस्य कमनीयतापि कविना नितरां ललिता लिखितास्ति तत्र मधुलिहां गुञ्जन, तुरङ्गतरलता पदाय, गाढानुलानामितमनत उत्कुर्निर्विविधवर्णविहगानां विरुतानालसत्व, कोकिलानां मधुरो स्वः, तमालाशोक मुचुकुन्दादिपादपा, सुमनसा मकरन्दमोक्षणमारा, चकोरसारस कुरर-कपोत-कुक्कुट-कुक्कुभमयूरादीनां नृत्य दृष्ट्वा क एतादृशः यस्य न मनो मोदेत । एवं कविचित्रितं वन चित्रं पश्यन्तु भवन्त —

"नर्मदातीरनिकटवनविनिगलितबहलमकरन्दसीकरासारसुरभितभूतलेषु सुरसमृगशरण्ढितदावानलज्वालायमानैस्सरनवरमलितनिर्नादप्रहारविकसिताशोककाननेषु नवनवपल्लवितरुकसम्मिलितमाकन्दकदलि स्थितपल्लवानुमेयमाद्यन्मयूरमण्डलेषु मदनारम्भुलितकलहंसुन्दरीशिस्यम गदकपोतकुक्कुटकुक्कुटकुलकुहरितेषु कूजत्कुररपरिचरितमकरन्दसिंषु चक्रवाकमासारसरसस्मणीयेषु विहरतु देव सह सैन्येन स्वच्छोमिमन्दानिलान्दोलितलतापल्लवेषु वनेषु ।"

सविचित्रिते हि एतस्मिन् मनोभिराम चित्रे वर्णिता धीः दमयन्त्यास्तानि किं वा अनिमालिकाया सुरमा निर्धायिता नावत्—"अथ कदाचिदुन्नमत्पयोधरान्तरपनद्धागवलीविराजिता, कमलदलकान्तनयना, सुरचापसदृशभ्रूर, विद्युत्सन्निभमेखलालङ्कारधारिण्य, शिञ्जानाभुजङ्गकलहंसका, मौक्तिकसुरारहारिण्य, कम्रचरणा, निरस्तनवशशाङ्ककान्तिकलापोदामुखमण्डला, सकलजगज्जेगीयमानगुणमिममनुपमलावण्यपराविराजितं राजानमवलोकयितुमिवावतरन्ति स्म वर्षा ।"

त्रिविक्रमस्य वर्णनानि यद्यपि यद्यपि क्लिष्टानि पर सर्वत्रापि तत्र प्राञ्जलः प्रवाह, प्रकाशमयं जीवनम् लोकोत्तरा स्फूर्ति, हृदयानन्दावहं चातुर्यं, रुचि-

परिपोषिणी स्वरलहरी च समुच्छलन्ति । यदपि कविर्वर्णयति तत् साकारं भवन् नेत्रयो पुरस्तान्नरीनृत्यति । यदा तत्कृतं मृगयावर्णनं स्मृतमेव भवति तदास्माकमग्रे कार्दमिककर्पटावनद्धमूर्धजा दण्डखण्डपाणय क्रूरकर्मोचिताकारा वागुरावाहिनोऽनन्ता पाशहस्ता पापर्द्धिका समुपस्थिता सञ्जायन्ते, भयादुन्न मितकन्धरा ऊर्ध्वकर्णसम्पुटा अकाण्डोड्डीनप्राणा वनप्राणिन सर्वत्र सन्तिष्ठमाना लोचनगोचरीभवन्ति, हयानां हेषारव श्रोत्रेन्द्रिय श्रोतुमारभते, शकुनिकुलस्य कोलाहलेनास्मच्चिकेतनमपि पूर्यमाण जायते, भयङ्करा सारमेया हृदये भीतिमुत्पादयितुमारभन्ते, गज केशरिभल्लूकसमाकुलानि निविडानि वनानि शरीरस्य सकलामपि रोमावलिं वेपयितुमुपक्रमन्ते ।

चेन्मनसि कृतसर्वर्तुनिवासस्य विपिनस्य दर्शनाकाङ्क्षा जागर्ति, चेत् षड्रसंस्वाहारेषूत्सुकता वर्धते, चेन्नाट्यपरिपाटीपटूना नटानां नृत्येषु दृष्टि प्रीतिं निबध्नाति, चेदमृतस्रुतां कविवाचामाकर्णने चित्तवृत्तिस्त्वरते, चेद्वीणाप्रवीणकिन्नरमिथुनगीतानि श्रोतु कामनातितरामेधते, चेल्लोचनोत्सवकराणां विलासिनीलास्यविलासानां विलोकनार्थं नयनानि समुत्कण्ठितानि, चेन्मृदुवाद्य विशेषशब्दश्रवणेऽभिलाषो बलीयास्तदापि त्रिविक्रमस्य कृतिं नलचम्पूं निषेवन्ता सचेतस ।

अहो, त्रिविक्रमकृत नलचम्पूकाव्य केन प्रकारेण उपश्लोक्येत । काव्यकला स्वयमेव नलचम्पू भूत्वा भूम्यामवतीर्णेव प्रतिभाति । अत्र यदा पाठका विलासविहगाना मङ्गलवल्भीं स्मरराजस्य राजधानीं शृङ्गारस्य रङ्गशाला दमयन्तीं निभालयन्ति तदा तु ते ब्रह्मानन्दसहोदरमथवा ब्रह्मानन्दादपि गरीयासमानन्दमनुभवन्ति पुन पुन ।

अमृतद्रववर्णकैरिव चित्रितावयवां मोहनमणिशिलायामिवोत्कीर्णाम्, आनन्दकन्दलैरिव घटिताम् शृङ्गारदारुणि इवोत्कुट्टिताम् वशीकरणपरमाणुभिरिव विनिर्मिताम्, मदनमृत्पिण्डेनेव निष्पादिताम्, वज्रलेपपुत्रिकामिव दृशो, आकर्षणमणिशलाकामिव हृदयस्य, जीवनौषधिमिवानुरागस्य, जयपताकामिव मदनस्य, सङ्केतवसतिमिव समस्तसौन्दर्यगुणानाम्, अधिदेवतामिव सौभाग्यस्य विपणिमिव लावण्यस्य, शिल्पपर्यवसानपरिणामरेखामिव विधातु, अनन्तमसाररोहणकरस्कन्दलीं दमयन्तीमालोक्य सतां मनो विस्मृतसकलव्यापारं भवति न चन्द्रे, न कमले, न प्रवाले, न रम्भायाम्, न इन्द्रधनुषि, न सरिद्वीचिषु, न कोकिलालापे, न शिखिनां नृत्ये, न हंसगत्यां, न सरसि, नोद्याने न भवने, न

चान्यत्रापि कुत्रापि तत् तादृशीं रुचिमनुबध्नाति यादृशी त्रिविक्रमस्य सृष्टौ नलचम्प्वाम् समुद्भूताया दमयन्त्याम् ।

चतुर्थे उच्छ्वासे सालङ्कायनो नलं यद् यद् उपदिदेश तत् सर्वं तेषां कृते परमहितकारकं तथा कल्याणेऽभिनिवेशः । तदधीत्य निशम्य च चेतसो मलिनतापहृता भवति, आदर्शमार्गः समवाप्तो जायते, अज्ञानं विजृम्भतां गच्छति, ज्ञानज्योतिः प्रादुर्भवति, विपदो विनश्यन्ति, सम्पदश्च सर्वविधाः समुन्मीलन्ति । स्वपाठकान् प्रति त्रिविक्रमस्य मनसि कियती महती हितचिकीर्षा राजते–इत्येष विचारस्तत्काल एव हृदये समुदितो भवति यदा तत्रायं स्थलः सालङ्कायनकृतोपदेशविषयकं दृग्गतं जायते । पाठकाः —

'तत् तात, सुदिवसमेघवर्तिनि विद्युद्विलास इवास्थिरे स्थितस्तारुण्ये मा स्म विस्मर स्मयेन विनयम् ।

आवर्जय गुणान् । निर्गुणे धनुर्धरे सुवंश्येऽपि कस्याग्रहो भवति । अन्यच्च कला । निष्कलो वीणाध्वनिरिव प्रशस्यते न पुरुषः । मा गाः स्त्रियाः प्रियो वा विश्वासम् । अधिकमल्पमतिरनार्यसङ्गता स्त्री धीश्च कं न प्रतारयति ।

किं तेन जातु जातेन मातुर्यौवनहारिणा ।<br>
आरोहति न यः स्वस्य वंशस्याग्रे ध्वजो यथा ॥

इत्यादीनि शिक्षाप्रदानि सन्मार्गप्रदर्शकानि चारित्र्यसमुत्थापकानि च त्रिविक्रमस्य वचांसि समाश्रयाग्रयाः स्वजीवनस्य पाथेयत्वेनावगच्छन्ति । अथ च नलचम्प्वा —

"जयत्यमन्दभावनावनतलोककल्पद्रुमः<br>
पुरन्दरपुरःसरत्रिदशवृन्दचूडामणिः ।<br>
अगणितकुलकन्दलीवनविनाशदावानलः<br>
समस्तमुनिमानसप्रवरराजहंसो हरिः ॥"

इत्येवंविधहरिस्तुतिपरकानेकश्लोकसमन्वितत्वात् सुधियो मोक्षप्रदत्वं तस्य विभावयन्ति ।

नलचम्पूकाव्ये श्लेषसुन्दरालङ्कारैः तदानन्दे च परिमग्य विरोधाभास-दीनामलङ्काराणामपि नितरामेव हृद्यः सन्निवेशः समजायत । प्रसङ्गतोऽवतरतो परिसंख्यां पश्यन्तु प्रबोधकाः—

"यस्मिंश्च राजनि जनितजनानन्दे नन्दयति कृत्स्नां महीम्, रतेषु जनितमकराः,

तालेषु मानालयभङ्गा, नृत्येषु विषमकरणप्रयोगा, वाद्येषु दण्डकरप्रहारा पुण्यकर्मारम्भेषु प्रबन्धा, मारिघृतेषु पाशप्रयोगा, पुष्पितकेतकीषु हस्तच्छेदा, न्यग्रोधेषु पादकल्पना, कञ्चुकमण्डनेषु नेत्रविकर्तनानि आसन् न प्रजासु।"

विरोधच्छिभापि विलोकनीया विपश्चिद्भि —

"पुण्यजनाश्च न च ये लङ्कापुरगा, समुद्राश्च न च ये लम्पटा, प्रसिद्धाश्च न च ये लम्पाका, कामवर्षाश्च न च ये लङ्घना मन्मार्गस्य, नववयसोऽपि न च ये लम्बालका, महाभारतिकाश्च न च ये रङ्गोपजीविन, सेवितापसरसोऽपि न च रम्भयान्विता।"

क्षणमुत्प्रेक्षायामपि मनो रमयन्तु मनीषिणो दमयन्ती सौन्दर्यसुधा पिबन्त —

"आकस्मिककठोरकाष्ठप्रहारव्यथामिवानुभवन्ती, विन्दतु वीणाक्वणो माधुर्यमितीव प्रतिपन्नमौनव्रता, लभेता कर्णोत्पले परभागमितीव मुकुलितनयना प्राप्नोतु शोभा मुक्तावली दीप्तिजालमितीव मुक्तस्मिता, गच्छतु च्छायां कण्ठावलम्बिनी चम्पकमालेयमितीवाङ्गीकृतवैवर्ण्या, लभतां लीलाकमलमिद सौभाग्यमितीवोच्छ्वसितवदना, सा क्षणमभूत्।"

त्रिविक्रमस्य एषा कृतिर्नलचम्पूरुत्तरकालवर्तिना कवीनां मानसानि भृशमावर्जयामास। कवय स्वकीये गद्ये तामेव श्रिय तामेव शब्दच्छटा लब्धुमनिश प्रयासमाचरितुमारेभिरे। विद्वज्जगति चम्पूग्रन्थप्रणयनस्य महती प्रगाढोत्सुकता समुदपद्यत। अयमस्य कवेस्त्रिविक्रमस्यैव प्रभावोऽवगमनीयो यद् धनपालादयस्तिलकमञ्जरीप्रभृतिगद्यकाव्याना, सोमदेवसूरि हरिश्चन्द्रादयश्च यशस्तिलकचम्पू जीवंधरचम्पूप्रभृतीना चम्पूकाव्यानां प्रणयनस्य प्रेरणा लब्धवन्त।

त्रिविक्रम प्रशंसन् सत्यमेवेदमाह चण्डपाल —

शक्तिस्त्रिविक्रमस्यैव जीयाल्लोकातिलङ्घिनी।
दमयन्तीप्रबन्धेन सदा बलिमतोदिता॥



# विक्रमाङ्कदेवचरितम्

पुरातने भारते वेद-शास्त्र-दर्शन-स्मृति-कथा-पुराण-काव्यायुर्वेदज्योतिर्विद्या स्थापत्यशिल्पधनुर्विद्यादिका: शतशो विषया यथा शिक्षणालयेषु प्रचलिता आसन् तथैव इतिहासनामको विषयोऽप्यत्र पठन-पाठनगत आसीत्। तस्यापि प्रचार इह आसीत्। सोऽपि अत्रत्यानां विपश्चिद्वराणां लेखनीभिरनुगृहीत आसीत्। स च पुराणेष्वन्तर्भूत आसीत्, न च महाभारत-रामायणयोरेव अगण्यत। तस्य गणना तु एतेभ्यः सर्वेभ्य एव पृथगप्यवर्तत। तस्य पार्थक्ये प्रमाणं प्रथम कोष एव वर्तते। कोषे यत्रान्येषां शास्त्राणामुल्लेखो लभ्यते तत्र तस्यापि चर्चा पृथगेव विहितास्ति। अमरकोष आह—"इतिहास: पुरावृत्तम्" इति। एतेन स्पष्टं सिद्ध्यति यद् इतिहासाभिधो विषय: सर्वथैव भारताभिज्ञातो विषय आसीत्। भारते तस्य लेखनादिकञ्च तथैव प्रावर्तत यथान्येषां विषयाणां लेखनादिकं प्रचलितमासीत्। भारतीये समाजे इतिहास: विषयेषु रुचिकरेषु विशेषु मतो बभूव। जना इच्छया उत्सुकतापूर्वकं तत्र स्वकीयां प्रगाढामभिरुचिं निदधुः। अत एव तु कविकालिदासबाणादिकास्तं सादरं स्मरन्तोऽवाप्यन्ते। महाकविः कालिदासः अभिज्ञानशाकुन्तले लिखति—"किन्तु यादृशी इतिहासनिबन्धेषु कामयमानानामवस्था श्रूयते तादृशीं तत्र पश्यामि।" महाकविर्बाणो लिखति यत्—"चन्द्रापीड"..." "कथासु, नाटकेषु, आख्यायिकासु काव्येषु, महाभारतपुराणेतिहासरामायणेषु ....कौशलमवाप।" महाभारतेऽस्य इतिरितिहास इति पदं प्रयुक्तमवाप्यते। वक्ष्यमाणासु पङ्क्तिषु प्रयुक्तम् 'इतिहास' इति पदं पश्यन्तु—

"भारतस्येतिहासस्य पुण्यां ग्रन्थार्थसंयुताम्" आदिप, १, १९

"इतिहासा सर्वदाख्या त्रिविधा. श्रुतयोऽपि च" आदिप, १, ५०

"इतिहासपुराणानामुन्मेषं निर्मितं च यत्" आदिप, १, ६३

एतेन द्विव्यावदर्शिनेनापि विवरणेन भारतस्येतिहासविषयत्वं सिद्ध्यति। नूनं स्पष्टो भवति यदत्रेतिहासस्य लेखनपाठनादिसम्बन्धिनी पद्धतिर्भूतमना-रतञ्च प्रसृतासीत्। एतस्मिन् सम्यं स्थितेऽपि अद्य प्रतीच्येषु मर्षीषु केचन

कथयन्ति यद् भारते इतिहासलेखनानाम् ऐतिहासिकबुद्धेश्च अभाव एव अदृश्यत। इतिहासस्तस्मिन्नेव देशे जनुर्ग्रहीतुं शक्नोति यत्र वस्तु वस्तुतः समृद्धि मश्नुते, राजनीतिकस्वतन्त्रता न कदापि भारते दृष्टाऽभवत्, तस्मात् तत्र वस्तुस्य क्वापि नैजजन्मग्रहणस्याप्यवसर न लब्धु शशाक। भारते इतिहासानुत्पत्ते कारणमिदमपि वदते यद् भारते न कदापि राष्ट्रियभावना स्वस्य भरणस्य पोषणस्य चानुकूलान्यव साधनानि अधिग तु समर्थाऽभवत्। इतिहासानुद्भवे हेतुद्वयमपि विज्ञेयं यद् राजनीतिविषयिण्यो घटना भारतीयाना जनाना प्रति क्रियास्तस्मिन्नय नोद्बोधयितु प्रबभूवुर्यस्मिन्नये यवन ( ग्रीस ) देशोपरि कृताना पर्शियनीयानामाक्रमणाना प्रतिघातेन हेरोडोटसस्य इतिहास समुद्भवित ।

इतिहासमाश्रित्य एतादृश आक्षेपान् विदधाना भारतोपरि, कीथादिका विद्वास श्रूयन्ते। नैतेष्वाक्षेपेषु वर्तते सत्यता वस्तुत । भारते न कदापीतिहासाना न चैतिहासिकबुद्धेरभावोऽभवदित्युपरिष्टान्निहितै प्रमाणै साधितमेव। स्वस्य स्वस्य देशस्य समयस्य च दृष्ट्यो भिन्ना अपि भवन्ति। एतद्दृष्टिभेदा देव अस्मदीये भारते तस्मिंस्तस्मिन्ननेहसि लिखितानामितिहासानां पद्धतिरपि न देशान्तरीयतिहासपद्धत्यनुगुणा समीचिना जायते। देशान्तरीया विद्वांसो हि अद्यतना अनद्यतनाश्च इतिहासलेखनस्य तदुद्देश्य प्रयोजन वा अनुमन्यमाना न समवाप्यन्ते यदुद्देश्य प्रयोजन वा भारतीया मेधाविनोऽनुमेनिरे। भारतीया पण्डितास्तिथीना घटनावलीनाञ्च वर्णन न इतिहासस्य उद्देश्यमवागच्छन् अपि तु जीवनस्य शाश्वताना सिद्धान्तानां समुपस्थापन किञ्च राष्ट्रियसंस्कृत समुन्नयनमेव ते इतिहासस्य आदर्शमवजग्मु । इममादर्शमत्र पुरोनिधाय ते इतिहासान् प्राणैषु । दुर्दैवाद् रामायण महाभारतादयो य केऽपि इतिहासा आत्मान पातु मशकस्तेषु निर्दिष्टोद्देश्य स्फुटतया परिवीक्षित भवति। भारतीयानां प्राचामितिहासग्रन्थाणा दृष्टिपुनितिहासकाराणा लेखनसरणि कस्माच्चाङ्गीकृतवती यत्र सन्त्यनेकानि कारणानि—( १ ) भारतीया दार्शनिकविचारधारा न ऐहिकमुत्थान यथार्थमुत्थान मन्यते। तद्दृष्टौ संसृतिर्मिथ्यास्ति नास्ति तत्र वस्तुता। सांसारिकाणां विषयाणा विचारण मायाकृते भ्रमानाये एव निपतनमस्ति। ( २ ) पारलौकिकेषु विषयेषु भारतीया स्वा श्रद्धामतिचिरादेव गरीयसीमेव निदधाना प्रेक्ष्यन्ते। ( ३ ) भारतीयानां कर्मसिद्धान्तो, य मतेन मानव जीवने काऽपि अचिन्तनीया घटना घटितु शक्नोति, ऐतिहासिकघटनानां

सङ्कलने संग्रथने च न मनागपि रुचिमदीदृशत्। (४) भारतीया जातीयेतिहासस्य प्रतिनिधित्वेन राम-कृष्ण-नल-युधिष्ठिरादीन् एव अमंसत।

आश्चर्यमिदं, भारतीयवाङ्मयस्य गम्भीरतया प्रौढ्या च अनुशीलने कृतेऽपि सति प्रतीच्याः प्राच्यो भारतीयानां प्रकृतिं प्रवृत्तिं च ज्ञातुं नाशक्नुवन्। "भारतीयेषु इतिहासकाराणामभावस्तथैतिह्याभिमतधियोऽभावश्च दृश्येते" इत्येतत् तेषामभिधानं तु तद्विषये भ्रममेव सन्देहं जनयति। अस्तु। भारतमप्यवश्यमेव स्वदेशानुरूपाणामितिहासानां सृष्टिं चकार। साम्प्रतं प्रामाणिकानामितिहासानां रचना न यदि प्राप्यते तदा तत्र कारणमस्ति-विध्वंसकानामाक्रमणानां बहुलता।

"राजनीतिकस्वतन्त्रता न भारते कदापि दृष्टाऽभवदिति यदुच्यते तदपि न सत्यम्। पुरातनतमे काले तु भारते पूर्णतया राजनीतिकं स्वातन्त्र्यमवर्तत। अस्मिन् विषये—

ध्रुवोऽच्युतः प्रमृणीहि शत्रून्
शत्रूयतोऽधरान् पादयस्व।
सर्वा दिशः संमनसः सध्रीची
ध्रुवाय ते समितिः कल्पतामिह ॥ (ऋक्, १०।१७३)

त्वां विशो वृणतां राज्याय त्वामिमाः प्रदिशः पञ्चदेवीः।
वर्ष्मन् राष्ट्रस्य ककुदि श्रयस्व ततो न उग्रो विभजा वसूनि ॥ (अथर्व०, ३।४।२)

इत्यादिका मन्त्रा सन्ति प्रमाणभूताः। वैदिके युगे गणतन्त्र-राजतन्त्रयोरुभयोरपि दर्शनाच्चेदं सिद्ध्यति यद् भारते राजनीतिकस्वातन्त्र्यन्तु प्रारम्भादेव वीचितमभूत्। आकरेषु भौज्य-स्वाराज्य-वैराज्य-साम्राज्यादिशासनपद्धतीनां च य उल्लेखो लभ्यते, कश्चित् तस्योल्लेखनस्यायमेवार्थो भवति यद् भारते राजनीतिकं स्वतन्त्रता नासीत्। भारतस्य यदा दुर्भाग्यदुर्दिनमभवत् तदा तस्यमेव बहवो देशाः समुदभवन्। परं तत्पतनकालमवलोक्यैव राजनीतिकस्वातन्त्र्याभावविषयकं दोषारोपणं तु नोचितं प्रतिभाति।

यस्मिन् देशे मनु-याज्ञवल्क्य-गार्गी-जनक-वसिष्ठ-बृहस्पतिसदृशा वाग्मिनोऽजनिषत पुरातनतमे काले, किञ्च कृष्ण-सदृशा गीतोपदेशका महाभारतकाले समुदपद्यन्त, अथ च साम्प्रतिकेऽपि भारते शङ्कराचार्यगोखलेमान्यतिलकसुरेन्द्रनाथमदनमोहनमालवीय-सदृशा महापुरुषाः समजायन्त तद्-भारतदेशमधिकृत्य

'वननृत्वस्त्राया अत्र अभाव आसीत्' इत्येतत्कथनं कियदनुचितम्। एवमेव राष्ट्रियभावनाया राहित्यमपि यदुक्तं तदपि नानृताद् रहितम्।

यस्य देशस्य श्रुतयः—

"भद्रमिच्छन्त ऋषयस्स्वर्विदस्तपोदीक्षामुपनिषेदुरग्रे।
ततो राष्ट्रं बलमोजश्च जातं तदस्मै देवा उपसंनमन्तु॥"
(अथर्व० १९।४१।१)

"आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम् आराष्ट्रे राजन्य शूर इषव्योऽतिव्याधी महारथो जायताम्...कल्पताम्।" (यजुषि)

इत्यादिभिर्मन्त्रैः समग्रमपि विश्वं राष्ट्रियभावनामुपदिदिक्षुरतदेव भारतं लक्ष्यीकृत्य "न भारते राष्ट्रियभावनानुकूलानि साधनानि समवाप" इत्येतद् भणन किं युक्तम्?

अस्तु नाम किमपि वैदेशिका वदन्तु। अस्मद्देशे इतिहासानां प्रणयनमितिहासकारा स्वसंस्कृतिनिर्दिष्टमार्गेणैव अकार्षुः। संस्कृतसाहित्ये न केवलमितिहासा अलिख्यन्त इतिहासप्रधानानि काव्यानि च लिखितान्यभूवन्। बाणभट्टस्य "हर्षचरितम्", वाक्पतिराजस्य "गौडवहो", पद्मगुप्तस्य "नवसाहसाङ्कचरितम्", कल्हणस्य "राजतरङ्गिणी" किञ्च बिल्हणस्य "विक्रमाङ्कदेवचरितम्" इतिहासप्रधानकाव्यत्वेन सन्ति सर्वत्र प्रथितानि। एतेषु ऐतिहासिकेषु काव्येषु अत्र केवलं बिल्हणस्य 'विक्रमाङ्कदेवचरितम्' गृह्यते यतो ह्यत्र तस्यैवैतस्य विमर्शनमिष्टम्।

कश्मीरप्रदेशवास्तव्य-ज्येष्ठकलशात्मजेनागादेवीतनयप्रादुर्भूत—महाकविबिल्हण-प्रणीतमहाकाव्य-विक्रमाङ्कदेव-चरितमस्मदग्रे चालुक्यवंशावतंसस्य वसुधाधिपस्य विक्रमादित्यषष्ठस्य चरित्रं प्रस्तवीति। तत्र तच्चरितं व्यतिरिच्य विक्रमादित्यषष्ठस्य पितुः आहवमल्लस्य निधनं, राजकुमारीचन्द्रलेखोद्वाहः, विक्रमादित्यस्य सोमेश्वर-जयसिंहाभिधानयोर्भ्रात्रोर्व्यतिकरः, चोलानां पराजयः किञ्च अन्याः कतिपयविविधा घटना सन्ति कविवरसमुल्लसितायां मनोऽभिरामायां गिराया गीताः। काव्ये चालुक्यवंशस्यादिपुरुषो विधातुश्चुलुकादुद्बभूव इत्येतदाश्चर्यदीरितम्। काल्पनिकप्रारम्भानन्तरं परम्परायामुच्छेदोऽप्याप्यते महान्। विस्तरेण प्रथमं तैलपं नाम नृपतिमवतारयति तत्कृत राष्ट्रकूटविजयञ्च गायति। अन्येषामनेकेषां भूपतीनां तु वर्णनं कृतमेव परं विक्रमादित्यपितुः आहवम-

ह्यस्य विशिष्टतयोल्लेखनं कुर्वाणः स दृश्यते। यद्यपि कविना बहुलाम्नादृश्यो घटनास्तत्काव्ये वर्णिता यद्दर्शो हि पुरावृत्तोपरि प्रकाशः वेदयो नितान्तं महत्त्वकाः भवन्ति परं यत्र कविः स्वनायककुल-गौरवानुरागामितवशात् तस्योत्कर्षं प्रदर्शन एव पूर्णं मनोयोगं प्रददाति, तत्र एवंविधाया घटनाया घटनमवलोक्यते या न केचन इतिहासाः परिपोषयन्ति। परं साम्प्रतिके समये बहव इतिहासलेखका देश-जाति-सम्प्रदायादिपक्षपातहेतो स्व-स्वेतिहासे अतीतानां घटनानां वर्णनमतिविपर्यासपूर्वकं विदधाना दृष्टा भवन्ति एतादृश्या स्थितावेदमपि मुक्तकण्ठतया कथनं न समीचीनं प्रतिभासते यत् कविरमुकां घटनामसत्यामेव वर्णयामास।

अस्ति विक्रमाङ्कदेवचरिते वीररसः अङ्गी। तत्र सर्वत्रैव बहूनां युद्धानां वर्णनं विलोकितं भवति। यद्यपि कविना काव्ये सर्वत्र वैदर्भी रीतिरवलम्बितास्ति परं यत्र यत्र श्लोके वीरतायाः, सेनायाः, समरस्य च दृश्यं कविना आलिखितं तत्र तत्र श्लोके वीररसानुकूला पदावली दृश्यते, सैन्यसमूहस्य वर्णनस्य कविलेखनी यत्कौशलमभ्युपगच्छति तत्कौशलसामर्थ्यात् पाठकाः स्वसमक्षे सैन्यं सन्निष्ठमानमिव प्रेक्षन्ते। तेषां श्रोत्रेन्द्रियं दुन्दुभिध्वनिं श्रोतुमारभते, कुञ्जराणां भारेण नीचैर्गच्छन्तीं पृथिवीं तेषां नयनेन्द्रियं विलोकयितुं सुसमयमश्नुते, तुरङ्गखुरोत्थापितं धूमा-रजो दिग्भागान् आवृण्वन्; गजमदाम्बुभिर्धारासारादीं भवन्तीं च ते लोचनगोचरीं कर्तुमवसरं लभन्ते। सैनिकानां प्रमाय, शस्त्रास्त्राणां भीषणशब्दसङ्घटनपूर्वकं विद्युत्प्रभानुकारी प्रस्फुरत्प्रकाशः, समन्तादपर्यन्तमुल्लोलाकोलाहल-, झणझणेति शब्दं कुर्वतां रथानां पङ्क्तयः, हयानां गजानां पदातीनां परस्परोपरपर्दिनी श्रेणी च पाठकस्य श्रोतुर्वा पुरो युगपदवतीर्णा जायन्ते।

राजा आहवमल्लः कीदृशो महायुद्धभटो योद्धासीत् इत्येतत्—तस्य कविः किमद्भुतवीरतोद्भावितायामुत्साहादम्येरपादिकायां कातरस्यापि शोणिते उत्तानाया मशारिण्या भारायां संविद्यमानेति विलोकयतां चयम्—

कौक्षेयकः स्फुरितकस्य यस्य पीत्वानिमात्रं द्विषतां प्रतापम्।
आलोक्य सप्तस्वभिरावचत्स चोलीकपोलस्थलचन्दनानि ॥ १।९० ॥

दीप्तप्रतापानलसन्निधानाद् बिभ्रत् पिपासामिव यस्य पाणः।
प्रमारपृथ्वीपतिकीर्तिधारा धारासुदारा कवलीचकार ॥ १।९१ ॥

निःशेषनिर्वासितराजहंसः खड्गेन बालाम्बुदमेचकेन।
मेत्रबन्धमामूद्गुप्तपदेऽपि यः कीर्तिहंसीं विरसीचकार ॥ १।९२ ॥

सूर्यमल्लस्य जयसिंहदेवस्य प्रचण्डारातीनामपि मानसे सन्तापसमुत्पादकं प्रतापं कविरेवं वर्णयति—

प्रतापभानौ भजति प्रतिष्ठां यस्य प्रभातेष्विव संयुगेषु।
सूर्योपलानामिव पार्थिवानां केषां न ताप प्रकटीबभूव ॥ १।८१ ॥
यात्रासु यस्य ध्वजिनीभरेण दोलायमाना सकला धरित्री।
आर्द्रवगाधिष्ठित - पृष्ठपीठमकर्मठं कूर्मपतिं चकार ॥ १।८२ ॥

शब्दावल्यां कियदोजः स्थिती विकटता कियांश्च दारुणो रसो विभ्राजते। सम्प्रति समराङ्गणे हतानां भूपानां हृत्कम्पनकृद् दृश्यं दर्शयता किञ्च कविना तद् दृश्यं कियद् विलक्षणचातुर्येण प्रदर्शितं तदपि विलोक्यताम्—

किरीटमाणिक्य मरीचिवीचिप्रच्छादिता यस्य विपक्षभूपाः।
चितान्निभीत्या समराङ्गणेषु न रागृहीता सहसा शिवाभिः ॥ १।८३ ॥

काव्यनायको विक्रमाङ्कदेवः शैशवादेव समरोत्सवोत्कण्ठो दृष्टो बभूव। आहवमल्लदेवस्तदीयः पिता अद्भुतमाहात्माङ्कमेकवीरं तमेव सिंहासने प्रतिष्ठापयितुं मनसाचकाङ्क्ष। स राजलक्ष्म्या संरक्षणं तस्यैवातुलसत्त्वस्य भूभारधारणक्षमयोर्भुजयोर्विदधाय—

"अलङ्करोत्वद्भुतसाहसाङ्क सिंहासनं चेदयमेकवीर।
एतस्य सिंहीमिव राजलक्ष्मीमङ्कस्थितां कः क्षमतेऽभियोक्तुम् ॥" ३।२७ ॥

विक्रमाङ्कदेवो बहुसंख्याकान् महासमरान् जितवान्। आसीदसौ त्रिलोकवीर—

"त्रिलोकवीर कियतो विजिग्ये न दुर्दमानां प्रतिपार्थिवानाम्।
दोर्विक्रमेणाद्भुतसाहसेन महाहवानाहवमल्लसूनुः ॥ ३।६८ ॥

महोद्धुराणां महेभानां रणप्रचण्डानां तुरङ्गमानां जितनानासम्परायाणां महाभटानामपि पराङ्मुखकारिणि शत्रुप्रलयपवनस्य सम्मुखे गन्तुं विक्रमाङ्कदेव एव शक्तिं निदधौ—

"उदतिष्ठदपारपौरुषः स्वयमुद्दाममदेन दन्तिना।" १५।१८
"असिना विशिखैः सतोमरैः सहसा कुञ्जरघातनेन च।
स सहस्रमिवोद्वहन् करान् प्रतिपक्षक्षयदीक्षितोऽभवत्" ॥१५।१४॥

महाकवौ विल्हणे अद्भुतैव भयङ्करसमरवर्णनपटीयस्ता समुच्छलति। तस्य ऐरम्यां तदमोघ बल सञ्चरते यत् सर्वत्र शोणितापगानां रोमाञ्चकृत् तद्दृश्यमुत्पादयितु प्रभवति यदवलोक्य कालस्यापि हृदये हठाद् भीतिः प्रवेष्टु प्रधावति

'महाभटानां करवालयष्टयः समुच्छलद्दुर्धररश्मिनिर्मलाः ।
विनिर्गताः कोशगिरेरिगन् नन कृतान्तपाशोरगसंनिभा बभुः" ॥१७।१५॥
'पदे पदे दान्तिपङ्क्तिपातिना दिनेश्वरस्य प्रतिबिम्बमालिका ।
अवापदापानकुतूहलागतप्रपञ्चवस्त्रीचषकोपमेयताम्" ॥ १७।५२ ॥

इदं विक्रमाङ्कदेवचरितं महाकाव्यं चालुक्यवंशोद्भवं वर्णयद् वाच्यं, तद्वंशोद्भूतप्रचण्डपराक्रमशालिपार्थिवानां वृत्तं च तत्र समवाप्य डॉ० बूह्लरादयो अचकथन् यन्महाकविना स्वकृतावैतिहासिकं तथ्यं विनिर्याद्घनम् । परं दूषणमिदं नापातत एव प्रतिभाति न तत्त्वदृष्ट्या । सङ्गतकृतिरितिहासमूलापि काव्यमेव नेतिहासः । अत्र महाकविबिल्हणस्य प्राधान्येन कवित्वमेव प्रकाशनीयं वर्तते न चेतिहासतत्त्वम् । यत्तत्रेतिहासतत्त्वमाविर्भावितं तदानुषङ्गिकत्वेन न प्राधान्येन कविना चेदत्र काव्ये स्वनायकस्य किमपि अनुचितं वृत्तं निह्नुतं तदा तत्तु समुचितमेव कृतं । कवि—

"यत् स्यादनुचितं वृत्तं नायकस्य रसस्य वा ।
विरुद्धं तत् परित्याज्यमन्यथा वा प्रकल्पयेत् ॥"

इत्येवं हि शास्त्राज्ञा आज्ञापयति ।

वस्तुतः काव्यमेतत् स्वकीयतत्तद्गुणगणैः संस्कृतसाहित्येऽसाधारणमेव स्थानमधितिष्ठति । एतस्याभिनन्दनीयस्य काव्यस्य प्रणेता बिल्हणोऽस्ति विलक्षणकाव्यविच्छित्तिप्रकाशनप्रवणो विचक्षणवरोऽनल्पमधुमञ्जुलकल्पनाकुशलः । प्रसादाभिधेन गुणेन वैदर्भ्याख्यया मनोज्ञया रीत्या चैव कविः काव्यनिर्माणे कविकुलगुरोः कालिदासस्य शैलीं बिभर्ति । रसध्वनिच्छन्दःसमासोक्त्यादिभिः सर्वैरेव सनाथीकृत्य काव्यमिदं कुशलमहाकविना श्रीसरस्वतीचरणसरसिजयोः सादरं सविनयञ्च समर्पितम् । वस्तुतः कविना विरचय्येदं काव्यरत्नं संस्कृतसाहित्यसंसारस्य गरिमा महिमा च नितरामेव वृद्धिं नीतौ ।

काव्येऽस्मिन् उपमातिशयोक्त्यर्थान्तरन्यासकाव्यलिङ्गार्थापत्तिप्रभृतयोऽलङ्कारास्तु सन्त्येव बहवः परमेतस्य काव्यस्य मध्ये उत्प्रेक्षालङ्कारस्य तु अतितरामेव मनोहरा लोकोत्तरसौन्दर्यशालिनी माला दृष्टिगोचरीभवति । इह कतिपयश्लोकास्तदीयश्रीपर्यवेक्षणाय निधीयन्ते—

यस्येषवः संयुगयामिनीषु प्रोतप्रतिक्ष्मापतिमौलिरत्नाः ।
गृहीतदीपा इव विन्दते स्म खड्गान्धकारे रिपुचक्रवालम् ॥ १।७५ ॥

इह कविनाऽनुस्यूतराजमौलिरत्नेषु शरेषु गृहीतदीपकत्वमुत्प्रेक्षितम् ।

यद्वैरिसामन्तनितम्बिनीनामश्रान्तसन्तापकदर्थ्यमाने ।

पराङ्मुखं शोषविशङ्कयेव कुचस्थले कुङ्कुमपङ्कमासीत् ॥ ३।१०५ ॥

अत्र कुचस्थले कुङ्कुमलेपस्य पराङ्मुखत्वं स्तनयो शोषशङ्काया हेतुत्वेनोत्प्रेक्षितम् ।

य वीक्ष्य पाथोधिरधिज्यचापं शोणाश्मभि शोणितशोणदेहैः ।

क्षोभादभीतं रघुराजबाणजीर्णव्रणस्फोटमिवाचचक्षे ॥ ३।२०९ ॥

अत्र रक्तपाषाणेषु जीर्णव्रणस्फोटत्वमुत्प्रेक्षितम् ।

एवंविधाभिर्मधुरमधुराभिरुत्प्रेक्षाभि काव्यमेतत्कविना विभूषितं सद् भृशं सचेतसां चेतांसि चोरयति ।

सम्प्रति अन्येषा च विचित्राणामलङ्काराणा छविं प्रेक्षन्ताम्—

"भोजक्ष्मापालविमुक्तधारानिपातमात्रेण रणेषु यस्य ।

कल्पान्तकालानलचण्डमूर्तिश्चित्र प्रकोपाग्निरयाप शान्तिम्" ॥ ३।९४ ॥

अत्र विरोधाभास,

"भुव रणे यस्य जयामृतेन स्त्रीव क्षमाभर्तुरभूत् कृपाण ।

एका गृहीता यदनेन धारा धारासहस्र यशसोऽवकीर्णम्" ॥ ३।९६ ॥

इह परिवृत्ति श्लेषश्च,

"अन्यायमेक कृतवान् कृती यश्चालुक्यगोत्रोद्भवराजलोऽपि ।

यत्पूर्वभूपालगुणान् प्रजाना विस्मारयामास निजैश्चरित्रै ॥ ३।१०१ ॥

इह व्याजस्तुतिश्च सहृदयान् प्रीणयन्ती स्वशोभा सर्वतो विकिरति । साम्प्रतं ध्वनि रमणीयतापि विलोकनीया—

"सोऽयं रणे नर्तयिता कबन्धान् मदान्धभूपालसहस्रसैन्य ।

विलोक्यतां सुन्दरि चेदिराजस्तवास्तु दृष्टि स्मरवैजयन्ती" ॥ ९।९७ ॥

अत्र कबन्धनर्तनशालित्वेन शौर्यातिशयरूपवस्तु ध्वनितम्,

"उत्तम्भशालाय पयोनिधेर्यस्तीरे जयस्तम्भमदम्भवीर ।

अस्थापित स्वैरविहारशीलैरालानभीत्या जलवारणेन्द्रै" ॥ ३।१११ ॥

इह जयस्तम्भे समुद्रगजानामालानस्य भ्रान्त्याऽस्थापितमिति प्रतीत्या भ्रान्तिमानलङ्कारो व्यङ्ग्य. ।

काव्ये कवि स्थाने स्थाने सन्निवेशिताभि सूक्तिभि स्वकीयान् पाठकान् प्रति न केवल सन्मार्ग प्रदर्शयत्यपि स्वसौ स्वप्रकृति परिचयमपि प्रददाति, स एतदपि ज्ञापयति यत्स तेषु तेषु भावषु विचारेषु वा अभिरुचि निदधाति। कवि निहितानां सूक्तीनां महोपकारत्वादिहापि त्रिचतुरा एव सूक्तयो निधीयन्ते—

( क ) "इय हि लक्ष्मीर्धुरि पांसुलानां केषां न चेत कलुषीकरोति ' ३, ४२

( ख ) ' न कृच्छ्रेऽपि महाभागास्त्यागव्रतपराङ्मुखा ' ४, ६७

( ग ) "यशसि रतिर्महतां न देहपिण्डे" ६, ७७

( घ ) ' प्रायेण देहविरहादपि दु सहोऽय

सर्वाङ्गसज्वरकर प्रियविप्रयोग " १६, ४०

अस्य कवेर्नवमसर्गस्थ स्वयवरवर्णन कालिदासवर्णितेन्दुमतीस्वयवर तु सवदत्येव अन्या अपि एतदीया उक्तयस्तत्तत्कवयुक्ती सवदन्त्य प्राप्यन्ते। तथाहि—

'लोकान्तरसुख पुण्य तपोदानसमुद्भवम्।

सन्तति शुद्धवश्या हि परत्रेह च शर्मणे॥ (रघु०, १, ६९)

' किमश्वमेधप्रभृतिक्रियाकर्मै सुतोऽस्ति चेन्नोभयलोकबान्धव।

ऋण पितृणामपनेतुमक्षमा कथ लभन्ते गृहमेधिन शुभम्॥" (वि० २, ३४)

' अब्धिषु स्थलपथीकृतेषु न पूर्यते जवविधौ कुतूहलम्।

इयकुर्वत दिगन्तगोचर नूनमस्य तुरगा क्षमारज॥' (वि०, १४, ६२)

' प्रयातुमस्माकमिय कियत्पद धरा तदम्भोधिरपि स्थलायताम्।

इतीव वाहैर्निजवेगदर्पितै पयोधिरोधक्षममुत्थित रज॥' (नै०, १, ६९)

वस्तुत इद काव्य सस्कृतकाव्येषु नैज विशिष्ट महत्त्व निदधाति। यस्यापि दृष्टिपथे काव्यमेतत्समागच्छति स काव्यमिदमधीत्यातितरा प्रीयते। पाठकस्याग्रे काव्यमेतदेकतरस्वैविहासिकी घटना सन्निदधात्यपरत कवित्वलक्ष्मीमत काव्यस्यास्य कर्ता बिल्हण स्वपाठक यथा परिप्रीणाति न तथाऽन्य कवय। एतत्कृताश्चौरपञ्चाशिका कर्णसुन्दरी विक्रमाङ्काभ्युदयश्चम्पूकृतयश्च रसिकानां मानसेषु हर्षममित सञ्चारयन्ति। सुभाषितसग्रहग्रन्थेषु वपि एतद् रचिता अनेके श्लोका सल्रभ्यन्ते। सत्यमुक्तम्—

बिल्हणस्य कवे प्राप्तप्रमादैव सरस्वती।

नीयते जातु काऽपि न दुर्जनैर्न घनैरपि॥'

# नैषधं विद्वदौषधम्

अनवरतगीर्वाणसाहित्यसुधीशिरोरत्नविश्वविदितयशा नैषधीयचरितमहाकाव्यरचयिता कविचक्रचूडामणिस्तार्किकजगदलङ्कारो लोकोत्तरप्रतिभापावन श्रीहर्षो महाकविर्ललितपदनिबन्धनावाप्तविविधचातुरीकचमत्कारचारुताचुम्बितार्थप्रकाशनपण्डितो वैदुष्यानुकूलविभावितनिबन्धप्रणयननिपुणः शास्त्रीयस्य पाण्डित्यस्य कवित्वस्य चानुपम एव रत्नाकरो बभूव ।

स यथा मानसमञ्जरीसमुन्मीलनविधायिन्याः प्रकृतिपेशलायाः कवितायाः विरचने परां प्रवीणतामगाहत तथैव पण्डितप्रकाण्डमदचूर्णनचतुरायास्तर्ककर्कशाया गिराया गुम्फनेऽपि अद्भुतामेव विदग्धतां बभार । यो हि श्रीहर्षः कविता-कामिनीकरलीलाकमलमूनं नैषधीयचरितमरचयत् स एव श्रीहर्षः प्रगाढपाण्डित्यभुजदण्डखड्गभूतं खण्डनखण्डखाद्यमपि अजग्रन्थत् । यः श्रीहर्षो मनोऽभिरामया कान्तकवितया कवयितृषु स्वीयां विमलां समज्ञावैजयन्तीमुदतूतुलत् स एव जयचन्द्रकान्यकुब्जनरेन्द्रसंसदि स्वपितृपादपराजेतुस्तार्किकतल्लजस्योदयनस्यापि वैदुष्यजनितमदमपि अचूचुर्णत् । कविकुलपारावारपौर्णमासीन्दोः श्रीहर्षस्येयमुक्तिर्नितान्तमवितथैव—

"साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले
तर्के वा मयि संविधातरि समं लीलायते भारती ।
शय्या वास्तु मृदूत्तरच्छदवती दर्भाङ्कुरैरास्तृता
भूमिर्वा हृदयङ्गमो यदि पतिस्तुल्या रतिर्योषिताम् ॥"

श्रीहर्षो न केवलं कविर्दार्शनिको वा बभूव स महान् साधको योगी च भूत्वा भुवि बभौ । चिन्तामणिमन्त्रसिद्धिः सरस्वतीमातृवरसमवाप्तिश्च तस्य साधकत्वे योगित्वे च समुज्ज्वलं प्रमाणम् । संस्कृतकवीनां मध्ये हि पूर्वविधाः कवयो नाधिका यत्र कवित्वयोगित्वयोर्मञ्जुलो योगः परिस्फुरन् प्रेक्ष्येत ।

अद्वैतसिद्धान्तनिहितरुचिविशेषो महाकविर्दार्शनिकसिद्धान्तप्रतिपादने ऽद्वयवर्त्मनि मार्गे संश्रित्य दर्शनविदां संसारेऽस्मिन्नां मुदं वितन्वानो राजते । तदीयो हि नैषधीयचरितस्य सप्तदशः सर्गो दर्शनशास्त्रविषयकवैदुष्यस्य

निकषोपल सन् शोभते। चार्वाकमतस्य तत्र मण्डन खण्डनञ्च एताव या प्रौढत-रतयानुष्ठित यदसौ सर्गो दर्शनशास्त्रमिव प्रतीयते। चार्वाकानन ये विचारास्तत्र वर्णिता प्रतिष्ठापिताश्चतेऽद्यतनानामपि भ निरत्रवादिना तर्कान् सिद्धान्ताश्च परिहसन्त प्रतिलक्ष्यन्ते। चार्वाकमतानुगामिन सन्ति प्र यक्षप्रमाणमात्रसभाजनपरा। न तेषु अनुमानस्य सम्मान न च शब्दस्य। तन्मतेन चैतन्यविशिष्ट सहननमेव आत्मा, मरणमेव मोक्ष, न क्वापि स्वर्गो न च क्वापि परमेश्वर।

"यावज्जीवेत् सुख जीवेदृण कृत्वा घृत पिबेत्।
भस्मीभूतस्य देहस्य पुनरागमनं कुत॥"

इत्येव तेषामुद्घोषो लोकविदित एव। कवि श्रीहर्ष एतान् एव नास्तिकदर्शनम स्वन्धिन सिद्धान्तान् कीदृश्या प्रवाहवत्या मनोविनोदिन्या रीत्या समुपस्थापयतीति प्रेक्ष्यताम्—

"क श्रम क्रियता प्राज्ञा प्रियाप्रीतौ परिश्रम।
भस्मीभूतस्य देहस्य पुनरागमन कुत॥
स्व च ब्रह्म च सस्तारे मुक्तौ तु ब्रह्म केवलम्।
इति स्वोच्छित्तिमुक्त्युक्तिवैदग्धी वेदवादिनाम्॥
अग्निहोत्र त्रयी तन्त्र त्रिदण्ड भस्म पुण्ड्रकम्।
प्रज्ञा पौरुषनि स्वाना जीवो जल्पति जीविका॥"

मोक्षे सुखस्याभाव इत्येतत्प्रतिपादक गौतम ऋषि कीदृश्या वक्रोक्त्योपहसतीति वीक्ष्यताम्—

'मुक्तये य शिलात्वाय शास्त्रमूचे सचेतसाम्।
गोतम तमवेक्ष्यैव यथा वित्थ तथैव स॥"

नैयायिकानामीश्वरवादितविधाया कविवरस्याक्षेपप्रकारो विलोक्यताम्—

"दवश्चेदस्ति सर्वज्ञ करुणाभागवन्ध्यवाक्।
तत् किं वाग्व्ययमात्रान्न कृतार्थयति नार्थिन॥"

दानधर्मस्य वैयर्थ्यप्रतिपादनपराया व्यङ्ग्यस्या क्षण दृष्टि क्षिप्यताम्—

"किं वित्त दत्त तुष्टेयमदातरि हरिप्रिया।
दत्वा सर्वं धन मुग्धो बन्धनं लब्धवान् बलि॥"

दर्शन यदि किमपि सद्वादि तु अपरमपि असद्वादि, तदितर तु सदसद्वादि। तदेव दर्शनानि भिन्नभिन्नान्येव मतानि प्रतिपाद्य जनाना मनि भ्रमे पातयन्ति।

कर्म कर्मत्वेनानुमन्यते यदस्ति श्रुतिसम्मतम्। तस्मात् सा 'चोदनालक्षणार्थो धर्मः' इत्येतेन सूत्रेण धर्मं लक्षयन्ती जगतीं कर्माचरितुं नुदति। 'अङ्गीकृतं सुकृतिनः परिपालयन्ती'त्येतत्कथनीयं कथनं च मीमांसादर्शनसिद्धान्तप्रदर्शनपूर्वकं कविः प्रकटीचकार। एषा चमत्कारचारुता इह वीक्षिता भवति सम्यक्।

"त्यवेशि रत्नत्रितये जिनेन यः
स धर्मचिन्तामणिरुज्झितो यया।
कपालिकोपानलभस्मनः कृते
तदेव भस्म स्वकुले स्तृतं तया" ॥

इत्येतस्मिन् श्लोके 'रत्नत्रितयेन' इत्येतदाम्नाय कविः स्वस्य बुद्धदर्शनप्रावीण्यं प्रदर्शयति। वक्ति च स यद् बुद्धोपदिष्ट सम्यग्दर्शन-सम्यग्ज्ञान-सम्यक्चारित्र-लक्षणरत्नत्रितयं न हेयम्। कलिनाशनदमयन्तीनलकीर्तनापदेशेन नानाविधं नैजं ज्ञानमाकलय्य स्वकाव्यामृतपानपरायणान् जनान् अपि तत्तच्छास्त्रीयज्ञानेन परिप्रीणयितुमुत्सहते।

"ध्वान्तस्य वामोरु विचारणायां
वैशेषिकं चारुमतं मतं मे।
औलूकमाहुः खलु दर्शनं तत्
क्षमं तमस्तत्त्वनिरूपणाय ॥

इत्येतेन श्लोकेन कविरेकतस्तु स्वीयं वैशेषिकदर्शननैपुण्यं निदर्शयत्परतोऽसौ 'औलूक'मित्येतेन पदेन वैशेषिकदर्शनमप्युपहसति मनोरञ्जनपूर्वकम्।

महाकवेः श्रीहर्षस्य नैषधीयं चरितं कलापक्षपातिनां काव्यानां शिरोमुकुटमणिः। परं कलाकेलीविलासानां केलिकुञ्जत्वे सत्यपि तस्य कलावादिकाव्यान्तरमिव न सौगम्येन तत् सहृदयबुधबोधगम्यम्। तदीय रस सौन्दर्यं स एवोपभोक्तुं क्षमते यो भावुकः सन् शास्त्रार्थतत्त्वावगमक्षमनिशितप्रतिभावान् महान् मेधाव्यपि वरीवर्ति। स्वकाव्यस्य काव्यान्तरालब्धवैशिष्ट्यं स्वयमेव कविराभनति—

यथा यूनस्तद्वत् परमरमणीयापि रमणी
कुमाराणामन्तःकरणहरणं नैव कुरुते।
मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः
किमस्या नाम स्यादरसपुरुषानादरभरैः ॥

आदिमारभ्य अन्तं यावद् यावन्तोऽपि श्लोका अत्र उपलभ्यन्ते तावत्सु सकलेष्वपि ललितानां पदानां रमणीयं निबन्धनं विभाति । परं तेषु ललितपदावस्थैव न तत्र विलक्षणं पाण्डित्यमपि वितनुते । नानाशास्त्रनानानरत्वात् धीप्रदामकारिशब्द-परिपूर्णमाम्रत्वाच्च ते ललिता अपि श्लोका प्रतिभाशालिनां शास्त्रिणां समुदायमेव नितरां प्रीणयन्ति । सामान्यधियः पुमांसो न तत्र सर्वाङ्गीणतया पूर्णमानन्दमास्वादयितुमर्हन्ति । पद-लालित्यशोभा अस्य काव्यस्य द्रागमवलोक्यताम्—

"तत्रावनीन्द्रचयचन्दनचन्द्रलेप-
नेपथ्यगन्धवहगन्धवहप्रवाहम् ।
आलीभिरापतदनङ्गशरानुसारी
संरुध्य सौरभमगाहत भृङ्गवर्गः ॥"

"देवी पवित्रितचतुर्भुजवाममागा
वागाऽऽस्पत् पुनरिमां गरिमाभिरामाम् ।
अस्यारिनिष्कृपकृपाणसनाथपाणेः
पाणिग्रहादनुगृहाण गणं गुणानाम् ॥"

यथैतस्मिन् चार्वङ्गि काव्ये प्रतिपदं ललितं तथैव काव्यस्यास्य प्रतिश्लोकमलङ्काराणां सुषमा विलोकिता भवति परं तथा तेषामलङ्काराणां सौरस्यमपि परं प्रधीजनैरेवाप्यते । द्वित्राः श्लोकाः काव्यस्यास्यालङ्कारप्रियत्वं ज्ञापयितुं निर्धीयन्ते—

"कलसे निजहेतुदण्डजः किमु चक्रभ्रमकारितागुणः ।
स तदुच्चकुचौ भवन् प्रभाझरचक्रभ्रममातनोति यत् ॥"

इत्येव श्लोकोऽनुमानरूपकभ्रान्तिमदुत्प्रेक्षाविरोधाभासालङ्कारैरलङ्क्रियमाणोऽस्ति । परं यावदेतस्य श्लोकस्यार्थावधारणं न भवति तावत् तदलङ्कारचमत्कारो न हृदयमस्य प्रमोदयितुमलम् ।

"अपि लोकयुगं दृशावपि श्रुतदृष्टा रमणीगुणा अपि ।
श्रुतिगामितया दमस्वसुर्व्यतिभाते सुतरां धरापते ॥"

इत्यत्र वचनश्लेषक्रियादारकदीपकतुल्ययोगितालङ्काराणां स्थितिरत्यन्तं स्फुरति नितराम् । परमत्रापि अलङ्कारशास्त्रस्य सूक्ष्मज्ञानमन्तरेणालङ्कारजनितं माधुर्यं न सुलभमेवमेवेह कविप्रयुक्तात् 'व्यतिभाते' इत्यतस्मात् पदाद् व्याकरणविषयकं सौन्दर्यमपि स एवास्वादयितुं क्षमते योऽस्ति वैयाकरणः ।

अथ स्थिते श्लोके समासोक्तिश्रिय प्रेक्ष्यताम्—

नवा लता गन्धवहेन चुम्बिता
करम्बिताङ्गी मकरन्दशीकरैः ।
दृशा नृपेण स्मितशोभिकुड्मला
दरादराभ्यां दरकम्पिनी पपे ॥

कवे काव्यमिद परमरमणीयम् । तत्र साहित्यिकाना सर्वस्वं ध्वनि स्वेन गुणालङ्कारादिजित्वरेण अधरीकृतामृतमाधुर्येण माधुर्येण रसिकानां निकर मुहुर्मुहुर्धिन्वन् विद्योततेतराम् ।

"एत नल त दमयन्ति परय स्वजार्तिमित्यालिकुलप्रबोधात् ।
श्रुत्वा स नारीकरवर्तिसारीमुखात् स्वमाशङ्कत यत्र दृष्टम् ॥"

इत्येतादृशानां श्लोकानां बाहुल्य तत्र विभाति यद् अलङ्कारध्वने शङ्काप्रभृति विविधभाव-सस्फुरणस्य श्रिया सुधीसमाज प्रीणाति भृशम् । प्रकृते श्लोके इह सारीवाक्ये नारीवाक्यभ्रमाद् वस्तुना भ्रान्तिमदलङ्कारो व्यज्यते ।

वस्तुध्वने सौन्दर्यं दर्शयितु कविवरेण्यस्य श्लोकोऽयमीक्ष्यताम्—

"अपि तद्वपुषि प्रसर्पतोर्गमिते कान्तिझरैरगाधताम् ।
स्मरयौवनयो खलु द्वयो प्लवकुम्भौ भवत कुचावुभौ ॥

अत्र हि कुचयो स्मरयौवनप्लवनकुम्भत्वोत्प्रेक्षया तयोरौत्कट्य कुचयोश्चातिवृद्धि र्व्यज्यत इत्यलङ्कारेण वस्तुध्वनि ।

श्लषे कवेर्मनोवृत्तिर्नितरा प्रायेण सर्वत्रैव रममाणा वीक्ष्यते पर त्रयोदश सर्गे सा वृत्ति स्वकीय श्लेषविषयकमनुराग प्रकृष्टतरता नयन्ती पर्यवसिता भवति ।

'देव पतिर्विदुषि नैषधराजगत्या
निर्णीयते न किमु न व्रियते भवत्या ।
नाय नल खलु तवाति महानलाभो
यद्येनमुज्झसि वर कतर परस्ते ॥"

इत्येतेनैकेनैव श्लोकेन श्लेषानुरागी कविरिन्द्राग्नियमवरुणनलान् पञ्चापि वर्णयन् अहो, वीक्ष्यमाणो भवति ।

महाकवीनां रचनासु निसर्गतयैवानुप्रासयमकादीना शब्दालङ्काराणां घटा आपतिता भवति । सा सेयं काव्यगगनमावरीतु स्वत एव सातिशयवेग धावन्ती वीक्ष्यते । न तदर्थं ते स्वल्पतमेऽपि प्रयासे प्रवर्तन्ते । अस्मादेव कारणात् अस्य

महाकवेः काव्ये ते सर्वत्रैव विकीर्णतया प्राप्यन्ते। अत्र तु केवलं कतिपया स्वरूपतया एव सौभाग्यवर्धनमुदाहरणत्वेन संकलितानि निर्दिश्यन्ते—

यमकस्य शोभा विभा विभाव्या—

"अवलम्ब्य दिदृक्षयाम्बरे क्षणमाश्चर्यरसालसं गतम्।
स विलासवनेऽवनीभृतः फलमैक्षिष्ट रसालसंगतम्॥"

अनुप्रासस्य पेशलतया नन्दयत्यमुना—

कलकलः स महालिजनानना-
दुदलसद्विपुलस्वरितैरितैः।
समभिगम्य मुनालयमीयिवान्
स्तवकरः स विदर्भपुरन्दरः॥

अप्रस्तुतविधानेऽपि कविरयमद्वितीयः। तदीदृशी विशिष्टता क्वापि शास्त्रीयकल्पना-कलिता सती, क्वापि शृङ्गारिणीभिरूहाभिरङ्किता सती, क्वापि च लोक-व्यवहारबन्धुरतया बन्धुरा सती हृदयेऽवतरति।

अप्रस्तुतविधानं शास्त्रीयकल्पनाकलितम्—

"अजस्रभूमीतटकुट्टनोत्थितैरुपास्यमानं चरणेषु रेणुभिः।
रयप्रकर्षाध्ययनार्थमागतैर्जनस्य चेतोभिरिवाणिमाङ्कितैः॥"

अप्रस्तुतविधानं शृङ्गारिकल्पनालोलम्—

"अहह मद् विरहोष्मणि मज्जितं मनसिजेन तनूरयुगं तदा।
स्फुरति तत्कदनं कदलीतरुर्ज्वलदनूनसदूषित॥"

अप्रस्तुतविधानं लोकव्यवहारबन्धुरम्—

"दर्वेल्लिमं दाडिममर्कबिम्बमुत्तार्य सन्ध्याम्बरगिरेर्ज्ञितास्य।
तारामयं बीजमुदायमीय कालेन निष्ठ्यूतमिवास्थिपूगम्॥"

कविरप्रस्तुतानां चयनं व्याकरण-दर्शन-कामशास्त्रादिभ्योऽपि विदधानो दृग्गोचरीभवति। एतादृशानि पद्यान्यतिदुरवगाहानि सन्ति। कालिदासमाघादिकविष्वपि एष पन्था अनुसृतः परमस्मिन् नैषधस्यो सर्वा प्रवृत्तिर्नितरां प्रौढतां सुवे-नावाप्यते। दर्शनव्याकरणादिषु एवोपमानान्यन्यानि कविनैवेतदपि न, साहित्यशास्त्रकारैरपि तानि गृहीतानि दृश्यन्ते।

"न वर्तसे मन्मथनाटिका कथं प्रकाशरोमावलिसूत्रधारिणी।

इह कविनाऽनुस्यूतराजमौलिरत्नेषु हारेषु गृहीतदीपकत्वमुत्प्रेक्षितम् ।

यद्वैरिसामन्तनितम्बिनीनामश्रान्तसन्तापकदर्थ्यमाने ।

पराङ्मुखत्वं शोषविशङ्कयेव कुचस्थले कुङ्कुमपङ्कमासीत् ॥ ११०५ ॥

अत्र कुचस्थले कुङ्कुमलेपस्य पराङ्मुखत्वं स्तनयोः शोषशङ्काया हेतुत्वेनोत्प्रेक्षितम् ।

य वीक्ष्य पाथोधिरधिज्यचापं शोणाश्मभि शोणितशोणदेहैः ।

क्षोभाद्भीदर्गं रघुगजगागजीर्णव्रणस्फोटमिवाचचक्षे ॥ ११०९ ॥

अत्र रक्तपाषाणेषु जीर्णव्रणस्फोटत्वमुत्प्रेक्षितम् ।

एवंविधाभिर्मधुरमधुराभिरुत्प्रेक्षाभि काव्यमेतन्निरन्तरं विभूषितं सद् भृशं सचेतसां चेतांसि चोरयति ।

सम्प्रति अन्येषां च विचतुराणामलङ्काराणां छविं प्रेक्षन्ताम्—

"भोजक्षमापालविमुक्तधारानिपातमात्रेण रणेषु यस्य ।

कल्पान्तकालानलचण्डमूर्तिश्चित्रं प्रकोपाग्निरवाप शान्तिम्" ॥ ११९४ ॥

अत्र विरोधाभास,

"धुत्र रणे यस्य जयामृतेन क्षीव क्षमाभर्तुरभूत् कृपाण ।

एका गृहीता यदनेन धारा धारासहस्र यशसोऽवकीर्णम्" ॥ ११९६ ॥

इह परिवृत्ति श्लेषश्च,

"अन्यायमेकं कृतवान् कृती यश्चालुक्यगोत्रोद्भवरत्नलोऽपि ।

यत्पूर्वभूपालगुणान् प्रजाना विस्मारयामास निजैश्चरित्रैः ॥ ११०१ ॥

इह व्याजस्तुतिश्च सहृदयान् प्रीणयन्ती स्वशोभां सर्वतो विकिरति । साम्प्रतं ध्वनि रमणीयतापि विलोकनीया—

"सोऽयं रणे नर्तयिता कबन्धान् मदान्धभूपालसहस्रसैन्य. ।

विलोक्यतां सुन्दरि चेदिराजस्तवास्तु दृष्टि स्मरवैजयन्ती" ॥ ११९७ ॥

अत्र कबन्धनर्तनकारित्वेन शौर्यातिशयरूपवस्तु ध्वनितम्,

"उत्तम्भयामास पयोनिधेर्यस्तीरे जयस्तम्भमदभ्रवीर ।

असूयित स्वैरविहारशीलैरालानभीत्या जलवारणेन्द्रै" ॥ ११११ ॥

इह जयस्तम्भे समुद्रगजानामालानस्य भ्रान्त्याऽसूयेति प्रतीत्या भ्रान्तिमानलङ्कारो व्यङ्ग्य. ।

प्रकृतिवर्णनविषयकं प्रेम कवेः मुख्यतोऽप्रस्तुतविधानरतम्। न तत्र प्रकृतेः बिम्बचित्राणि दृश्यन्ते। संयोगे विप्रयोगे च तदीया प्रवृत्तिः संलक्ष्यमाणा भवति। प्रथमसर्गे वर्णिता प्रकृतिरेतेना नलमुपतापयन्ती चेद् अवलोक्यते तदा चतुर्थसर्गे-समुल्लासिता सा दमयन्तीम्।

"सरसिजवनान्युद्यत्पत्रार्पणानि हसन्तु न
घनरचितसुहृच्चन्द्र तन्द्रामुपैतु न कैरवम्।
हिमगिरिदृषद्दायादश्रि प्रलीनमदस्मिन
कुमुदविपिनस्याथो पाथोरुहैर्निजनिद्रया॥

काले किरातः स्फुटपद्मकस्य
वधं व्यधाद् यस्य दिनद्विपस्य।
तस्यैव सन्ध्या रुचिरास्रधारा
ताराश्च कुम्भस्थलमौक्तिकानि॥"

इत्यादिषु एकोनविंशद्वाविंशसर्गयोः शोभमानेषु श्लोकेषु प्रदर्शिता प्रकृतिलक्ष्मी सयोगे रुचिमाकलयन्ती दृश्यते।

प्रकृतेः रम्यता स्वभावोक्तीनाञ्च विच्छित्तिः यादृशी माघकाव्ये वाचकानानन्दोद्वर्षिणी न तादृशीहेति केषाञ्चन काव्यरसिकानां विचारः।

वस्तुतः संस्कृतकाव्येषु नैषधीयचरितसन्निकृष्टपदालङ्काराणि इह दृश्यन्ते। तत्रत्यानां सुमृदुललितानां पदानां रमणीयता अलङ्काराणां चमत्कारस्य चारुता, अनन्यनीकाशा अनुप्रासविलासाश्च चित्रिताः। काव्येऽस्मिन् उत्प्रेक्षाणामथ चोपमानां विम्बमपि सर्वथैव अनुपमा छटा भवति। नात्र संशयो यदेतत्काव्यं मर्मीयं मधुरतमा धियं चित्तक्षोभमपि पूर्णतया परितर्पयति। एतस्मात् मनीषिणां, परमश्लाघनीयानां गुणानामग्रे कस्य नाम हि जनस्य दृष्टिः छिद्रमनुद्गता दुर्बोधतमाञ्च पुनरुक्तादिदोषं कथमपि नावर्जयितुं शक्नुवन्ति। एतत्काव्यप्रशंसायामिदं युक्तमेवोक्तं केनापि—

"तावद् भा भारवेर्भाति यावन्माघस्य नोदयः।
उदिते नैषधे काव्ये क्व माघः क्व च भारविः॥"

कान्यकुब्जेश्वरो जयचन्द्रः स्वयमेवास्मै कान्तदर्शिने कवये ताम्बूलद्वयमासनञ्च प्रदाय सम्मानं यददर्शयत् तत्तु वस्तुतोऽस्याभरणालङ्कृतस्य कवीन्द्रस्य सरस्वत्याः समाराधनसमाश्रयप्रतिभाया पुरो नातिरिक्तमपि महत्त्वं मूल्यं वा निदधाति। अहो तस्य चातुरी धन्या यां तदीयाः प्रतिद्वन्द्विनः अपि श्लाघन्ते एवम्—

"हिंस्रा सन्ति सहस्रशोऽपि विपिने शौण्डीर्यवीर्योद्धता
स्तस्यैकस्य पुनः स्तुवीमहि महः सिंहस्य विश्वोत्तरम्।
केलिः कोलकुलैर्मदो मदकलैः कोलाहलं नाहलैः
संहर्षो महिषैश्च यस्य मुमुचे साहंकृते हुंकृते॥"

नैषधीयचरितं मानवजीवनस्य सम्भवना नाङ्कते तत्र शृङ्गारस्यैव एकदेशिचित्रं चित्रितं कथामयोजनमपि कलाभिकया दृष्ट्या नाधिकं समीचीनमित्येतद् यत् काव्यमिदं लक्ष्यीकृत्य केचन शंसन्ति न तत्रास्मदीयं मनो रज्यति। जगत्यां सर्वेऽपि मानवा येषु भावेषु जीवन्ति तेषां भावानामत्र काव्ये सर्वत्र मनोरञ्जनकारिणी सुन्दरता रममाणा वीक्ष्यते। चन्द्रस्य आह्लादकता, सुमनसां सौरभमाराममाणा मनोज्ञमञ्जुलता, उद्दामा वासन्तिकी श्री सुन्दर्याः सौन्दर्यंम, संगीतस्य माधुर्यम्, सुधोपमारसैते सरसा पदार्थाः कं न मानवं रमयन्ति? काव्येऽस्मिन् एते सर्वेऽपि पदार्था नितरामेव प्रवीणतया कलात्मकतया गीताः सन्ति। तेषां सौन्दर्यस्योन्मीलनाय कौशलस्य सा सीमा कविना प्रदर्शितास्ति या कदाचिदन्येन कविनाविर्भाविता। मानवस्य प्रकृतिः संसारोन्मुखी वर्तते। तस्याः संसारोन्मुखतां काव्यमेव तथा परावर्तयितुं प्रयतते यथा सा मनस्तृप्तिसंलब्धिपूर्वकं रमन्ती रमन्ती तत्त्वदयं प्रति स्वीयां दृष्टिमुत्क्षिपेत् यदधिगमनेन शाश्वतिकी शान्तिरनश्वरं सुखञ्च समवाप्यते। काव्यमिदं स्वकीयस्यास्य कर्तव्यस्य पालने न मनागप्युपेक्षां कुर्वद् दृष्टं भवति। काव्यमिदं सदैव दर्शयति यन्मानवे निसर्गतो वसति। स्मरेण मानवस्तपति सत्यमेतद्, कविरपि ब्रवीतीदमेव—'नलस्य तन्वी हृदयं विवेश यत्'। स्मरोपतप्तता न जघन्योऽपराधः। मानवस्तु अस्त्येव कामक्रोधलोभमोहादीनामाकृतिः। परं स न एतैरेव विनिर्मितः। तन्निर्माणकारिषु तत्त्वेषु बुद्धिरप्येकतमं तत्त्वम्। सदसद्विवेचनपूर्वकमाचरणमेव मानवस्य 'धर्म' इति निगद्यते। अत एव नीतिकारोऽप्याह 'धर्मो हि तेषामधिको विशेषः' इति। तस्मात् कविस्तमेव, तामेव भाषामाश्रित्योपदिशति काव्ये यस्या भाषायाः प्रयोगाय स आदिष्टो भवति—

"स्मरोपतप्तोऽपि भृशं न स प्रभुर्विदर्भराजं तनयामयाचत।
त्यजन्त्यसून् शर्म च मानिनो वरं त्यजन्ति न त्वेकमयाचितव्रतम्॥"

मानवस्य कुतूहलाक्रान्तमनस्कता सर्वविदिता। कविस्तामेव स्वकीये काव्ये अनल्पलब्धया चतुरतयादीदृशत्। अस्ति च मानवो नियतिपरतन्त्रः। एतद्धि नियतिपरवशत्वमपि मानवस्य लक्षणेऽन्तर्गतमस्ति। कविस्तदेव निर्दिशत्येवम्—

## गद्य-विकासः

गीर्वाणवाण्या गद्यसाहित्यं परमललितं पाण्डित्यपेशलं चिरन्तनञ्च। वैदिक-संहितानामुदयो यस्मिन् पूततमे पुरातनतमे युगे बभूव तस्मिन्नेव युगे गद्यमप्यभिव्यक्तिमगमत्। *कृष्णयजुर्वेदस्य तैत्तिरीयसंहितायां यस्य गद्यस्य दर्शनं* भवति तदस्ति गद्यस्याद्यं स्वरूपम्। तस्यां संहितायां किञ्च तस्यैव वेदस्य काठकमैत्रायण्यादिसंहितास्वपि गद्यं तावत्यामेव मात्रायां परिलक्ष्यते यावत्या मात्रया तत्र पद्यानि शोभन्ते। ततश्च गद्यस्य प्रतिष्ठा अथर्ववेदे वीक्ष्यते। अथर्वणः षष्ठो भागो गद्यात्मक एव समग्रः समवाप्यते। ब्राह्मणग्रन्थेषु तु सर्वत्र गद्यमेव विद्योतते। आरण्यकसाहित्यमपि गद्यमयं भवद् विभाति। उपनिषत्सु प्राचीनतमोपनिषदपि *गद्यात्मिकैव भूत्वा विभ्राजते*। तदेवं वैदिकसाहित्ये गद्यस्य प्रयोगोऽतिव्यापकत्वेनोदात्तत्वेन च कृतो दृश्यते। आवेदोपनिषदन्तानां ग्रन्थानां गद्यं पर्यालोच्य ज्ञायते यद् गद्यस्य विकासः शनैः शनैः समजायत। यथा यथा समयो व्यतीयाय तथा तथा तत् पर्यपुष्यत्। वेदप्रयुक्ताद् गद्याद् ब्राह्मणारण्यकेषु प्रयुक्तं गद्यं परिष्कृततरं विलोक्यते। उपनिषत्सन्दर्भितगद्ये तु रमणीय उत्कर्षः परिस्फुरति। वस्तुतो वैदिकवाङ्मये समुन्मीलिता गद्यपरम्परा स्फुटमेवेदं ज्ञापयति यदस्मदीयो देशो गद्यस्याविर्भावने चिरात् सान्द्रस्नेहमदर्शयत्।

अत्र वैदिकसाहित्याद् गद्यस्य त्रिचतुराण्युदाहरणान्युद्ध्रियन्ते येनोपरिकथितं कथनं पुष्टिमासादितं स्यात्—

"भृगुर्वै वारुणिः वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति। तस्मा एतत् प्रोवाच। अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति। तं होवाच। यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ति। तद् विजिज्ञासस्व।' ( तैत्तिरीय० )

'न म[illegible] ह उवाच। अथैनमुवाच—'वरुणं राजानमुपधाव पुत्रो मे जायतां तेन त्वा यजै इति। 'तथा' इति स वरुणं राजानमुपससार—'पुत्रो मे जायतां, तेन त्वा यजै' इति। तथेति।' ( ऐतरेयब्रा० )

"मूर्धाऽहं रयीणाम्, मूर्धा समानानां भूयासम्, रुजश्च मा वनश्च मा हासिष्टाम्। मूर्धा च मा विधर्मा च मा हासिष्टाम्।" (अथर्ववेद)

वैदिकसाहित्यस्य भाषा विषयप्रधानास्ति। न तत्र सौन्दर्यं प्राप्यते। तत्र समास-प्रयोगोऽपि न दृश्यते। तत्रत्यानामाख्यानानां भाषायां रोचिष्णुता सरलता स्वाभाविकता च वीक्ष्यन्ते। न तत्र प्रौढत्वं न च सान्द्रश्लिष्टलसितानि पद्यान्येव प्राह्यानि भवन्ति। परं प्रसादिकतायाः कुत्राप्यभावो नास्ति। एषा हि नदीया प्रसन्ना पदावली किमपि विचित्रमेव माधुर्यं वर्षति। यो हि मधुरिमा— "सत्यं वद, धर्मं चर, स्वाध्यायान्मा प्रमदः, तमसो मा ज्योतिर्गमय, तेजोऽसि तेजो मयि धेहि" इत्यादिकायां सरलतां परिष्वजमानायां पदपङ्क्त्या सुखं प्रीतिञ्च ददाति न तादृशं सुखं प्रसन्नता वा तादृशी, कृत्रिमताकलिता पदश्रेणी प्रयच्छति।

आरण्यकस्य गद्यस्य सौन्दर्यं वीक्ष्यताम्—

'एतमेव विदित्वा मुनिर्भवति। एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति। एतद्ध स्म वै तत् पूर्वे विद्वांसः प्रजां न कामयन्ते।"

वैदिकयुगे यादृश्या गद्य निबन्धनशैल्या विपश्चितां मनोऽनुरागः प्रावर्तत न तादृश्या शैल्या तदुत्तरकालवर्तिनो विद्वांसो रुचिं दर्शयन्तो लोचनगोचरीभवन्ति। अत एव तद्विधस्य गद्यस्य विकासः प्रसारश्च निरुद्धोऽभवत्। वैदिकयुगस्य गद्य सामान्यं वर्तनं। तत्र सैव भाषा प्राधान्येन प्रयुक्तास्ति या दैनिकव्यवहारे व्यवह्रियते। दैनिकव्यवहाराढ्या भाषा न प्रायेण सुरक्षायोग्या मता भवति अनस्तस्या दिशि लोके विदुषां चेतः उपसरति। गीतिषु पद्येषु स्वर लयविशिष्टायां वाक्यावल्यां भवत्याकर्षणम्। मनस्तत्र विशेषेणानुरज्यति। अशिक्षिता अपि जानपदछन्दोबद्धया गिरया अनायासेन आवर्जिता भवन्ति, सा छन्दोमयी वाणी सरिति हृदयं स्पृशति भवति च सा सत्वरं कण्ठगता। अतः साहित्ये पद्यमेव स्थायि सम्मानं लभते। संस्कृतभाषायां वैदिककालवर्तिनो गद्यस्य निरोधे हेतुरपि लोकभावना कारणमभवत्। गद्यस्य प्रयोगः शनैः शनैः क्षीणतामेव ययौ प्रायेण यादृशस्यास्य स्वरूपमुपनिषदां वा ब्राह्मणानां वा संहितानां समय पर्यवेक्ष्यते तादृशमेव सदासमाराधनीयमपि गद्य वीक्ष्यते। वीक्ष्यताम्—'स तथ श्रुत्वा तमध्वनधिरुह्य प्रत्यागमोपाध्यायकुलमुपाध्यायानी च स्नाता केशान् व्यपरदन्त्युपविष्ट तद्दृष्टो नागस्तानीति शापायास्य मनो दधे।"

गद्यम्प्रति विदुषामनुराग परं सदैव न्यूनतायां वाधिकतायां प्रवर्तमानोऽदृश्यत। इदमेव कारणं यद् यास्को निरुक्त गद्ये निबध्नन् तस्मिन् कालेऽपि दृष्टो भवति यस्य कालस्यातीतस्य महाविंशतिशतकानि यातानि।

गच्छता कालेन गद्यस्योपयोग प्रधानतया टीकासु व्याकरण-ज्यौतिषायुर्वेदादिविषयकेषु ग्रन्थेषु विद्वद्भि प्रारब्ध। यादृशा विषया आसंस्तादृश सौन्दर्यमपि तत्रत्ये गद्ये स्थानमलभत। महर्षिपतञ्जलेर्महाभाष्ये गद्यश्रियं पश्यन्तु—

"एवं हि श्रूयते। बृहस्पतिरिन्द्राय दिव्य वर्षसहस्र प्रतिपदोक्तानां शब्दाना शब्दपारायण प्रोवाच। नान्तं जगाम। बृहस्पतिश्च प्रवक्तेन्द्रश्चाध्येता दिव्यं वर्षसहस्रमध्ययनकालो न चान्तं जगाम।"

इदमपि गद्यमनलङ्कृतमेव। परं भाषा शिष्टतमानामस्ति। तत्र प्राञ्जलता विद्यते। सा भावाभिव्यञ्जने क्षमा च।

बुद्धाविर्भावात् प्रागेव वैदिकसाहित्य परमविस्तार प्रपेदे तदीया समृद्धिर्विपुलताञ्च प्रापद्यत। तद्रक्षाया अपेक्षा विद्वज्जनानन्वभूयन। अत नवसाहित्यस्य निर्माणमारब्धमभूत्। एतन्नूतन साहित्यमपि गद्ये प्रणीतमजायत। तद् गद्यं सूत्ररूपमादाय प्रादुरभूत्। वैदिककर्मकाण्डसम्बन्धि साहित्यं सूत्रशैल्यात्मके गद्ये यद्रूपमादायोन्मीलितमभवत् पाणिने अष्टाध्याय्या तद्रूपं विस्तरता जगाम। सूत्रस्वरूपस्य गद्यस्यास्योपयोग षट्स्वपि दर्शनेषु कृतोऽवाप्यते।

सूत्रग्रन्थप्रणयनकारिणा मेधाविना दृष्टिर्गद्यस्य परिष्करणे तस्य संवर्द्धने पल्लवने वा नासीत। सा तु शास्त्रीयसमृद्धिरक्षणप्रयोजनेनैव उपसमार। तदीयमुद्देश्यमिदमेवासीत् यत् तत्तस्य समुपस्थानमतिपरिमितशब्देषु कृत स्यात्। येन तदायासमन्तरेण हृदयङ्गम भवेत् किञ्च सुरक्षमपि उपेयात।

लौकिकसंस्कृतकाले गणितज्यौतिषायुर्वेदव्याकरणदर्शनप्रभृतिविषयान् अपि यद्यपि पद्यमय्या वाण्या प्रणेतु प्रेक्षावन्त सन्नद्धा अजायन्त पर समये समये तान् अपि विषयान् प्रतिभाशालिनो लेखका गद्य एव रचयाम्बभूवु। चाणक्यो नैजे अर्थशास्त्रे गद्य प्रयुञ्जानोऽवाप्यते। तद्गद्यच्छटावलोक्यताम्—

"दर्शने प्रसीदति। वाक्यं प्रतिगृह्णाति। आसन ददाति। विविक्तो दर्शयते। शङ्कास्थाने नातिशङ्कते। कथाया रमते। परिज्ञाप्येष्ववेक्षते। पथ्यमुक्त सहते। स्मयमानो नियुङ्क्ते। हस्तेन स्पृशति। श्लाघ्ये नोपहसति।"

ईदृशानि लघुलघुवाक्यानि गद्येऽस्मिन् शोभन्ते।

सम्प्रति चरकस्य चरकसंहितायां गद्यस्याभा वीक्ष्यताम्—"नारत्नपाणिर्नास्नातो नोपहतवासा नाजपित्वा नाहुत्वा देवताभ्यो नानिरूप्य पितृभ्यो नादत्त्वा गुरुभ्यो नातिथिभ्यो नोपाश्रितेभ्यो नापुण्यगन्धो नामाली नाप्रक्षालितपाणिपादवदनो नाशुद्धमुखो नोदङ्मुखो न विमना ...... न प्रतिकूलोपहितमन्नमाददीत।"

बौद्धविद्वांसः स्वमतमर्थेऽनेकान् ग्रन्थान् गद्येऽपि अरचयन्। तेषु बहवो लोकप्रियाणि महात्मनो बुद्धस्याख्यानानि गद्ये लिलिखुः। आर्यशूरो जातकमालां नाम सुप्रथितां कृतिं गद्य एव लिलेख। तत्रत्यं गद्यं पश्यन्तु विज्ञाः—

'अथ कदाचित् तस्य महासत्त्वस्य भोजनकाले स्नातानुलिप्तगात्रस्य कुशलोदारसूदोपकल्पिते समुपस्थिते वर्णगन्धरसस्पर्शादिगुणसमुदिते विचित्रे भक्ष्यभोज्यादिविधौ तत्पुण्यसम्भाराभिवृद्धिकामो ज्ञानाग्निनिर्दग्धसर्वक्लेशेन्धनः प्रत्येकबुद्धस्तद्गृहमभिजगाम भिक्षार्थी।"

अस्मिन् गद्ये समासानामपि प्रयोगेण सह कथावस्तुवर्णने प्रवाहशीलभाषायां कृतमीक्ष्यते।

लौकिकसंस्कृतग्रन्थानां यस्मिन् काले प्रणयनमभूत् तदा गद्यस्य त्रीणि रूपाणि दृष्टान्यभवन्—(१) पौराणिकम् (२) शास्त्रीयम् (३) साहित्यिकम्। पौराणिके गद्ये वैदिककालस्य कतिपये आर्षा अपि शब्दा प्रयुक्ता प्राप्यन्ते। श्रीमद्भागवत विष्णुपुराणादिषु व्यवहृते गद्य उक्ता विशिष्टता स्पष्टमेवाधिगता जायते। इदं हि गद्यं वैदिकं गद्यं लौकिकञ्च गद्यं परस्परं संयोजयतीव। पौराणिकं गद्यमलङ्कृतं गुम्फितञ्च। श्रीमद्भागवते तु गद्ये प्रौढता भावाभिव्यञ्जनशीलता चातितरामीक्षिता भवति। दृश्यताम्—

"तेषां विशीर्यमाणानामतिमधुरसुरभिसुगन्धिबहुलारुणरसोदेनारुणोदा नाम नदी मन्दरगिरिशिखरान्निपतन्ती पूर्वेणेलावृतमुपप्लावयति। यदुपजोषणाद् भवान्या अनुचरीणां पुण्यजनवधूनामवयवस्पर्शसुगन्धवातो दशयोजनं समन्तादनुवासयति।

विष्णुपुराणस्य च गद्यश्रीरियम्—

"यथैव व्योम्नि वह्निपिण्डोपमं त्वामहमपश्यं तथैवाद्याग्रतो गतमप्यत्र भगवता किञ्चिन्न प्रसादीकृतं विशेषमुपलक्षयामीत्युक्तेन भगवता सूर्येण निजकण्ठादुन्मुच्य स्यमन्तकनाम महामणिवरमवतार्य एकान्तेन्यस्तम्।"

शास्त्रीयस्य गद्यस्योदाहरणत्वेन सन्ति दर्शनग्रन्थाः। षड्दर्शनेषु विद्वांस-

आचार्यां यानि भाष्याणि कृतवन्तस्तेषु भाष्येषु च यस्य गद्यस्य दर्शनं सञ्जायते तन्निर्मलं गभीरं गहनञ्च वर्तते। मीमांसासूत्रेषु शबरस्वामिनो, न्यायसूत्रेषु वात्स्यायनस्य, वेदान्तसूत्रेषु च शङ्कराचार्यस्य भाष्यं दार्शनिकस्य गद्यस्य विशिष्टोदाहरणत्वेन विभाति। अत्र भाष्येभ्यो द्वित्राण्युद्धरणानि निधीयन्ते—

"इच्छयात्मानमुपलभामहे। कथमिति? उपलब्धपूर्वे ह्यभिप्रेत भवतीच्छा। यथा मेरुमुत्तरेण यान्यस्मज्जातीयैरनुपलब्धपूर्वाणि स्वादूनि वृक्षफलानि न तानि प्रत्यस्माकमिच्छा भवति।" (श० भा०)

एतद् गद्य कियत् सरलं रुचिरं च विद्यते।

"सर्वो हि पुरोऽवस्थिते विषये विषयान्तरमध्यवस्यति, युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्वं ब्रवीषि। उच्यते—न तावदयमेकान्तेनाविषयः, अस्मत्प्रत्ययविषयत्वात्। न चायमस्ति नियमः पुरोऽवस्थित एव विषये विषयान्तरमध्यवसितव्यमिति।"

आचार्यस्य शङ्करस्य गद्ये यद्यपि प्रौढता परिस्फुरति परं न सा प्रसादमुज्झति।

न्यायमञ्जरीकारस्यापि जयन्तभट्टस्य गद्यं ललितं दृश्यते। स्वभावकर्कशमपि न्यायमाचार्यः स्वकीयया शैल्या हृदयङ्गमं कुरुते। तदीये गद्ये व्यङ्ग्योक्तीनामासारवर्षा समवाप्ता भवति। अधोनिहितेनोद्धरणेन तदीयाया गद्यसुषमाया दर्शनं भवितुमर्हति।

"आः क्षुद्रतार्किक सर्वथानभिज्ञोऽसि, ब्रह्मैव जीवात्मानो नहि ततोऽन्य। नहि दहनपिण्डाद् भेदेनापि भान्तः स्फुलिङ्गा अग्निस्वरूपा भवन्ति। तत् किं ब्रह्मण एवाविद्या? न च ब्रह्मणोऽविद्या।"

नव्यन्याये तर्कप्रधानशैल्याश्चरमोत्कर्षः सलक्ष्यते। तत्र च गद्य तु नितान्तं दुरूहं दुर्बोधञ्च। तार्किकशिरोमणीनां श्रीरघुनाथचरणानां किञ्च गदाधरमहाभागानां ग्रन्थान् विलोक्यैव तत्रत्यस्य चण्डस्य गद्यस्य स्वरूपं सम्यग् द्रष्टुं शक्यते।

दर्शनशास्त्रस्य विवेचनपद्धतिं साहित्यशास्त्रिभिरपि अभ्यवनन्दत। तैरपि नैजगद्ये सैव शैली अभ्युपगता सूक्ष्मविचारशालिनी तर्कप्रधाना। दृश्यतां काव्यप्रकाशीयं गद्यम्—

"तत्प्रयोगेऽपि विभावाद्यप्रयोगे तस्याऽप्रतिपत्तेस्तदप्रयोगेऽपि विभावादिप्रयोगे तस्य प्रतिपत्तेश्चेत्यन्वयव्यतिरेकाभ्यां विभावाद्यभिधानद्वारेणैव प्रतीयत इति निश्चीयते तेनासौ व्यङ्ग्य एव मुख्यार्थबाधाद्यभावाच्च पुनर्लक्षणीयः।"

रसगङ्गाधरकारो जगन्नाथस्तु गद्यस्य यद्रूपमदर्शयत् तत्तु सरलता स्पष्टता-स्यैव न । तत्र तु सैव रचना शोभते या नव्यन्यायग्रन्थेषु राजते ।

केषुचन शास्त्रीयेषु ग्रन्थेषु गद्य पद्यमिश्रमपि दृश्यते । तत्र मुख्यविषयस्य विवेचन गद्ये विहित पर पद्यानां प्रयोग समर्थकत्वेन कृत । एषा शैली चिकित्साशास्त्रेऽलङ्कारशास्त्रे च प्राप्यते । कौटिलीयेऽर्थशास्त्रेऽपि इयमनुसृता ।

संस्कृतभाषाया गद्यकाव्यानि तानि नेदानीमुपलभ्यन्ते यानि दण्डिबाणप्रभृतीनां कवीनां कालात् प्राक् प्रणीतान्यभूवन् । कात्यायनेन वार्तिके हि आख्यायिकाया यो निर्देश कृत, पतञ्जलिना वासवदत्ता-सुमनोत्तरा-भैमरथीना च उल्लेखो विहित, भोजेन स्वकीये शृङ्गारप्रकाशे मनोवतीसातकर्णीहरणनामधेययो रचनयोर्थ सङ्केत समुपस्थापित, दण्डिना मनोवत्या या प्रशंसानुष्ठिता, हाल्लाग्नि श्रीपालितो यां तरङ्गवतीं लिलेख, रामिलसौमिलौ च या शूद्रककथा रचयाम्बभूवतु, बाण स्वहर्षचरिते भट्टारहरिचन्द्रस्य यद् गद्य प्राशंसत्, तत्सकलमपि गद्यकाव्यनिकुरम्ब सम्प्रति दुर्लभ, न तदधिकृत्य किमपि विदितं पर तद्विषयिणी या चर्चा तैस्तैरनुष्ठिता सा तु सुदृढतयेदमवगमयति यदस्मद्भारते सुबन्धुबाणादिकविभ्य प्रागपि मनोहरगद्यकाव्यकर्तार कवय प्रादुरभूवन् । नूनमस्मद्देशस्य गता सहस्रद्वयाब्दव्यापिनी काव्यकला गद्यकलया सर्वथैव विभूषिता बभूव ।

अतिपुरातने युगे गद्यस्य यद् रूप सरलं सरसञ्च दृष्टमभवत् पर तदुत्तरकाले तस्य यद्रूप लोचनपथेऽवतरत् तत्प्राचुर्येण अलङ्कारालङ्कृत समासबहुलं श्लिष्टञ्च व्यलोक्यत । ईसवीये द्वितीये शतके महाक्षत्रपरुद्रदाम्नो य शिलालेखो जनुरवाप तस्य गद्य ज्ञापयति यत् तदाप्रभृत्येव कवीना मानसमलङ्कारालङ्कृत-गद्यग्रथने प्रणय बबन्ध ।

"प्रमाणमानोन्मानस्वरगतिवर्णसारसत्त्वादिभि परमलक्षणव्यञ्जनैरुपेतकान्त-मूर्तिना स्वयमधिगतमहाक्षत्रपनाम्ना नरेन्द्रकन्यास्वयंवरानेकमाल्यप्राप्तदाम्ना महाक्षत्रपेण रुद्रदाम्ना सेतु सुदर्शनतर कारितम् ।" ( रुद्रदाम्नो गिरिनारलेख )

गद्यमिदं स्वागामिकालगामिनो गद्यगुम्फनकारिणस्तथैवानूनुदत् यथा मनोवतीप्रभृतिगद्यकाव्यानि । गिरिनारशिलालेखे गद्यस्य यद्रूपमालोक्यते तस्य प्रौढ प्रकृष्ट सुन्दरतर च रूप हरिषेणरचितसमुद्रगुप्तप्रशस्त्या प्राप्यते । तत्र सुदीर्घसमासश्रुतिसुखदशब्दसमुदायसुशोभितगद्यकाव्यस्य मनोज्ञच्छटोच्छलति ।

श्लेषस्यापि सुन्दरता तत्र शोभते। एषा गद्यशैली उत्तरकालोद्भूतान् गद्यलेखकान् नितरामप्रीणात्। तस्मात् तेषां गद्यकाराणां गद्यमरमधुरं परममञ्जुलतया स्निग्धमानमलङ्कारैरलङ्क्रियमाणं श्लेषैराश्लिष्यमाणं दीर्घदीर्घतरसमासैराकम्यमाणमुपनिषदति। एतादृशेन विकासोन्मुखेन गद्येनास्मद्वाङ्मयस्य तः शताब्द्यो मण्डिता अभूवन् यासु गुप्तसाम्राज्य हर्षवर्द्धनशासनानेहा च चरमामाश्रयन्तु।

सुबन्धु दण्डि बाणत्रयं स्वप्राक्तनगद्यप्रणेतॄणां गद्यश्रियं चरमोत्कर्षमनयन्। तैर्हि प्रशसनीयेन प्रयासेन गद्यकलाकलेवरं सकलाभिर्ललिताभिः समग्रैः प्रसाधनैश्च सुसज्जितं भूत्वा बभौ।

सुबन्धुर्वासवदत्तां प्रणीय गद्यस्य तद्रूपं परमोत्कर्षं निनाय यत्र दीर्घदीर्घतरसमासानां बहुलता अलङ्काराणां विपुलता श्लिष्टपदानाञ्च प्रचुरता भवति। स प्रत्यक्षरं श्लेषमयोजयत् यस्मोत्ते सन्निवेशं चूत्वालङ्कारचमत्कारेण गद्यं स्वकीयमतितरामेवादीपयत्। स वस्तुतः श्लेषकविः। स सभङ्गाभङ्गोभयविधश्लेषं प्रयुज्य स्वीयं काव्यं विचित्रस्याप्यत्र उत्कृष्टोदाहरणत्वेन समर्थं क्वचित् क्वचित्तु तदीया श्लिष्टा पदरचनैतावतीं क्लिष्टतां भजते यत् तामवगन्तुं तदर्थमवधारयितुं विद्वत्तल्लजानामपि प्रज्ञा चङ्क्रम्यते। क्वचित् क्वचित् कोषसाहाय्यमन्तरेण पदमेकमपि पाठक उपसर्तुं शक्नोति न।

दीर्घतरसमासवती पदावल्यवेक्ष्यताम्—

"यत्र मदकलकलहंसमारसरसितोद्भ्रान्तभाःं ऋटविकटपुच्छच्छटाव्याधूतविकचकमलखण्डविगलितमकरन्दबिन्दुसन्दोहसुरभितसलिलया ।"

प्रसङ्गश्लेषशोभितवाक्यानि कानिचनावलोक्यन्ताम्—

" शालिनमिवाङ्गदोपशोभितं, हृदुकण्ठमिव हारिकण्ठं, कनकमृगमिव रामाकर्षणनिपुणं, जयन्तमिव वचनामृतनन्दितवृद्धश्रवसं, कृष्णमिव कं सहर्षं न कुर्वन्तम् ।"

विरोधोत्प्रेक्षोपमादिकालङ्कारयुक्तेषु वाक्येषु श्लेषस्य च चमत्कारोत्पादने स प्रयतमानो दृश्यते। तदीया सन्त्युपमा कौतूहलकारिण्य। तासु कवेरद्भुतविदग्धताया आभा परिस्फुरति।

"व्याकरणमिव वितततीव्रमदीर्घत्ववहुलं न्यायविद्यामिव उद्योतकरस्वरूपाम्" इत्यादिकान्युदाहरणान्यत्र प्रमाणम्। तस्य प्राकृतिकानि दृश्यानि श्लेषाद्दिस्यादतिशयतया मनो रमयन्ति।

"क्रमेण च रवौ विलुलितोत्थितकुलायार्थिपरस्परकलहविकलकलविङ्ककुलकलकलवाचालितवल्लरिषु" ' भगवती सन्ध्या समदृश्यत ' इत्यादिषु अभिरामतास्पर्धी क न कोविदं नन्दयति। कलावत्त्वस्य चेत् सामान्यं क्वापि दृश्यते तदा तदस्यैव कवे रचनायां वासवदत्तायां दृश्यते। कविर्बाणभट्टः सत्यमेवाह कृतिमेतदीयामुद्दिश्य—

"कवीनामगलद् दर्पो नूनं वासवदत्तया।
शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम्॥"

बाणो रत्ने प्रत्यग्रतमे स्वच्छतमे रत्नाकरात् साहित्यसागरं समर्पयामास। कादम्बरी हर्षचरितञ्च तस्य गद्यकाव्यशालासु लब्धप्रतिष्ठावनुपमौ ग्रन्थौ स्तः। हर्षचरितमुपलभ्यमानास्वाख्यायिकासु पुरातनतमा आख्यायिकास्ति। बाणस्य समये राजन्यजीवनम् 'सभाश्रयबाहुल्य मननसूत्र'। अत कविस्तस्य लब्धकीर्त्तिर्य हर्षचरितं निरबध्य। स आख्यायिका हर्षचरिताभिधाना प्रतीय संस्कृतसाहित्यसम्भारस्य गौरवमवर्धयत। तदादौ रचना प्रथमैवास्ति या भामह—दण्डि-रुद्रटप्रभृतिभिर्नाम् निर्दिष्टान् अनुसरद् ये हि कस्यापि विशिष्टस्य लक्ष्यग्रन्थस्याभावात् आख्यायिकाया लक्षणं यथायथं प्रदर्शयितुं नितान्तमेवोत्सुका नाभवन्। हर्षचरितं न केवलं काव्यवैभवं वनविदितमपितु तत् सप्तमशतकवर्तिनो भारतस्यापि आनुपूर्व्य प्रामाणिकं सांस्कृतिकं चित्रमपि सद् साहित्यजगति दीप्यते।

एतस्य हि गद्यश्रियं दर्शयितुमुद्धरणमेकं निधीयते—" स्वनमपि धूमसम्मोहमुद्भूतिमिमिनेव नवयन्त, स्वेदिन इव विलीयमानमधुपटलगोलगलितमधुच्छिष्टवृष्टय काननेषु, सलनय इव परिशीर्यमाणशिलासहतयो महीधरेषु, गृहीतशिलाकवला इव ज्वलितसूर्यमणिशकलेषु शिलोच्चयेषु, प्रत्यदृश्यन्त दारुणा दावाग्नय।"

बाणस्य कादम्बरी अत्यन्तहृद्या रचना। न तादृशी कापि रचना साहित्यसंसारे द्वितीया। इमां रचनामधीत्यानुशील्य च विद्वज्जगद् बाण 'बाणोच्छिष्टं जगत् सर्वम्' इत्यनेन श्लाघनेन श्लाघमानं चिरकृतज्ञमाश्र भवति। केवलमिदमेकं वाक्यं बाणस्य वा तदीयायाः कृतेः अस्या महनीयतां महत्त्वसकलाञ्चोच्चैरुद्घोषयति। साहित्यिकं यदपि सौन्दर्यं गणितं तदखिलमपि सर्वांशतस्तत्रोत्कीर्णं विलोक्यते। तत्र कलापक्षो भावपक्षश्च द्वावपि स्वकीयेन पूर्णेन सहृदयेन च वैभवेन अजेयेन प्रतापेन सह सानन्दं विभ्राजमानौ दृश्येते। क्वचित्क्वचिदपि यदा

दृष्टिर्गच्छति तदा सा तत्रैव स्थिरा भवति। न तत क्वाप्यन्यत्र गन्तुमभिलषते, चेत् प्रकृतिच्छटावलोकनाय सा गच्छति तदा तत्रापि तस्या स्थिति सैव सञ्जायते तत्रापि सा निष्कम्पा भूत्वा निमेषालसपक्ष्मपङ्क्तिर्भवन्ती तदवलोकन एव परा भवति। सर्वाण्यपि वर्णनानि नितरामेव बन्धुराणि बद्धान्यानि समुज्ज्वलानि सन्ति। उपमोत्प्रेक्षादिकाना सकलानामप्यलङ्काराणा छटा तु तत्र भास्येव पर विरोधाभासश्लेष परिसंख्यालङ्काराणा यादृशी मञ्जुला मधुरता अस्य कवे कवितासु वीक्षिता भवति न तादृशी सम्भवत क्वचिदपि वर्तते। हार्दिक्य सर्वा अपि भावना साकारा भूत्वा अस्य गद्यानिरे नृत्यन्त्य सविलास मीक्षणपथेऽवतरन्ति।

आदर्शस्य गद्यस्य सर्वेऽपि गुणास्ते ये तेन हर्षचरिते—

"नवोऽर्थो जातिरग्राम्या श्लेष स्पष्ट स्फुटो रस।
विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुर्लभम्॥"

उल्लिखितास्ते सर्वेऽपि तस्य गद्ये विराजन्ते।

स एतावान् महान् यत् तत्प्रशसायामुदीरिता —

"कादम्बरीरसभरेण समस्त एव
मत्तो न किञ्चिदपि चेतयते जनोऽयम्"
"प्रागल्भ्यमधिकमाप्तु वाणी बाणो बभूवेति"
"रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति।
सा किं तरुणी? नहि नहि वाणी बाणस्य मधुरशीलस्य॥"

इत्यादिका सर्वा अपि सूक्तयो लघीयस्य एव प्रतिभान्ति।

तदीया रसनोपमाश्री प्रेक्ष्यताम्—

"क्रमेण च कृत मे वपुषि, वसन्त इव मधुमासेन, मधुमास इव नवपल्लवेन, नवपल्लव इव कुसुमेन, कुसुम इव मधुकरेण, मधुकरेण इव मदेन नवयौवनेन पदम्।"

सम्प्रति परिसख्याया अपि लक्ष्मी इह विलोक्यताम्—

यत्र च महाभारते शकुनिवध पुराणे वायुप्रलपित, वयःपरिणामे द्विजपतनम्, 'मूलानामधोगति।"

उपदेशस्य माधुर्यमत्र लघुलघुवाक्यै सरलसरलतरं कियद्रमणीयता नीतम्—

"सखे पुण्डरीक, नैतदनुरूपं भवतः। क्षुद्रजनक्षुण्ण एष मार्गः। धैर्यधना हि साधवः। किं यः कश्चित् प्राकृत इव विक्लवीभवन्तमात्मानं न रुणत्सि। क्व ते तद् धैर्यम्। क्वासौ इन्द्रियजयः।" तत्र—"प्रोषितजनजायाभीदैःपटहरहटमन्मथा स्फालितचापरवमयमधुकरमुखरिनपथिकहृदयहरविरहाग्निकृतमार्गेषु" इत्यादीनि सहृन्मनो न प्रैंद्धार्धनस्मनमरालीनि वाक्यानि, "मात्मानमिव निर्विष्टदुमम्, निरन्तरद्विजमिव सततविर्मूतमृगतृष्णम् " इत्यादिकानि भूयिष्ठानि श्लिष्टानि वाक्यानि, 'सुरभिविलेपनधरमपि मलेनाविर्मूतहव्यधूमगन्धम्, मातङ्गकुलाध्यासितमपि पवित्रम्" इत्येवंविधानि पुष्कलानि वाक्यानि विलसन्ति विरोधाभासत्रिमण्डितानि।

दण्डी गद्यकविषु स अस्ति यमित्थं समग्रमपि साहित्यिकं जगत् स्तौति—

"जाते जगति वाल्मीकौ कविरित्यभिधाऽभवत्।
कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि॥"

दण्डिनो गद्यं नितरां सुबोधं सरसं प्रवाहमयञ्चास्ति। न तत्रास्ति श्लेषभार वामनीभूतं न च तद्दीर्घ समासकर्कशशब्दकानिबद्धम्। तत्रास्ति व्यवहारक्षम सजीवं स्फूर्तिसुस्मितम्। न तदलङ्काराडम्बर निपीडितम्। शब्दानां चयन व्यावहारिकं तत्र। भाषा च तत्र वाग्धारात्मिका।

तदीयदशकुमारचरितं हि आख्यानकाव्यस्योज्ज्वलं निदर्शनम्। तत्र हास्य शिष्टं व्यंग्यं हृदयानन्दकरं, कथावस्तु कौतूहलौत्सुक्यवर्धनं, पात्राणि च पुनरस्यैव संसारस्य सन्ति, सन्ति च तानि प्राणवन्ति। वर्णनमस्ति स्वल्पं परं न तत्कथाप्रवाहप्रतिबन्धि। टालिस्वायें दण्डिकविर्विश्वविश्रुतः—"दण्डिन पशला स्यिम्।" स स्वरचनाभिर्विशेषतो दशकुमारेण—स्वसमयवर्तिसामाजिकस्थिति-सम्बन्धि चारुतरं चित्रं च प्रस्तौति।

"अथ राजवाहनो विशेषस्य क्रियापाटवेन फलितमिव मनोरथं मन्यमान पुष्पोद्भवेन सह स्वमन्दिरमुपेत्य सादरं बालचन्द्रिकामुखेन नितम्बिन्यै मणिसोपाय वेदयित्वा "इत्यतिष्ठत्।" इत्येवंविधा तदीया गद्यश्री सर्वत्र सौभाग्य माप्यते।

गद्यस्य यद् बीजं धार्मिकग्रन्थेषु दृष्टमभूत् तदेव १६ संस्कृतसाहित्य ममना प्रशस्तकवर्णितमनेकसमास च पूर्णतया विकासकुसुमरमणीकितमभूत्।

इदानीमपि संस्कृतगद्यनिबन्धने तत्सम्वर्धने तत्परिष्करणे तत्प्रचारणे च

सुरभारतीचरणानुरागिणो मनीषिणो यतमाना प्राप्यन्ते। अम्बिकादत्तव्यासस्य शिवराजविजयप्रबन्धोऽनेकमहार्घशैलीसुशोभितप्रौढगद्यस्य स्पृहणीयं निदर्शनम् ईक्ष्यते।

साम्प्रतिकेषु गद्यकविषु पण्डिता क्षमा च परमसम्माननीयं स्थानमध्यास्ते। सा चिरपुरातन्यां भाषायां नवान् एव प्राणान् सञ्चारयन्ती दृश्यते। तदीय गद्ये इदानीन्तनजगदभिमता वर्णनशैली विज्ञानानुमोदितविचारणाया मधुरिमा प्रगतिप्रिया च दृष्टि सर्वत्र समुल्लसति। तदीया कथामुक्तावली घटनारैचि य विचित्राणा सभाजितमनोऽभिरुचीना कथाना कमनीय सग्रह।

विंशे शतके सञ्जात पण्डितो हृषीकेशशास्त्री प्रबन्धमञ्जर्यां प्रचलित विषयसम्बन्ध गद्य तत्र सामयिकेषु विषयेषु सुरुचिरचिरान् निबन्धान् निबध्नता तेन सरसाया व्यापवत्यां प्रवाहशीलायाश्च शब्दावल्यामवतार्य संस्कृतगद्यस्य श्री अपूर्वामेव चमत्कृतिं प्रापितास्ति।

अन्ये चास्मिन् काले प० रामस्वरूपशास्त्रि ब्रह्मानन्दशुक्ल वेङ्कटराघव नारायणशास्त्रिखिस्ते द्विवेन्द्रशास्त्रि विद्याधरशास्त्रिप्रभृतय शतश सुधीन्द्रा गद्य साहित्य वर्धयन्त समवलोक्यन्ते। एवस्थिते कथ हि वक्तुमिद शक्य यत संस्कृतभाषाया संस्कृतसाहित्यस्य च प्रसारो निरुद्धता गतोऽस्ति।

प्रार्थ्यते परमेश्वरो यद् भारतीया स्वकीयभारतीयसस्कृत्यां संस्कृतभाषा याञ्च दृढ सत्य स्नेह निबध्नीयुर्येन संस्कृतगद्यमेधेत भारतस्य चास्य माहात्म्या स्वतन्त्रताया श्री विश्ववन्दनीय च गरिमाण प्रपद्येत।



## कादम्बरी

संस्कृतगद्यकाव्यस्य विकासक्रमो बाणस्य कृतिषु पर्यवेक्ष्यते । बाणात् प्राग् ये केऽपि गद्यकवयः प्रादुर्बभूवुस्तेषां सर्वेषामपि गद्येषु या या विशिष्टता सुन्दरताश्च सोऽभवत् नाम्ना सकला अपि विशिष्टता सुन्दरताश्च ललिततराः वदनतरतानुरूपत्वस्वरताश्च यमितास्तत्र सम्पन्नाः । केवलमेतावदेव न, यद् बाणात् प्राक् सम्भवतां गद्यकाराणां कवीनां कृतिषु न तद् सौन्दर्यं वीक्षितं भवति यद् बाणस्य रचनासु राजते अपि तु तदुत्तरकालवर्तिनामपि गद्यकवीनां काव्येष्वपि न सा आभा आभासते या बाणस्य । तस्माद् गद्यकविषु बाण एव श्रेष्ठः । यत् किमपि दृश्यं यत् किमपि वस्तुजातं, यत् किमपि तत्त्वं, या कापि घटना, या कापि स्थितिः यः कोऽपि लौकिकोऽलौकिको वा विषयस्तस्य पुरस्ताद् वर्णनीयत्वेनोपस्थापितेन च मनुष्यस्य तेषां निखिलानामपि वर्णनं येन येन प्रकारेण येन येन साधनेन येन येन च चातुर्येणोपक्रमेण सर्वाङ्गीणतया भवितु-मर्हति स स प्रकारस्तत् तत् साधनं स स च उपक्रमो गद्यकविकुलतिलकेन पण्डितपुरन्दरेण महाकविना बाणेनाभ्युपगतानि सन्ति ।

बाणकविकृतासु रचनासु कादम्बरी हर्षचरितञ्च नितरां प्रसिद्धे श्रेष्ठे च रचने स्तः । एतयोर्हर्षचरितम् आख्यायिकाकाव्यं, कादम्बरी च कथाकाव्य-मस्ति । गद्यकाव्यस्याख्यायिकाकथाभेदेन महाकविर्बाणस्तद्भेदद्वयमधिकृत्य गद्यकाव्यमसृजत् । प्रणयने च आख्यायिकायाः कथायाश्च, तां महनीयां नदीष्णतां प्रमाद यया गद्यकलाकामिन्याः सर्वं सर्वविधमपि सौन्दर्यं स्वकीये पूर्णे तारुण्ये समुन्मीलितं भवत् सचेतसां पुरः प्रस्फुरेत् । कविः स्वीयेऽस्मिन् प्रयासे सर्वथैवानन्यलभ्यां श्लाघनीयां सफलतामधिजगाम ।

कृते सहृदयनरतायै रसात्मकत्वमपेक्ष्यते । इदं सौन्दर्यं बाणस्योपरि निर्दिष्टयोरुभयोरपि रचनयोः समुल्लसति । एतादृशस्य सौन्दर्यस्य समुत्पादनाय कल्पना कमनीयता भावानां च सत्वताऽपेक्ष्यते कवेरस्य काव्ये द्वयमप्येत-न्मनोभिरामां च विस्मयविधायिनीं लक्ष्मीं परिष्वजमानं समवाप्यते । एतस्य हि

करे सरलसुधीजनानन्दितायाः कवितायाः अनया चतुरतां निभालयितुं तदीया कादम्बरी एवालं भवेत् तस्मात् सैवालक्ष्यते । तामेव तु लक्ष्यीकृत्योक्तमिदम्—
'कादम्बरीरसभरेण समस्त एव मत्तो न किञ्चिदपि चेतयते जनोऽयम् ।"

कादम्बरी संस्कृतगद्यसाहित्यस्य समुज्ज्वलं रत्नमस्ति । तत्र भाषा भावेन भाति, भावश्च भाषया । शब्दार्थयोरुभयोरपि नितान्तमेव श्लाघनीयो योगोऽत्र दृष्टिपथमवतरति । वर्णनानां सुन्दरता तु निर्वचनीयैव । क्वचिद् विन्ध्याचलस्य विन्ध्याटवी साहसमलम्न भीरुत्पादनकरं शबरसैन्यं च वर्ण्यते तु क्वचित् सदयतायाः अवतारो धर्मस्य साकारं रूपम्, आध्यात्मिकतायाः देदीप्यमानं निदर्शनं मुनिर्जाबालिस्तदीयश्च परमपावनो मनश्चौर्यचणः सुभगशोभाशुभ्र आश्रमः सर्वेषां मनांसि रमयति । क्वचिद् बालस्य गन्धर्वादिमङ्गलान्वितायाः कल्याणकारिण्याः वीणायाः इव मञ्जुनादिन्याः विधुरतायाः नायाः महाश्वेतायाः विरहविधुरा मूर्तिः सल्लक्ष्यते तु क्वचित् अलोकसामान्यानां गुणानां निचयमुपभुञ्जानायाः गन्धर्वराजतनयायाः सरसमानसायाः कमनीयस्वरूपायाः कादम्बर्याः सरसा कथा श्रोतॄणां चित्तचञ्चरीकाञ्चोरयन्ती दृष्टा भवति । सर्वत्रैवालङ्काराणां मधुरं शिञ्जितं श्रोत्रेन्द्रियं प्रीणाति, सर्वत्रैव रागात्मिकायाः वृत्तेरभिव्यञ्जना हृदयमुन्मीलयन्ती विभाति । वस्तुतः कादम्बरी हि अलङ्काररसयोः प्रियेण प्रकारेण मेलनकारित्वात्, भाषाभावयोर्भव्यया पद्धत्या संयोजनकारित्वात्, कल्पनावर्णनयोश्च विचित्रेण विधिना सश्लेषणकारित्वाच्च संस्कृतगद्यकाव्येषु अतिहृद्या एव रचना । रसिकमानसोन्मादनकारित्वान्न कादम्बरी कादम्बर्येव ।

बाणः स्वकीयानां पात्राणां चरित्राणि चारुतयैव चित्रयति । स अस्यामपि कलायां नितरां कुशलः । अत एव तस्य पात्राणि प्राणवन्तीव भूत्वा मञ्जुलमूर्तिमन्तीव भूत्वा पाठकनयनालिन्दे अवतीर्णानि भवन्ति । प्रजापालनपरस्य महाराजस्य शूद्रकस्य वीरमूर्तिः कस्य न हृदये उत्साहं, सौम्यतापयो हारीतः कस्य न चेतसि प्रीतिं, ज्ञानवृद्धो जाबालिः कस्य न हृदि भक्तिं च सञ्चारयति ? अवदातचरितस्तारापीडः, शास्त्रे व्यवहारे च कुशलः शुकनासः, शुभ्राम्बरा तपस्विनी महाश्वेता, कमनीया च कादम्बरी कुशलेन कविना स्वलेखनी तूलिकया तथाऽऽलिखिता यत् तानि सर्वाण्यपि पात्राणि सचेतसां चेतःसु स्वीयममरप्रभावं समुद्दिपन्ति ।

स एव वस्तुतस्तु कविः कविर्यो जगतो विविधान् अनुभवान् समवाप्य

तत् सहृदयस्पर्शिनं पद्यस्य सञ्चयने चतुरो भवति । अस्मिन् हि निकषे कर्षणात् बाणस्य कविता निर्दोषशातकुम्भमिव समिद्ध्यति । कविर्बाणो यथा नानाविध लोकवृत्तविषयकं ज्ञानं निदधाति तथैव स चमत्कारदर्पिणीं यथार्थतामपि परिपुष्णाति । तस्यामरे काव्ये सुख समृद्धिसुन्दरं भोग विलाससमुल्लसितं जीवनमेव लक्षितमस्ति, पुनश्च तपस्विनो हि पूत चरितमालिखितमस्तीत्येतत् सर्वं कवेरनुभूतीनां विशालतां विविधतां यथार्थताञ्च लक्षयति ।

कादम्बर्यां प्रकृतेर्वर्णनमतितरां रमणीयं ललितञ्च भाति । केचन संस्कृत कवयः प्रकृतेर्मञ्जुलं रूपं चातुर्यां चित्रयन्तो दृश्यन्ते केचन तु तस्या भयावहस्य रोमाञ्चकस्य स्वरूपस्य प्रदर्शने पर्याप्तं प्राप्यन्ते परं बाणे हि उभयविधापि प्रवीणता विभ्राजते स प्रकृतेर्मधुरं कठोरञ्च रूपं परमकौशलेन प्रदर्शयन् सनवाप्तो भवति । एवंविधानां दृश्यानां स्वरूपाणि हृदयङ्गमानि कारयितुं कविना विविधा अलङ्कारा अवलम्बिताः । उपमोत्प्रेक्षाविरोधाभासपरिसंख्यालङ्काराणां स्वरूपान् उपास्य कविः पाठकानां पुरः स्वकीयान् वर्णनीयान् विषयान् मञ्जुलतयावतारयन् विलोकितो जायते । विन्ध्याटव्या भयङ्करतायाश्चित्रणं कुर्वन् परमसफलतया कृतवान् तत्तु मानसे परं विस्मयमातनोति भयेन च महता हृदयमापूरयति—

"नखमुखलग्नेभकुम्भमुक्ताफललुब्धैः शबरसेनापतिभिरभिहन्यमानकेशरिशता, प्रेताधिपनगरीव सदासन्निहितमृत्युभीषणा महिषाधिष्ठिता च, समरोद्यत पताकिनीव बाणासनारोपितशिलीमुखा विमुक्तसिंहनादा च, कात्यायनीव प्रचलितखड्गभीषणा रक्तचन्दनालङ्कृता च, ... क्वचित् प्रलयवेलेव महावराहदंष्ट्रासमुत्खातधरणीमण्डला, क्वचिद् दशमुखनगरीव चटुलवानरवृन्दभज्यमानतुङ्गसालाकुला ... ।"

कवेस्तपोवन-वर्णनं सर्वविधप्रभावोत्पादकवर्णनीयविषयविभूषितमस्ति, तद् हृदयं न कदापि विस्मरणीयं भवितुमर्हति यत्र जरदन्धतापसाः परिचितैर्वानरैर्दत्तहस्तावलम्बा भवन्तस्तपोवनं प्रवेश्यमानास्तत्र विस्मयमाना दृष्टा भवन्ति । ऋतूनां वर्णनमपि परममेव मनोरमं कृतमस्ति । प्रभात-सन्ध्यान्धकारचन्द्रोदयादिसम्बद्धानि प्राकृतिकानि दृश्यानि कविनातिशयसहृदयभावेन याथार्थ्येन च चित्रितानि सन्ति । अच्छोदसरोवरवर्णनेऽपि कवेः सूक्ष्मेक्षणशक्तेरगाधता सम्यग् वर्णिता भवति । सरोवरस्य निर्मलजलत्वं प्रदर्शयितुं कविरुपमानानामेकां महतीं शृङ्खलामेव दीर्घां व्यातन्वानो दृश्यते—

"मणिदर्पणमिव त्रैलोक्यलक्ष्म्या, स्फटिकभूमिगृहमिव वसुन्धरादेव्या, निर्गमनमार्गमिव सागराणाम्, निस्यन्दमिव दिशाम्, अवतारमिव जलानार गगनतलस्य, कैलासमिव द्रवतामापन्नम्, तुषारगिरिमिव विलीनम्, चन्द्रातप मिव रसतामुपेतम्, हराट्टहासमिव जलीभूतम् ।"

कादम्बर्यां प्रकृते सौम्यमुग्रञ्च रूप यावत्या रुचिरतया चित्रित तावत्यैव ललिततया तत्र विविधाना वस्तूना वर्णन कृतमवाप्यते। वर्णनानि सश्लिष्टानि प्रभावपूर्णानि च विवातु भावाश्च भासुरीस्तु कविरूपमोत्प्रेक्षाश्लेषविरोधाभासादि-कानामलङ्काराणा महत्या समीचीनया रीत्या प्रयोग विदधानश्च वाच्यते।

उपमामाश्रित्य इन्द्रायुधस्य वर्णन कीदृश मधुर विहित, दृश्यता क्षणम्—
'हरिचरणमिव सकलवसुन्धरोल्लङ्घनक्षमम्, वरुणहंसमिव मानसप्रचारम्, मधुमासदिवसमिव विकसिताशोकपाटलम् · सूर्योदयमिव सकलभुवना र्घार्हम् ।'

तस्यैव वर्णनमुत्प्रेक्षामुखेन वीक्ष्यताम् ईषत्—
"अश्वालङ्कारनिहितमरकतरत्नप्रभाश्यामायमानदेहतया गगनतलनिपतित दिवसकररथतुरगशङ्कामिवोपजनयन्तम्, अतितेजस्वितया जवनिरोधरोषवशात् प्रतिरोमकूपात् समुद्गतानि सागरपरिचयलग्नानि मुक्ताफलानीव स्वेदलवजालकानि वर्षन्तम् ।"

राजकुलवर्णनं श्लेषेण क्रियमाण मनाक् अवलोक्यताम्—
"राजकुलमिव भरतगुणानन्दितम्, ज्यौतिषमिव ग्रहमोक्षकलाभागनिपुणम्, नारदीयमिव वर्ण्यमानराजधर्मम्, यन्त्रमिव विविधशब्दरसलब्धास्वादम्, शूद्र-काव्यमिवान्यचिन्तितस्वभावाभिप्रायावेदकम्, महानदीप्रवाहमिव सर्वदुरिताप-हरम् · ।"

उज्जयिनीनगर्या सौन्दर्य विरोधाभासमाश्रित्य दर्शयति कविरेवम्—

"अगृहीतगारवेणापि भुजङ्गभीरुणा, सलोपर्णाविनापि प्रणयिजनोपजीव्यमा-नविभवन, वीरेणापि विनयवता, प्रियवदेनापि,सत्यवादिना, अभिरूपेणापि स्वदार-सन्तुष्टेन, अतिथिजनाभ्यागमार्थिनापि परप्रार्थनानभिज्ञेन · विलासिजनेना धिष्ठिता ।"

परिसंख्यालङ्कारस्य तु बाण सम्राडेव प्रतीयते। यथाऽयं कवि श्लिष्टपरि-

संख्याया विस्मयावहेन प्रकारेण प्रयोगं कुर्वाणो दृश्यते न कदाचित् तथाऽन्यः कविर्विलोक्यमानो भवति। परिसंख्या-सुषमा प्रस्फुटिताः काश्चन गद्यखण्डोऽपि प्रेक्ष्यन्तां तारापीडवर्णनविरचिता —

"यस्मिंश्च राजनि गिरीणां विपक्षता, प्रत्ययानां परत्वम्, दर्शनानामभिमुखावस्थानम्, शूलपाणिप्रतिमाना दुर्गासङ्ग, जलधराणां चापधारणम्, प्रतीहाराणामभिधारणम्, नैर्घृण्यमसिधाराणाम्, ध्वजानामुन्नति··· ··करिणां दानविच्छित्ति, अक्षक्रीडासु शून्यगृहदर्शनं पृथिव्यामासीत्।"

रमणोपमाया अपि छटा चेतसि यत् तस्या विनावलोकनं न सचेताः पुर उपसर्तुं शक्नोति—

"क्रमेण च कृतं मे वपुषि, वसन्त इव मधुमासेन, मधुमास इव नवपल्लवेन, नवपल्लव इव कुसुमेन, कुसुम इव मधुकरेण, मधुकरेणेव मदेन नवयौवनेन पदम्।"

अस्ति कादम्बरी हृदयपक्षप्रधाना गद्यकविता। कविः स्वपात्राणां मानसस्याभ्यन्तरे भागे तत्र प्रविशन् दृष्टो भवति। स तासु तासु अवस्थासु समुत्पद्यमानाः अन्तःकरणवृत्तीर्विशिनष्टि समुचितेन च पद-विन्यासेन ता अभिव्यनक्ति। पुण्डरीकं विलोक्य महाश्वेताया हृदये समुत्पन्नानां कियतां भावानां छविः प्रेक्षणीयास्ति—

"आसीच्च मम मनसि—'शान्तात्मनि दूरीकृतसुरतव्यतिकरेऽस्मिन् जने मां निविशता किमिदमनार्येणासदृशमारब्धं मनसिजेन। एवञ्च नामातिमूढं हृदयमङ्गनाजनस्य, यदनुरागविषययोग्यतामपि विचारयितुं नालम्······कान्तो हि गुणश्च दुर्निवारतामारोपयन्ति मदनस्य सर्वथा।"

पुण्डरीकस्य वियोगे महाश्वेताया हार्दिकानां भावानां या रम्याभिव्यक्तिरत्र दृश्यते सापि कवेर्बाणस्य लेखन्या अनुपम एव चमत्कारः—"अनया च मे दृष्ट्या दिग्मोहभ्रान्तस्येव प्रनष्टदर्शनं, बहुलनिशयेवान्धस्य, जिह्वोच्छित्त्येव मूकस्य, इन्द्रजालिकपिच्छिकयेवातत्त्वदर्शिनः, ज्वरप्रलापप्रवृत्त्येवासम्बद्धभाषिणः, दुष्टनिद्रयेव निर्विह्वलस्य, लोकायतिकविद्ययेवाधर्मरुचे······दोषविकारोपचय सुतरामक्रियत स्मरातुरस्य मे मनसः, येनाकुलीक्रियमाणा सरिदिव पूरेण विह्वलतामभ्यगमम्।"

अनपत्यताजनितविषादविपण्णस्य तारापीडस्य हृदयगतानां मृदुलानां भावनानां चित्रणं नितरामेव रमणीयमवितथञ्च वर्तते—

"अहमपि खलु देवि ! कदा मे तनयजन्ममहोत्सवानन्दनिर्भरो हरि-ष्यति पूर्णपात्रं परिजनः । कदा हारिद्रवसनधारिणी सुतमनाधोत्सङ्गा द्यौरिवो दितरविमण्डला सन्ध्यातपा मामानन्दयिष्यति देवी । कदा च क्षितिरेणुधू-सरो मण्डयिष्यति मम हृदयं दृष्ट्वा च सह परिभ्रमन् भवनाङ्गणम्" ।

" शून्यमिव मे प्रतिभाति जगत्, अफलमिव पश्यामि राज्यम् । अप्रति विधेये तु विधातरि किं करोमि, तन्मुच्यतां देवि ! शोकानुबन्धः, आधीयतां धैर्ये धर्मे च धीः ।"

चन्द्रापीडस्य प्रथमदर्शनानन्तरं स्वदेशं निवर्तमाने सति तस्मिन्, काद म्बर्या भावानां चित्रणं कविर्यच्चकार तत् कवेर्मनोविज्ञानात्मकस्य विश्लेषणस्य प्रियं निदर्शनमस्ति—

'तिरोहितदर्शने च देवे, ग्रीवया न दिगन्तं दुग्धोदधिधवलैः प्लावयन्तीव दृष्टिपातैः, सितातपत्रापदेशेन शशिनेर्ष्यया निवार्यमाणरविकरस्पर्शा सुचिरं तत्रैव स्थितवती । तमुपेत्य च 'देवनात्र मरकतशिलामकरिकाप्रणालप्रस्रवणमिच्यमा-नहरितलतामण्डपे शीशिरिणि शिलातले स्थितम् किमपि चिन्तयन्ती दुःख दुःखेन क्षणदामनैषीत् ।"

'प्रेम भौतिकानां सम्बन्धानां न नामान्तरमिति वाणो मन्यते । तदृ ष्ट्यान्तु तत् जन्मान्तरे समुद्भूतः कश्चनाध्यात्मिक एव सम्बन्धोऽस्ति । कादम्बरी 'जननान्तरसौहृदम्' एव चित्रयति । एषा सा प्रेमस्थास्ति या हि अतीतं विद्य मानञ्च परस्परं निबध्नाति । सा सन्दिशति यत् प्रेम न कदापि समानस्य मर्यादामतिक्रमते । यत् 'प्रेम' इत्यनेन नाम्ना गीयते तद् भवति सयत नि का मञ्च । कालस्तद् विध्वंसयितुं न प्रभवति । तस्य स्मृतिस्तु शाश्वत् प्रस्फुरत्स्यव अनुभूयते । समकालानेकजन्मसिद्धिचारिताथ्यं महाश्वेता पुण्डरीकयोः कादम्ब रीमहाश्वेतयोश्च प्रेम इत्यत्र विद्योतमानं प्रागवत् प्रमाणमस्ति ।

कविना यस्य प्रणयस्यैषा मनोऽभिरामा कथा लिखितास्ति स प्रणयो बाह्या कर्षणप्रसूतो न, न च स रूपच्छटाराग एव । स तु अस्ति लोकोत्तरानन्दजनित विकार । स सचेतनमचेतं सचेतसश्चेतसा निबध्नाति मिथः । स बहुजन्मस्थापि

र्णनमित्यतिमात्राय विजृम्भमाणो भवति। कादम्बर्याः प्रायशोऽत्र नैकमेव उन्मत्तमिवात्र सन्निष्टमनांसि सा नु सन्दर्भवर्त्म वर्तते। सम्भवति त्रिषु जन्मसु जातेषु सा मकरन्दे माधुर्ये न कीदृशमपि तनुतमनुभवति। कालं व्यापि परिवर्तनं, सर्वमात्र मार्गे काल नानाशोभितेषु विचरेत पर स्वीय हृदयः प्रेम सदैव तमनुयाति। कादम्बरीकथाऽम्भोक पुन इदमेव सत्य निदर्शनि।

यौवन धनैश्वर्य-दोष निरूपणावसरे कवि कादम्बर्याः भाषाया नैतितरां नितान्तेन ललितेन प्रकारेण सन्निवेशयति। तत्रापि कविना रूपकस्योपमायाश्च विशेषतया कृतो यद् यौवनस्य चाञ्चल्यं लक्ष्म्या उन्मादशालित्वमैश्वर्यस्य च प्रमत्तत्वं युगपदेव साकार भवद् स्वस्वविच्छित्तिपूर्वकं पाठकानामग्रे समुपस्थित मञ्चायते। एतन्मूलमुद्दिश्य कविः कथयति—

"इयं संवर्द्धनवारिधारा तृष्णाविषवल्लीनाम्, व्याधगीतिरिन्द्रियमृगाणाम्, परामर्शधूमलेखा सच्चरितचित्राणाम्, विभ्रमशय्या मोहदीर्घनिद्राणाम्, निवास-जीर्णवलभी धनमदपिशाचिकानाम्, तिमिरोद्गतिः शास्त्रदृष्टीनाम्…… "राहुजिह्वा धर्मेन्दुमण्डलस्य…… ……।" वर्णनमिदं रूपकच्छटया रम्यमाणमास्ते। कवेर्विचारा सदोदारा महोदाराश्च सन्ति। तस्य दृष्टिः अतिदूरदर्शिनी अस्ति। तस्य धीः ईदृशी निशितास्ति यद् किमपि वस्तु स्वकीयान् सर्वान् अपि गुण-दोषान् नैवं वैशिष्ट्यञ्च न कदापि संगोपितुं शक्नोति तस्याः पुरतः।

"कवेर्गद्यस्य मध्ये हिंस्रप्रलम्बसमाकुला भयावहारण्यानीव" इति केचन आलोचका यद् वदन्ति तत् ते कवेः समासबहुलानि ओजोगुणमण्डितानि स्थलान्येव विलोक्य वदन्ति। यत्र कविर्दीर्घदीर्घतरान् समासान् प्रयुज्य, ओजोगुणगुम्फितानि विकटानि वाक्यानि ससर्ज, विरोधाभासश्लेषादीन् अलङ्कारान् आश्रित्य रचनाञ्चकार तानि स्थलानि सन्त्येवैतद्विधानि। यदि तेषां वर्णनं तथाविधतया न विहितं स्यात् तदा तत्तद्वर्ण्यपदार्थानां यथार्थं स्वरूपं तद्गतञ्च वैशिष्ट्यं न कदापि साकार भूत्वा सजीवञ्च मूर्त्तरूपेण स्थितं भवितुं शक्नोति। यो विषयो यादृशो भवति, कुशलः कविस्तं तादृशं च विषयमपि तदनुरूपामेव भाषां तदनुकूलामेव पद्धतिं तदनुगुणामेवाभिव्यञ्जनविधामपि स्वीकरोति। अटवी शबरसैन्य-राजकुल-दिग्विजय-चण्डिकामन्दिर-जरद्द्रविड-सम्पदादिकानि स्थलानि तादृशयैव पद्धत्या कविर्वर्णयन् दृष्टो भवति यादृशी पद्धतिस्तद्वर्णनेऽपेक्षिता। प्रभातवर्णनादिना पदार्थानां प्रभावस्य प्रदर्शनं यदि वर्णन-

विधिः कर्तुं न क्षमते तदा स वर्णनविधिर्व्यर्थ एव। अस्मादेव कारणात् कविः सर्वत्र विषयानुरूपमेव गद्यं निबबन्ध। आलोचका अविचारपूर्वकमेव अस्य कवेर्गद्यमालोचितवन्तः। संस्कृतसाहित्ये बाण इवान्यः कोऽपि प्रभावशालिगद्यलेखकस्तु दृश्यत एव न। आदर्शगद्यस्य यान् गुणान् कविर्हर्षचरिते उल्लिलेख ते गुणास्तस्य गद्ये वैशद्येन विद्यमाना प्राप्यन्ते।

सन्देश-सलाप-विरहादिका विषया लघुलघुतरकलेवराणि वाक्यानि वाञ्छन्ति। न ते दीर्घदीर्घतरान् समासान् अपेक्षन्ते न च ते विकटं पदबन्धम्। तस्मात् कविस्तद्विधेषु विषयेषु लघुलघुतरवाक्यानि प्रयुनक्ति न तत्र स समासान् दीर्घान् आलम्बते न च विकटपद-संघटनामेवोपयुनक्ति। दृश्यताम्—

(क) "किमिति निरर्थकमयमात्मा मया शिशुनेवायासितः। किमनेन ... नेनागृहीतेन वा स्थिरस्थगलेन प्रयोजनम्। यदि गृहीतमिदं ततः किम्, अथ न गृहीतं ततोऽपि किम्।"

(ख) कुमार, पूर्णा नो मनोरथाः। अधीतानि शास्त्राणि। शिक्षिताः सकला कला। गता सर्वास्त्रायुधविद्यासु परां प्रतिष्ठाम्।

(ग) "यदि सत्यमनया यथा कथितं तथा सर्वमवितथं स्वप्नदर्शनम्। अहं तु न श्रद्दधे। कुतोऽस्माकमियती भागधेयसम्पत्।

इत्थमिदं स्पष्टमेव यद् बाणस्य वर्णनीयविषय-तत्प्रकटनप्रकारविधयोरन्तराले्ऽद्भुतं सामञ्जस्यं शोभते। गद्ये हि, वस्तुतस्तु सूक्ष्मा निरीक्षणशक्तिर्मनोहारिणी वर्णनपद्धतिः, अक्षयशब्दराशिः, मधुरा कल्पना, मौलिकतानामर्थानां संहतिर्वैशिष्ट्येन विभ्राजते। गद्ये महीयान् प्रभावः प्रवाहश्च वरीवर्तते। अनुकर्तारः कवयः कठोरतममपि प्रयासं विधाय स्वकीये गद्ये नैतस्य कवेर्गद्यस्य मध्ये समुच्छलन्तं तरलं चमत्कारं चपलं चारुत्वं सर्वदिग्गामिनीञ्चोद्भावनां जनयितुमशक्नुवन्। सचेतसो यन्माधुर्यं यमानन्दं याञ्च तृप्तिमेतस्य कवेः कवितायामनुभवते न तन्माधुर्यं तमानन्दं ताञ्च प्रीतिमन्यत्र कुत्रापि विन्दन्ति ते। कश्चिद्विलोचन सत्यमेवाचष्टे—

"हृदि लग्नेन बाणेन यन्मदो दुरतिक्रम।
भवेत् कविकुरङ्गाणां चापलं तत्र कारणम्॥"

प्राचीन आलोचको धर्मदासोऽस्य कवेर्वाण्यां मुग्धो बभूव। स आनन्दनिमग्नो भूत्वा यदिदमाह तद्दृश्यताम्—

कादम्बरीरसभरेण समस्त एव
मत्तो न किञ्चिदपि चेतयते जनोऽयम्।
भीतोऽस्मि यन्न रसवर्णविवर्जितेन
तच्छेषमात्मवचसाप्यनुसन्दधान ॥

बाणस्य विलक्षणप्रतिभापेदालम्वात् प्रकाण्डपाण्डित्यवत्त्वाच्च महाराज श्रीहर्षवर्द्धनस्तस्मिन् अतितरां श्रद्धां न्यदधात्। स तस्य परमप्रियपात्रं सम्मानास्पदञ्च बभूव। श्रीहर्षचरितं प्रणीय बाणोऽपि तं नितरां मत्युपचकार। सत्यमेवेदं बाणप्रशंसायां जगता गीयते—

हेम्नो भारशतानि वा मदमुचां वृन्दानि वा दन्तिनां
श्रीहर्षेण समर्पितानि कवये बाणाय कुत्राद्य तत्।
या बाणेन तु तस्य सूक्तिनिकरैरुट्टङ्किता कीर्तय-
स्ताः कल्पप्रलयेऽपि यान्ति न मनाङ् मन्ये परिम्लानताम् ॥



# पण्डिता क्षमा

अस्मिन्नपि भारत देशे भगवदनुक्रोशेन चिरन्तनादनेहसः पुरुषा इव पुरन्ध्र्योऽपि प्रौढपाण्डित्यवत्यः कवित्वशक्तियुजः समये समयेऽजनिषत। पुरातनतमे वैदिकयुगे पुरन्ध्र्यो मन्त्रद्रष्ट्र्यो ब्रह्मवादिन्यो लोपामुद्रायमीप्रभृति विदुष्यः सम्बभूवुः—इति को न वेद वेदविद्यानुशीलयिता। राजर्षिजनकस्य सदसि ब्रह्मतत्त्वमधिकृत्य विलसन्त्यौ मैत्रेयीगार्ग्यौ च को नाम नोपनिषत्साहित्यसेवी जानाति।

एवं रामायणमहाभारतादिवर्तिनीः समयस्तु अतिपुरातनः। तस्य समयस्य तु इतिवृत्तमपि न प्रकाशमुपनिषद्यते परं यदैव कालात् पूर्ववर्तिनीं सहस्राब्दीं प्रति दृष्टिः क्रियते तदाप्यस्माकमग्रे बह्व्यो महीयस्यो विदुष्य उपस्थिता भवन्ति। विज्जका-सुभद्रा-मोरिका-मारुला-शीलभट्टारिका-मधुरवाणी-गङ्गादिकाभिर्विचक्षणाभिरेताः भूयस्यः शताब्द्योऽलङ्क्रियन्ते येन साधु विदितमेव संस्कृतसाहित्येतिहासविदां पुंसाम्। नैवंविधः कालो यत्र नास्माकीनो देशस्तासां विदुषीणां रत्नानामालोकेनालौकिकेनालोकितः। सम्प्रत्यपि निर्मलश्यामरसादिकाव्यकारिण्यः श्रीनिर्मलप्रभावती प्रमुखाः अनेकानेकप्रेक्षावत्यो विद्यावत्यः शास्त्रपारगामिन्यो देव्यो दीक्षिता भवन्ति। एतासु साम्प्रतिकीषु कवयित्रीषु अस्मद्गेयचरिता पण्डिता क्षमा विभ्राजते।

श्रीमती भारतनारीभूषणं विदुषीतमा क्षमा स्वकीयेन पूतोदन्तेन पुण्यपत्तन-नामधेयस्य पत्तनस्य पुण्य नवत्यधिकाष्टादशशततमेशवीये वत्सरे जुलाईमासे चतुर्थ्यां तारिकायां प्रादुरजनत। तदीया पितृपादाः पण्डितप्रवरश्रीशङ्कर पाण्डुरङ्गमहाभागाः संस्कृतभाषाया महामनीषिण आसन्। भर्ता च तस्याः श्रीमान् डॉक्टर राघवेन्द्रराव राजकीयसेवकेषु महतीं प्रतिष्ठां जगाहे।

मान्या श्रीक्षमा प्राच्यप्रतीच्ययोरुभयोरपि विद्ययोः श्लाघनीयमधिकारं न्यदधात्। भारतीयता तत्रातिशयमात्मभावेन व्यराजत। सा भारतीयं जीवनं संस्कृतिञ्च प्रदर्शयितुमाङ्ग्लभाषायामनेककथानाटकादीनि व्यरचयत्। संस्कृतभाषाया मृदुता भावाभिव्यञ्जनक्षमता गम्भीरगरीयस्तादिका भूयिष्ठा विशिष्ट

तास्तां नितरामावर्जयन्ति स्म। तस्मात् सा आङ्ग्लभाषां विहाय स्वकीया कृती कर्तुं संस्कृतभाषामशिश्रियत्। संस्कृतभाषामुद्दिश्याध स्थितास्तदनुरूपं विचारमभिव्यानक्।

"संस्कृतभाषाया शब्दकोषोऽन्यासां भाषाणां शब्दकोषेभ्यो गरीयान्, तत्र अभिव्यञ्जनाया करणानि तेभ्य करणेभ्यो महीयांसि बलीयांसि च विभान्ति यानि संसारस्य अन्या भाषा जुषन्ते। अस्मादेव हेतोः संस्कृतभाषा एकशो वर्षाणि यावद् अखिलमपि विश्वमैक्यसूत्रेण नियन्तुं प्रबभूव। सङ्घटनात्मकबलशालित्वं तस्याः, तस्या जीवितभाषात्वमभिव्यनक्ति। अविदितगुणापि सा जननिर्झरकर्णकुहरेषु वमति मधुधाराम्। सकलमपि भुवनं तस्या जीवनं लभते। भौगोलिक्या ऐतिहासिक्या च दृशा उभाभ्यामपि दृग्भ्या सा चमत्कारं वितनुते। काश्मीरप्रदेशात् कन्याकुमारी यावत् पाञ्चालेभ्य कामरूपान् यावत् भासमाना सर्वा अपि भाषा अभिव्याप्य सा विभ्राजते। तत्र भारतस्य रूपोऽपि काल प्रतिबिम्बिता भवन्तो हृद्यान्ते। तत्र क्वचिद् वैदिकस्य भारतस्य उषा सम्पूर्णेऽपि संसारे चेतनां सञ्चारयन्ती प्रकाशं वर्षन्ती गतिं प्रीतिञ्च उद्गिरन्ती निरन्तरम्, क्वचित् तत्रौपनिषदकी निरस्ततमस्का ज्योतिश्री भुवनानि विद्योतयन्ती, क्वचिद् रामायणकथा मानवादर्शश्रियं वितन्वन्ती क्वचित् महाभारतघनघटा स्वयुगस्य स्फुटामुन्मेषयन्ती, क्वचिद् बौद्धकालस्य लक्ष्मी स्ववैभवं विकिरन्ती, क्वचिद् गुप्तसम्राजां च प्रतापप्रभा पुरः स्वयश प्रसारयन्ती दृग्गोचरीभवति यथा तत्रोज्ज्वलातीतस्य छविर्दृश्यते तथैव तत्र वर्तमानस्यापि युगस्यापि कान्त प्रकाश प्रस्फुरति, आशास्यते च तत्र तदपि भाविकाले कमनीयं जगद् दीप्येत यत्र सर्वेऽपि संस्कृतं भाषमाणा श्रुता भविष्यन्ति।

कनयित्री क्षमा महाराष्ट्रवासिनी महिलासीत्। तस्या शैशवं सौराष्ट्रेषु व्यतीयाय। प्रकृत्या सा दीन-दरिद्रजनवत्सला दीनसाहित्ये साहित्ये सर्वत्र दीनदरिद्रजनोद्धरणभावनामन्दाकिनी प्रवहन्ती दृश्यते। प्राचेतस महर्षि वाल्मीकि यथा क्रौञ्चवधो रामायणं नाम काव्यं स्रष्टुं प्रसभं प्रवर्तयामास तथैव रसिकामिमां क्षमामपि भारतीयस्य दैन्य दारिद्र्यञ्च काव्यानि अवतारयितुं प्रेरयामास। तीव्रप्रतिभाविशालत्वात् सा अचिरेणैव कालेन पुष्कलं लोकप्रियं साहित्यं ससर्ज। अद्यपर्यन्तं तद्रचिता इमा रचना प्रकाशमायाता सन्ति—

( १ ) सत्याग्रहगीता, ( २ ) कथामुक्तावली, ( ३ ) कथापञ्चकम्,

प्रणीयन्त निर्णेतारस्तेषां काव्यानां मध्ये हि एतत्प्रणीतमेव काव्यं श्रेष्ठकाव्यत्वेन निर्णीय एतामेव कवयित्रीं प्रथमेन पुरस्कारेण सम्मानयान्तरम् ।

डॉ० राधाकृष्ण एम० आर० जयकर-श्रीपाद्धामरनाथप्रभृतयोविद्वद्धुरेया क्षमायाः कवित्वशक्तिं पुनः पुनः प्रशंसन्त श्रूयन्ते । नात्र संशयो यत् तदीयाः कृतयः साम्प्रतिके युगे पुनः संस्कृतभारत्याः प्राणान् प्रातिष्ठिपन् । वर्तमानेऽनेहसि प्रणीतेषु संस्कृतकाव्येषु प्रायेण परम्परागता रूढिवादितैव प्रतिलक्ष्यते । परं क्षमायाः काव्येषु तु सर्वत्र प्रगतिवादिता शङ्खं धमन्ती श्रूयते । इदानीन्तनस्य कस्य काव्ये दीनजनानामार्तनादः श्रुतो भवति ? कः कविर्निःस्वानामपि निराश्रयाणामपि दुर्बलानामपि दयनीयायाः दशाया वर्णने स्वकीयं स्वान्तमावर्जयन् समवाप्यते ? इयं क्षमैव दरिद्रभारतस्य कारुणिकीं मनोमर्मभागभिदुरां कथामस्मत्पुरः साम्प्रतं निदधानावलोक्यते । एतस्या एव काव्ये—

"ध्याय ध्यायं दशां दीनां बन्धूनां दुःखितोऽभवत् ।
तदुद्धारमनुध्यायन् विनिद्रोऽगमयन्निशाम् ॥"

× × × ×

यावन्न वेष्टिता सर्वे बन्धवो मे यथोचितम् ।
स्थास्यामि स्वल्पवेशोऽहमिति तेन धृतं व्रतम् ॥

इत्येतद्विधा वर्तमानभारतस्थितिप्रदर्शनकारिणः श्लोकाः समवाप्यन्ते ।

इयमेव विदुषी अस्यत्वविधा यदीय काव्ये पारतन्त्र्यं मरणादपि अतिरिच्यते इत्येतदुच्यते—

"जीवन्तोऽपि न जीवन्ति परदास्यधुरन्धराः ।
पारतन्त्र्यमुदाराणां मरणादतिरिच्यते ॥"

कतमत् आधुनिकं काव्यं स्वातन्त्र्यस्य महत्तां परमनिर्भयभावेन संस्थापयति—

"स्वातन्त्र्याद्धि मनुष्याणां प्रियमन्यन्न विद्यते ।"

स्वदेशार्थं स्वार्थत्यागस्योपदेशः केनान्येन संस्कृतकाव्येन प्रदीयते—

"स्वार्थत्यागात् स्वदेशार्थं नान्यच्छ्रेयो हि विद्यते ।"

कस्मिन् हि अन्यस्मिन् काव्ये वैदेशिकानां वसनानां दहनं दृष्टिगोचरं भवति—

"परदेशीयवस्त्राणि निर्दह्य महता जनाः ।"

कुत्र च काव्ये 'मार्दी' तिनामधेयेन विश्रुतानि वसनानि वमानानां दशैव कानामाभा दृश्यते—

"श्वेतत्वादिधरा सन्त सन्नाता देशसेवका ।"

क्व हि तन्तुचक्रस्य गुञ्जनमेतस्मात् काव्यादन्यत्र श्रूयते—

"गुञ्जनं तन्तुचक्रस्य श्रूयते स्म गृहे गृहे ।"

एतदीयं हि आदर्शकाव्यम्—

"शूद्रो वा ब्राह्मणो वापि क्षत्रियो वा कृषीवल ।

ईशदृष्ट्या समा सर्वे विकृतिस्तु नरोद्भवा ॥'

भेद कृतो मनुष्येण न धात्रा समदर्शिना ।

शीलं चिह्नं सुजातस्य न जातिर्न च जीविका ॥

अतोऽन्त्यजजनस्पर्शात् नाधिकारोऽस्ति कस्यचित् ।

अमी मलिनकर्माणो इत्युक्तिर्ननु किल्बिषम् ॥"

इत्यादिभि श्लोकैर्जातिवादमन्त्यजावज्ञाञ्च निन्दत् क्वचित् ,

"हिंसां न कोऽपि कुर्वीत मनोवाक्कायकर्मभि ।

अहिंसयैव सिद्धि स्यादित्याह पुन पुन ॥"

इत्यादिना हिंसाया हेयता किञ्च अहिंसाया ग्राह्यता क्वचित् ,

"बल सर्वबलेभ्योऽपि सत्यस्यैवातिरिच्यते ।

सत्याग्रहबल श्रेयान् मतलात् सत्यवर्जितात् ॥"

इत्यादिना सत्यस्य प्रकृष्टतानुपम्यस्यञ्च क्वचित् प्राप्यते । एतावदेव न, अस्मात्तु काव्यमस्माकमग्रे देशार्थमसूनपि जुह्वतस्तरुणान् दर्शयति, तत् तान् मानवान् अतितरा भर्त्सयति य सन्ति तु वैरतधर्मावलम्बिन पर दिवानिशं हिंसात्मकानि क्रूराणि कर्माण्यनुतिष्ठन्ति निपीडयन्ति च मानवजातिमन्याय सत्याचारञ्च विधाय । अत काव्यमिदं मानव तत्कर्तव्यमार्गं दर्शयति । राष्ट्रियता भावविभाविता पावनप्रेरणा कस्मादपि नान्यस्मात् साम्प्रतिकात् संस्कृतकाव्यात् सलब्धा भवति ।

अहह क्षमाया काव्यमधीत्य तु न पुनः श्रीमद्भगवद्गीताया आनन्दामृतकणाना वैरं भवितुमारभते । दृश्यताम्—

*स्वधर्मं प्रतिपद्यस्व पुरस्य च रक्षक ।*

अहिंसका जितक्रोधा भवन्तश्च स्वकर्मणि ॥

अपमानमिमं सोढुं कथं शक्नुथ बान्धवा ।

स्वकस्वाधिकारिणा भीतिमुत्पिष्टेन सर्पोरसम् ॥

साहित्यं स्वयुगस्य मुकुर इति सत्यमेवोक्तं केनापि। क्षमादेव्याः कृतयो यद्यपि पठिता स्युस्तदा पाठकास्तत्र स्पष्टमेव नितान्तसरलतया गान्धियुगस्य भारतं द्रष्टुं प्रभवेयुः। तेषां पुरः समग्रमपि भारतं सजीवं चित्रमिव भूत्वा समुपतिष्ठेत्। ते तद् विलोक्य पश्यन्ति आङ्गलशासनस्य दमनं, कृषीवलानां शोचनीयां दशां देशस्य च पारतन्त्र्यबन्धनम्। यथा चित्रशालामधिष्ठिता जनाः पटोपरि प्रतिबिम्बितानि अनवच्छिन्नतया एकैकशो बहूनि चित्राणि पश्यन्ति तथैव क्षमादेव्याः साहित्यमपि चित्रमालास्ति। तत्र दृश्यते कस्मिंश्चिच्चित्रे सन्मार्गस्थिति आङ्गलशासनमानेषु प्रयतमानं महात्मानं गान्धिनम्, कस्मिंश्चिच्चित्रे हरिजनान् उद्धरन्तं तम्, कस्मिंश्चिच्चित्रे देशे सर्वत्र विततसूत्रयन्त्राणां निरन्तर-यत्नं तम्, कस्मिंश्चिच्चित्रे मानवीयान् अधिकारान् आङ्गलजातिं याचमानं सविनयं तम्, कस्मिंश्चिच्चित्रे देशस्वातन्त्र्याय कारागारदुःखानि सहमानं तम्, कस्मिंश्चिच्चित्रे देशभक्तान् बहून् बहुविधानि दुःखानि सहर्षं निषेवमाणान्, कस्मिंश्चिच्चित्रे ग्रामान् अपि लुण्ठतोऽनेकान् नरगान्, कस्मिंश्चिच्चित्रे दीन-दरिद्र-विधवादिवृन्दं सकरुणं क्रन्दत्, वैदेशिकवस्त्रादि निरोधनाय देशसेवकान् कठोरं प्रयत्नं विदधा-नांश्च, कस्मिंश्चिच्च चित्रेऽन्यानि च बहुविधानि देशस्य शोचनीयानि मर्ममर्म-भागनिपीडकानि दृश्यानि दृष्टं दृष्टं नितरामेव व्यथामनुभवति। वस्तुतः क्षमादेव्या रचनाः पाठकस्य हृदये देशभक्तिं प्रगाढां समुत्पादयन्ति। ता अधीत्य मानवो न कोऽपि कदाचिदेवंविधो यो देशानुरागी न स्यात्। ता मानवस्य हृदयादसद्भावान् दूरीकृत्य तन्निर्मलं कर्तुं क्षमाः सन्ति। ता मानवं सङ्कीर्णतातोऽनुदारतातः क्षुद्रतातश्च निर्गमय्य तमुदारे पवित्रे विकारविहीने क्षेत्रेऽवतारयन्ति। तस्माद् वस्तुतः क्षमादेव्याः काव्यानि दर्शनग्रन्था इव सन्ति। आधुनिकं युगकाव्ये या या विशिष्टता दृश्यन्ते ता ता विशिष्टतां तत्साधु समवाप्नोति।

पण्डिता क्षमा यथा सत्याग्रहगीतादिग्रन्थानि प्रणीय संस्कृतकाव्यसाहित्य-भाण्डारम् अदृष्टपूर्वमिव पुष्टं व्यतनोत्, तथैव सा कथानां सृष्टिं विधाय संस्कृतकथा-साहित्यभाण्डारमपि नूतनयैव कृत्यादि अतुलयैव भव्यविभया व्यभूषयत्। भारतभूषा क्षमा स्वकथासाहित्यरचनया संस्कृतकथासाहित्यस्य गरिमाणमुदनमयत्। संस्कृतसाहित्ये कथानामपि यद्यपि प्राचुर्यता प्रेक्ष्यते चिरन्तनात् कालात् परम् आधुनिकः पाश्चात्यः संसारः कथोल्लेखनस्य यां विधां यां पद्धतिं यां च नूतनामेव

कृषीवल-नाविकादीन् बहून् साधारणजनान् अवतारयति। अथ चैषा [illegible] शालिक्षेत्र ध्वस्तदेवायतन–विशङ्कटगोष्ठ पांसुलमार्ग–गुल्मगुल्मादिकानि दृश्यानि वितनोति। समग्रमपि वातावरणं ग्राम्यं विद्यते। न तत्र वर्तते धनधा-न्यसमृद्धानां नगराणां छटा। प्रायेणास्मदीयेयं धारणा यद् धैर्यं महत्त्वञ्च पुरुषेषु राजते न जनसामान्ये। इयं पण्डिता हामिदाया मेघराजपालिकाया दारिकाया-मपि तं गुणं दर्शयति। प्रायेण विश्वसिमो वयं यत् नागरिका जना एव अपरि-चितेष्वपि जनेषु समुदाचारं व्यवहरन्ति न तदितरे। परं कथाया अस्या ले चेरा साधारणजने स्वदिरेऽपि समुदाचारविधायिनीं धियं विवृण्वती दृश्यते।

मानवस्य मानसं दया क्षमा कठोरता घृणा स्नेहादीनां गुणावगुणानामास्पदं भवति—इत्येतद्धि तथ्यमेतस्या कथाया समवगतं जायते। अत्र कथातः एतस्याः काश्चन पङ्क्तय उद्ध्रियन्ते याभ्यो मानवहृदयस्य ता विशिष्टता विदिता स्युः—

(क) "तत्र क्षणमात्रं विमृश्य शङ्कां च दूरीकृत्य निरुद्धपुरुषविमोचन-पराभूत्।"

(ख) "…… "परमवेदनया भृशं पीडितोऽस्मीति प्रतीता च ताङ्कृशं प्रशाम यितुं निश्चिकाय।"

(ग) "…… निर्गमात् प्राक् मधावस्य बालिकायै किमपि पारितोषिकं प्रदेयमिति मनसि कृत्वा स्वमहानुभावं दर्शयितुं वृद्धकृषीवलायागारावचख्यौ।"

(घ) "अनपत्यासीन्मद्गेहिनी। तस्या वन्ध्यतयातिकुपितस्तां सार्धत्रयो-दश वर्षेभ्यः प्राग् गृहान्निष्कासितवानहम्। नान्या च कन्या परिणीतवान्।"

(ङ) "मृत्युवक्त्रात् परित्रातोऽस्मि तया। तस्या भावी भर्ता मन्नाविकी भविता।'

(च) "दीयतां पञ्चशती रूप्याणामर्हते जनायास्मै। यत्र मे पितामहस्य पितामहाश्च निवासस्तत्रैव समुचितो ममापि। विद्यते हि दिष्ट्या पर्याप्तं धनमे-तयोः सविधे सर्वोपयोगार्थमिति स—निश्चय प्रोत्थाय च सपदि सप्त्योरुच्चैः स्थितकृषीवलस्याङ्के सुखमुपाविशत्।"

पण्डितायाः क्षमायाः कथासु सौन्दर्यमिदमपि राजते यत् सा तत्र प्रथमं हि आदौ किमपि रहस्यबीजं वपति। एतत् कृत्वा सा पाठकानां मानसेषु कौतूहलं जनयति। कथायां एतेन विधिना सा विदधाति यत् उत्तरोत्तरं कौतूहलवर्ध-नकारि कथायां सञ्चारयति। ततश्च अन्ततो नितान्तहृदयस्पर्शि रहस्यं समु-

ह्लादयन्ति । पाठका कथामर्धीत्य निरस्य वा चकितचकिता इव नूत्ना कमपि विचित्रमेवानन्दमनुभवन्ति ।

पण्डिता क्षमा सरसं सरलञ्च गद्यं निबध्नाति । तदीये गद्ये प्राञ्जलः प्रवाहः प्राप्यते । नैसर्गिकी छटा परिलक्ष्यते । वर्णनक्रमो नातिदीर्घो न चातिह्रस्वो भवति । पाठकस्तत्र क्वापि न क्लाम्यति न ताम्यति अपि तु कथापठनार्थं परमोत्साहमश्नुते । यद्यपि एतस्या मनोरम्या गद्यं न श्लेषक्लिष्टं न अलङ्कारप्रभूतभारक्लान्तं न दीर्घदीर्घतरसमासमसङ्कीर्णं खलु विलोक्यते परं पाठकानां मनो यथात्र रमते, सम्भवतो, न तथा तत्र तत्र रमते प्रीतिं वा विन्दति यद् भवति श्लेषसमासोक्तिविरोधाभासयमकादिभिराकीर्णम् । एतदीये गद्ये वस्तुतस्तु संस्कृतभारती प्रसन्नता सुबोधता च परिपूर्णतां प्राप्यत । अत्रोद्धरणद्वयमेव निर्धीयते येन पाठका गद्यसौन्दर्यसुधाकणिका काश्चन पातुं प्रभवेयु —

(क) "नास्मि किमागमकारणमक्षमा । चिराय त्वयात्र नस्थितम् । परिश्रान्तोऽसि । क्षुधार्तोऽपि स्याः । याहि गेहम्, याहि शान्तम् । तथास्या त्वदागमनो-त्कण्ठिता त्वा प्रतं प्रमाणाऽसहाया न्यिता स्यात् ।"

(ख) "सेयं सरोजलोचना कुन्दकुड्मलदन्तपङ्क्तिः प्रवालाधरा चञ्चलालका शिरीषकुसुमकोमला शारदकौमुदीव रुचिरा धैर्यशीलापि मृदुवचना धीरापि स्मितमति स्नेहनिर्झरसम्प्लुता दमयन्तीव परमदमनशीला क्षमानलागता सुरसुन्दरीव कमनीया कृषीवलस्य गृहादिकार्येषु मुदा प्रयस्यन्ती सुखमास्त ।"

(ग्रामज्योतिः)

पण्डितायाः क्षमायाः कथामुक्तावलीमुद्दिश्य सरदारपाणिकर आह—"संस्कृतकथामुक्तावली आधुनिककथा युगस्य सर्वोत्तमा रचनास्ति । एतदीया भाषा सरला सरला प्रसादगुणगुम्फिता वर्तते । अत्र वर्तमान भारत नैजेऽनघ स्वरूप प्रतिबिम्बित दृश्यते । वस्तुत एष कथासंग्रहः क्षमायाः पण्डितायाः संस्कृतसाहित्यस्य कृते अद्भुत चिरस्थायि प्राभृतम् ।"

गीति—मीरालहरी नाम गीतिकाव्यं गीतिकाव्येषु शुद्धसंस्कृतपदपङ्क्तिभिः ~~सदुक्तिस्फीतिस्मितस्मितिनिस्वनवत्कलस्वनाक्रान्तिमास्ते~~ । तत्र भावनाया क्लिष्ट-चमत्कारचञ्चलस्वदेशयमसंकुलता च अनुपमैव प्रेक्ष्यते । नूनं गीतिकाव्यमिदं प्रणीय अनया मातृकहृदयसा संस्कृतगीतिकारचनाश्रा सवर्द्धितैव ।

नाटकं हि काव्यसाहित्यस्य श्रेष्ठमङ्गम् । पण्डितक्षमाया नाटकानि नाट्यं

जनं समीचीनतया मग्पादयन्ति यद् हृदि निधाय नाटकाना सृष्टिर्नाटकाचार्यैः कृता। 'गिरिजयप्रतिज्ञनवालविधवादिनाटकानि तदीयानि वर्तमानयुगस्य प्रतिनिधित्वमनुतिष्ठन्ति। एकाङ्कि साहित्यमपि तस्या एकाङ्किनाटककलाया' न्तीयमाभ्यन्तर रूपं परिगृह्य दीप्यन्ते।

विविधरचना—विविधरचनासु इह पण्डितक्षमाया पत्रभाषणादीनामन्तर्भावो भवति। इमानि च पत्रभाषणादीनि सन्ति महत्त्वशालीनि। एष्योऽपि सर्वे आत्मानमुपकर्तुमर्हन्ति। प्रकाशिते सति एवंविधे साहित्ये लोको नूनं तत स्वयमेव ग्रहीतुं शक्नुयात्।

श्रद्धेया कवयित्री क्षमा न केवलं साहित्यं सृष्ट्वा स्वं देशमसेवत परं मा भारतभाग्यप्रकाशमहात्मगान्धिनो नायकत्वे ग्रामे ग्रामे नगरे नगरे च परिभ्रम्य स्वकीयैः श्रेष्ठैराचारैरदारैश्च विचारैर्दासत्वशृङ्खलानिबद्धाया जनताया स्वातन्त्र्यप्रेरणाया स्फूर्तिमपि समुदपादयत्। सा भारतस्य प्रायेणाष्टादशभाषासु अभिज्ञता न्यदधात् तस्मात् यत्रापि अगात् तत्र स्वविचारास्तत्प्रदेशस्यैव भाषया स्फुटीकृतवती। तस्या देशभक्तत्वात पञ्चस्थिविदुषीत्वात् तस्या भाषणानि देशवासिना मानसेष्वमोघं प्रभावमक्षिपन्।

इयं प्रतिभाशालिनी विदुषी २२-४-५४ तमदिनाङ्के भूलोके निजकृतिकीर्तिं वितत्य तिरोहिताभवत्। भूयसतात् सदा भारतभुवं एवंविधाभिः सत्कृतविदुषीभिर्भगवान्।



( ख ) श्रीमज्ज्ञानेन्द्रभिक्षोरधिगतसकलब्रह्मविद्याप्रपञ्च -
काणादीराक्षपादीरपि गहनगिरो यो महेन्द्रादवेदीत् ।
देवादेवाध्यगीष्ट, स्मरहरनगरे शासनं जैमिनीयं
शेषाङ्कप्राप्तशेषामलभणितिरभूत् सर्वविद्याधरो यः ॥

( ग ) निर्माय नूतनमुदाहरणानुरूपं
काव्यं मयात्र निहितं न परस्य किञ्चित् ।
किं सेव्यते सुमनसां मनसापि गन्धः
कस्तूरिकाजननशक्तिभृता मृगेण ॥

पण्डितराजा जगन्नाथ इमान् ग्रन्थान् व्यरचत्—

( १ ) गङ्गालहरी ( पीयूषलहरी ) एष ग्रन्थो गङ्गास्तवविषयकोऽस्ति ।

( २ ) सुधालहरी ( सूर्यप्रशस्तिरत्र वर्तते ) ।

( ३ ) अमृतलहरी ( अत्र यमुना स्तुतास्ति ) ।

( ४ ) करुणालहरी ( इह भगवतो विष्णोः स्तुतिः कृतास्ति ) ।

( ५ ) लक्ष्मीलहरी ( लक्ष्मीप्रशंसाया रचितेयम् ) ।

( ६ ) आसफविलास ( आसफखानस्य प्रशंसाया रचितः ) ।

( ७ ) प्राणाभरणम् ( कामरूपाधिपतिप्रशंसायामुपनिबद्धम् ) ।

( ८ ) जगदाभरणम् ( उदयपुराधीश्वरकर्णसिंहसूनुजगत्सिंहस्य वर्णनमत्र विहितम् ) ।

( ९ ) चित्रमीमांसाखण्डनम् ( अप्पयदीक्षितप्रणीतचित्रमीमांसाख्यग्रन्थस्य खण्डनमिह दृश्यते ) ।

( १० ) मनोरमाकुचमर्दनम् ( भट्टोजिदीक्षितकृतस्य मनोरमाभिधग्रन्थस्य खण्डनरूपम् ) ।

( ११ ) भामिनीविलास ( अत्र सन्ति गृहीताः करुणा शृङ्गारनिर्वेदान्योक्तिविषयाः ) ।

( १२ ) रसगङ्गाधर ( अलङ्कारशास्त्रविषयकोऽयमद्भुतो ग्रन्थोऽस्ति ) ।

यमुनावर्णनपरकमपि ग्रन्थं गद्ये पण्डितराजश्चकार इत्येतद् विदुषां जगति श्रूयते परं साम्प्रतं न स प्राप्यते । पण्डितराजोऽन्योक्तिसम्बन्धिनीमपि रचनामेकां रचितवान् । एषा तदीया रचना सम्प्रति हि तस्मिन् संग्रहे संगृहीतास्ति

यत्र पण्डितराजप्रणीतानां कृतीनां सङ्ग्रहः कृतः वर्तते । रसगङ्गाधरो नाम ग्रन्थो न पूर्णः प्राप्यते ।

संस्कृतसाहित्ये गीतिकाव्यप्रणेतारो ये सुप्रसिद्धाः भर्तृहरि-बिल्हण-अमरुक-हाल-धोयी-गोवर्द्धनाचार्य-जयदेवप्रभृतयः कवयोऽभूवन्, तेषु पण्डितराजस्य जगन्नाथस्यापि गणना सादरं गीतिकाव्यकोविदैर्विधीयते । पण्डितराजस्य गीतिषु रसिकानां स्वान्तरसौन्दर्यविशेषविकासविधायिनी मधुरता विलसति । तदीयगीतयो हि सहृदयान् जयदेवं स्मारयन्ति । तदीयानां शब्दानां तत्त्वं मनोज्ञत्वं तत्त्वं प्राञ्जलत्वं च दृष्ट्वा चमत्कृतं भवति यत् भर्तृहरेः सदृशः शोभते । भवता भावभङ्गिमा सौष्ठवं पदविन्यासः सर्वत्रैव गीतिषु तदीयासु विलसति तस्मात् विदग्धा जना अपि तस्य गीतिकाव्यानि नितरामेव प्रशंसन्ति । भक्तिर्विलासस्तदुचितमुक्तकानीनां रमणीयः सङ्गमो वरीवर्ति ।

(अ) नीरे तनया वदनं सहासं
नाले सरोजस्य मिलिन्दिकामम् ।
आलोक्य धावत्युभयत्र मुग्धा
मरन्दलुब्धालिकिशोरमाला ॥

(आ) रे चेत कथयामि ते हितमिदं वृन्दावने चारयन्
वृन्दं कोऽपि गवां नवाम्बुदनिभो बन्धुर्न कार्यस्त्वया ।
सौन्दर्यामृतमुद्गिरद्भिरभितः सम्मोह्य मन्दस्मितैः
एष त्वां तव वल्लभांश्च विषयानाशु क्षयं नेष्यति ॥

इत्येवमादिभिर्भूयोभिर्नितान्तमधुरैर्गीतिरत्नैर्ललिततरैः स्तोत्रैर्विविधरसास्वादं भक्तिविलासस्य, भावुकानां समाजं सोऽतितरामाह्लादयति ।

पण्डितराजस्य कवितायां नैसर्गिकः प्रवाहः सर्वत्र प्रवहति । तत्र पदानां मनोऽभिरामा रचना कल्पनायाश्च हृदयहारिणी चमत्कृतिः चकास्ति । स महान् परमेशभक्त आसीत्, अत एव तदीयासु गङ्गालहरी-सुधालहरी-करुणालहरी-प्रभृतिकृतिषु भक्तिभावना प्राधान्येन भूत्वा आनन्द-सुधासागरनिमज्जनचतुरतां च भूत्वा समुल्लसति । स सकलमपि स्वाभिमानं विहाय सततमपि दुःख-करुण-दम्भादिदुःखं परित्यज्य नितान्तसरलहृदयतया आत्मसमर्पणमपि विधाय, स्वकीयान् भक्तिप्रवणान् भावान् स्तोत्रेषु समार्द्रीविशद् अतो भक्तिभावसुधा उत्पाद्य रसपदवीमधिरोहति । पिबन्तु सुधिय इह त्रिचतुर्भक्तिसुधासागरान् —

(अ) अयि दीनतरं दयानिधे, दुरवस्थं सकलैः समुज्झितम् ।
अधुनापि न मां निभालयन् भजसे हा कथमश्मचित्तताम् ॥
सुमहान्ति जगन्ति बिभ्रतस्तव यो नाभिभूत्क्षणतामपि ।
स कथं परमाणुदेहिनो परमाणोर्मम धारणे श्रमः ॥

(आ) नितरां विनयेन पृच्छयते सुविचार्योत्तरमत्र यच्छ मे ।
करितो गिरितोऽप्यहं गुरुस्तदरितो नोद्धरसे यदद्य माम् ॥
न धनं न च राज्यसम्पदं नहि विद्यामिदमेकमर्थये ।
मयि धेहि मनागपि प्रभो करुणाभङ्गितरङ्गितां दृशम् ॥

(इ) निधानं धर्माणां किमपि च विधानं नवमुदाम्
प्रधानं तीर्थानाममलपरिधानं त्रिजगताम् ॥
समाधानं बुद्धेरथ खलु तिरोधानमधियां
श्रियामाधानं न परिहरतु तारं तव वपुः ॥

(ई) विषीदता नाथ विषानलोपम-
विषादभूमौ भवसागरे चिरम् ।
परं प्रमोदास्पदपङ्कजाङ्घ्रिणा
मयायमात्मा भवते समर्प्यते ॥

पण्डितराजो जगन्नाथोऽपि श्रीहर्षभवभूतिसदृशः स्वाभिमानशाली बभूव । स संस्कृतसाहित्ये यथा पाण्डित्यकवित्वादिहेतोर्विश्रुतोऽस्ति तथैवासौ स्वगर्वोक्तिनिमित्तादपि विख्यातो वर्तते । वस्तुतस्तस्य गर्वोक्तयो न सत्यलीकाः । अवर्तताऽपि तत्रागाधं वैदुष्यं विलक्षणा च प्रतिभा तस्माद् गर्वोक्तिरिभ्रेत् स स्वयमतिस्पर्धी कृतस्तर्हि तुच्छमेव तत् ख्यातम् । श्रूयतामेका तदीया गर्वोक्तिः—

गिरां देवी वीणागुणरणनहीनादरकरा
यदीयानां वाचाममृतमयमाचामति रसम् ।
वचस्तस्याकर्ण्य श्रवणसुभगं पण्डितपतेः
धुन्वन् मूर्धानं नृपशुरथवाऽयं पशुपतिः ॥

पण्डितराजोऽन्योक्तिप्रणयने च परामेव परीयस्तां गाहते । अन्योक्तिषु तदीयासु अपूर्वा मनोज्ञता विमलञ्च व्यङ्ग्यं विभाति । अतस्ता प्रेक्षावतां कण्ठाभरणतां गताः सन्ति—

प्राक्तनेषु शास्त्रकारेषु महती श्रद्धासीत् । स मम्मटस्यानेकसिद्धान्तान् प्रत्याख्या नवान् पर न क्वापि स प्रत्याख्यानार्थमशिष्टां भाषामवलम्बमानोऽधिगम्यते । स स्थाने स्थाने 'गलस्य शिर मणि'रित्येतेन विशेषणेन सम्बोधयन् समवेक्ष्यते । पर स्वकालीनै भि कतिभि प्रधीभि सार्धं तस्यासीत् स्पर्धा । विशेषतो भट्टोजिदीक्षिताप्पयदीक्षिताभ्यां सह । तस्मादमी तत्सिद्धान्तनिरसन क्वचित् परुषनामादृदान प्रतिलक्ष्यते । अस्तु तावत् ।

पण्डितराजो महारसाकरोऽ यासीत् । तस्य तर्कशैल्या लोकोत्तरस्तर्कि क्यन प्रसादनप्रवीणस्य तल्लिखितेषु सिद्धान्तग्रन्थेषु स्फुटतया विशदतया च समवेक्ष्यते ।

पण्डितराजस्य रसगङ्गाधरोऽपूर्वोऽद्भुतो मूर्धन्यश्च ग्रन्थोऽस्ति ह्यलङ्कारग्रन्थेषु । अध्ययनीयोऽयमस्ति ग्रन्थ । अलङ्काराणामिह परमगाम्भीर्येण विवेचन तलस्पर्शिन्यां मर्मभेदिन्यां भाषायां विहित दृश्यते । तेषां स्वरूपस्य प्रतिष्ठापने च न्यास आचरितो विद्वद्वरेण लेखकतल्लजेन वस्तुत सोऽस्ति अभिनन्दनीय । न केवलमेतावत्यत्र विशिष्टता विद्यतेऽस्य ग्रन्थस्य । एषा विशिष्टता तु न वर्तते तादृशी गरीयसी यादृशी रसनिरूपणविषयके स्थले दृष्टा भवति । तत्र तु पण्डितराजस्य प्रतिभायाश्चरम उत्कर्ष एव वीक्षितो जायते । नानाधस्त्वद्रस्थले पदार्थोपस्थित्यर्थं या प्रक्रियाङ्गीकृतास्ति किञ्च व्यञ्जनामधिकृत्य यो हि सारो निस्सारित सोऽपि विद्वल्लोक भृश प्रीणाति । सर्वेऽपि विद्वांस एकमतेन ग्रन्थेऽस्मिन् प्रदर्शित काव्यलक्षण, शाब्दयुपपादन, गुण निरूपण, रसरसाभाना मुपाख्यानाश्च प्रतिपादन, भावानाञ्च विशदतयावदाततया च कृत वर्णन प्रशंसन्ति पुन पुन । को नाम रस इत्यत्र स आह—

'समुचितललितसनिवेशचारुणा काव्येन समर्पितै सहृदयहृदय प्रविष्टैस्त दीयसहृदयतासहकृतेन भावनाविशेषमहिम्ना विगलितदुष्यन्तरमणीत्वादिभिरलौकिकविभावानुभावव्यभिचारिशब्दव्यपदेश्यै शकुन्तलादिभिरालम्बनकारणैश्चन्द्रादिभिरुद्दीपनकारणैरश्रुपातादिभि कार्यैश्चिन्तादिभि सहकारिभिश्च सभूय प्रादुर्भावितेनालौकिकेन व्यापारेण तत्कालनिवर्तितानन्दांशावरणाज्ञानेनात एव प्रमृष्ट परिमितप्रमातृत्वादिनिजधर्मेण प्रमात्रा स्वप्रकाशतया वास्तवेन निजस्वरूपानन्देन सह गोचरीक्रियमाण प्राग्विनिविष्टवासनारूपो रत्यादिरेव रस ।" अत्र स मम्मटाभिनवगुप्त भट्टनायकप्रभृतीनामनेकेषां प्राचामाचार्याणां बहूनाञ्च नव्यानां

मनस्युपधारयन् "रसो वै स" इत्येतच्छ्रुतिस्वारस्येन रत्याद्यवच्छिन्ना भग्नावरणा चिदेव रस इति गमयति।

केचन कविकौशल-कल्पितकमनीयतास्पदं शब्दमेव काव्यं मन्यन्तेऽपरे कविकौशल-कल्पितकमनीयतास्पदं शब्दार्थयुगलमेव काव्यमिति वदन्ति। काव्यस्य एतद्द्वयं सामान्यलक्षणं मतम्। पण्डितराजो जगन्नाथस्तेषु काव्यलक्षणकारिष्व-न्यतमो य शब्दमेव काव्यत्वेन स्वीकरोति। पण्डितराजस्य काव्यलक्षणमिदं— "रमणीयार्थप्रतिपादकः शब्दः काव्यम्" स्वलक्षणस्य व्याख्यायां स इमानि वाक्यानि निदधानोऽवाप्यते ।—"इत्थं च चमत्कारजनकभावनाविषयार्थप्रतिपाद-कशब्दत्वम्, यत् प्रतिपादितार्थविषयकभावनात्वं, चमत्कारजनकतावच्छेदकं तत्त्वम्। स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकतासंसर्गेण चमत्कारवत्त्वमेव वा काव्यत्वमिति फलितम्।" पण्डितराजः शब्दार्थयुगलं न काव्यत्वेनाङ्गीकुरुते। स आह—"काव्यमुच्चैः पठ्यते, काव्यादर्थोऽवगम्यते, काव्यं श्रुतमर्थो न ज्ञातः, इत्यादिविश्वजनीनव्यवहारतः प्रत्युत शब्दविशेषस्यैव काव्यपदार्थत्वप्रतिपत्तेश्च ·· तदेवं शब्दविशेषस्यैव काव्यपदार्थत्वे सिद्धे तस्यैव लक्षणं वक्तुं युक्तम्।"

पण्डितराजः काव्यस्य कारणमेकमात्रं हि उपाद्यां प्रतिभां मनुते। कारणा-न्तराणि तु परम्परयैव स काव्यस्य कारणत्वेन स्वीकुरुते। स ब्रूते—"तस्य च कारणं कविगता केवला प्रतिभा।"

रसगङ्गाधरकार उत्तमोत्तमममध्यमाधमभेदात् काव्यं चतुर्षु भागेषु विभनक्ति। "केचिदिमानपि चतुरो भेदानगणयन्त उत्तममध्यमाधमभावेन त्रिविधमेव काव्य-माचख्युः" इत्यभिधाय त्रिभेदमानिन आक्षिपति।

पण्डितराजस्त्रीन् एव गुणान् मन्यते। गुणानां रसधर्मत्वेऽपि अयं विद्वान् महतीं समालोचनां "प्रत्यक्षमेवेति चेत् न ·····"इत्यादिशब्देषु सन्निवेशयन् दीप्तिमान् भवति। स "आत्मनो निर्गुणत्वात् रसे गुणानां स्थितिर्न भवितुं शक्नोति" इति वदति। इदमपि स ब्रवीति 'यद् रसस्योपाधयः सन्ति रतिशोकक्रोधा-दयः। तेषामिच्छा(ज्ञान)रूपत्वात्, ते गुणा इत्युच्यन्ते। गुणो न गुणे स्यादिति प्रसक्तिः ; एतद्धेतो रत्यादावपि गुणस्थितिर्न सम्भवा। तस्मात् शब्दादौ गुणा वसन्ति।'

अभिधादिशक्तिनिरूपणकारिषु पण्डितराजजगन्नाथोऽप्यस्ति। तिसृणामपि-अभिधा लक्षणा-व्यञ्जनानां शक्तीनां प्रतिपादने व्याख्याने च सः गम्भीरं पाण्डित्यं

सूक्ष्मदर्शित्वञ्च प्रकटीकुर्वन्नवाप्यते । "शक्याख्योऽर्थस्य शब्दगतः, शब्दस्यार्थगतो वा सम्बन्धविशेषोऽभिधा" इत्यभिधाया लक्षणमुपपादयन् स 'केवलसमुदायशक्ति, केवलावयवशक्ति समुदायावयवशक्तिसङ्कर'इति भेदत्रयेण तस्यास्त्रिविधत्वमामनति । 'शक्त्या प्रतिपादकत्वमभिधा' इत्येतदप्यदीक्षितोक्तं तल्लक्षणमसौ 'इदं शक्त्याख्यमानायाम्'······इत्यादिशब्दैर्निरस्यन् 'न चाभिधातःशक्तिरतिरिक्ते'त्याद्युक्त्वोपसंहरति स्वकीयं तत्प्रत्याख्यानारम्भमवतरणम् । मम्मटादिरिव सोऽपि चतुष्टयी शब्दानां प्रवृत्तिरिति मन्यते । "शक्यसम्बन्धो लक्षणे"त्येतल्लक्षणालक्षणं प्रकाश्य स तस्या निरूढा प्रयोजनवती चेत्येतौ द्वौ भेदावभिधाय प्रयोजनवत्याः षड्विधत्वं प्रतिपादयति । तत्र च स प्राचामाशयमपि मतभेदप्रदर्शनपुरस्सरमभिव्यनक्ति । एतावदेव न 'नव्यास्तु' इत्यतस्तेषामाकुलीभाव स्यादि'त्येतत्पर्यन्तं नव्यानामपि विचारान् सम्यक् समालोचयति । यथा काव्यप्रकाशे मम्मटेन व्यञ्जनायाः प्रतिष्ठापनमनेकानेकाभेद्याच्छेद्ययुक्तिपूर्वकं विहितं तथा रसगङ्गाधरे तन्न दृश्यते परं संलक्ष्यक्रमध्वनिनिरूपणावसरे पण्डितराजस्तदुपपादनं वैदग्ध्येन विदधानः पर्यवलोक्यते । एतस्मिन् स्थले स ब्रूते—"····'तस्माच्छक्यार्थस्याप्राकरणिकेऽर्थे व्यञ्जने'ति प्राचां सिद्धान्तः शिथिल एव । प्राकरणिकाप्राकरणिकयोरर्थयोरुपमाया तु सा कदाचित्स्यादपीत्यत्रास्माकं प्रतिभाति··· ।"

भाव' च इत्यत्र स्वमतस्य प्रदर्शनात् प्राक् पण्डितराजस्तन्नव्यलक्षणेषु दोषं दर्शयति । तदीयानि भावप्रकरणगतानि वाक्यानि द्वित्राण्यत्र निधीयन्ते—( १ ) "अथ किं भावत्वम् ? विभावानुभावभिन्नत्वे सति रसव्यञ्जकत्वमिति चेत्, रसनान्तरादिष्वतिव्याप्त्यापत्तेः ।" ( २ ) "नापि रसाभिव्यञ्जकचर्वणाविषयचित्तवृत्तित्वम् । भावादिचर्वणायाम् ···अतिप्रसक्ते ।" इत्थं हि पण्डितराजस्तल्लक्षणमालोचयन् स्वाभिमतं भावलक्षणं लिखत्येवम्—"विभावादिव्यज्यमानहर्षाद्यन्यतमत्वं तत्त्वम् ।" एवमत्र नैव "व्यभिचार्यञ्जितो भाव" इत्येतत् काव्यप्रकाशकारोक्तं भावलक्षणं प्रतिष्ठाप्य परिपुष्णाति । निःसंशयं, भावानां यद् विशदं यथार्थं निरूपणं पण्डितराजेन कृतं तदतितरां रमणीयं वर्तते । एवमेवानेकार्थशब्दस्थले पदार्थोपस्थितिः केन प्रकारेण जायते—इत्येतद्विषयकं यदुपपादनं पण्डितराजेनानुष्ठितं तद् विद्वद्वराणां निखिलामपि जगतीं मूर्तां प्रीणाति । पण्डितराजो यमपि विषयं विविनक्ति तं प्रकाण्डपाण्डित्य-

अर्थादरणचौरत्वं किं स्तुमः सारस्वतादिनाम् ।
अन्यार्थेभ्योऽपि ये चार्थान्निष्कर्षन्ति सहृदयाः ॥

अन्या जगद्धितमयी मनसः प्रवृत्ति-
रन्यैव कापि रचना वचनावलीनाम् ।
लोकोत्तरा च कृतिराकृतिरङ्गहृद्या
विद्यावतां सकलमेव गिरां दवीयः ॥



अस्ति । सा यथास्थानं यथावसरं च मृदुलोक्त्या च दृश्यते । तथापि रसास्तत्र नितरामुचिततया दृढतया च सन्निवेशिताः सन्ति । वीररसः, यस्यार्वाचीने संस्कृतसाहित्ये प्रायेणाभाव एवास्ति, ग्रन्थेऽस्मिन् अस्ति प्रधानः । शृङ्गारोऽप्यस्ति । अस्ति च सः सर्वथा सात्त्विकः सुकोमलः प्रसन्नश्च । शान्तिः न तदाश्लिष्टा समागतास्ति । युद्धसन्दर्भे रौद्र-भयानक-बीभत्सानाञ्च च वीरे अद्भुतस्य निर्वहणं पर्याप्तमात्रायां समीचीनमेव सम्पन्नमस्ति । राजनीतेश्चारचातुर्यस्य सङ्ग्रामशौण्डतायाश्च निरूपणमत्यन्तं मनोज्ञं वर्तते । उच्चतमा च विशिष्टतेयमेतदीया यद् गृहीतो हि विषय ऐतिहासिको विद्यते तत्रास्ति यथार्थता न च कपोलकल्पितता तत्र वर्तते । देशभक्त्या जन्मभूमिभक्त्या चैषा कृतिः परिपूर्णमास्ति । तत्र राजानं प्रति प्रजाया भक्तिः, प्रजाश्च प्रति राज्ञो भक्तिरथ च द्वयोरेव धर्मं प्रति भक्तिः किञ्च राष्ट्रियभावना उच्चैः परिस्पन्दते । एतादृशानां भावानां वस्तुतोऽर्वाचीनेषु संस्कृतग्रन्थेषु सर्वथा अभाव एव प्राप्यते ।

नाहमवबोद्धुं शक्नोमि, कस्मात्कारणात्, विद्वन्मण्डलसंशीलनापूर्णेषु हठादारूढपदसुगुम्फितेषु माघकिरातादिषु तावन्तं महिमानमारोपयन्ति, अत्र च ते एतत्कृते ग्रन्थे शिवराजविजये—ईर्ष्यन्ति न चेत्, तदा तेषां पराङ्मुखता तु अस्ति । ग्रन्थस्यास्य यावान् प्रचारः स्यात् तावदेव वरम् ।"

महामहोपाध्यायो गोपीनाथमहाकविराजश्चाद्यतनां विद्वद्धौरेय इदमैतिहासिकं गद्यकाव्यं साम्प्रतिकस्य युगस्य श्रेष्ठा रचना मन्वानो ब्रूते—यद् यद्यपि कृतिरेषा नव्या परमुत्कृष्टतमस्थानाधिष्ठापनार्हा ।

इदं सर्वे विपश्चिद्वराः सम्यग् जानन्ति यद् गद्यकाव्यस्य प्रणयनं दुष्करं भवति । पद्ये सौष्ठवं तु सुलभतया समुपपद्यते परं तद् गद्ये सुलभतया न कदापि सम्भवति । सर्वाङ्गीणसुन्दरताया समुन्मीलनं तु तत्र ततोऽपि कठिनं भवति । अत एव 'गद्यं कवीनां निकषं वदन्ति' इत्येषा सूक्तिः सर्वत्र सुविदितास्ति । गद्यकाव्यस्य दुष्करतां लक्ष्यीकृत्य—"पद्ये छन्दःपारवश्यात् स्वच्छन्दपदप्रयोगो न भवतीत्यनिच्छतापि कविनाप्रसङ्गप्राप्तं स्वाभाविकं स्वरूपमपि वर्णनीयस्य क्वचिद् विस्मार्यते, क्वचिद् बह्वपि नियताक्षरे संक्षिप्य सोद्दिष्टं विधीयते, क्वचिच्च क्लिष्टास्वाभाविकपदप्रयोगमसमापनीयान्यपि पारस्परिकाशयसम्पन्नवाक्यानि जटिलीक्रियन्ते । गद्ये तु यदि किमपि शब्दजमस्वाभाविकं स्यात्, तत्कर्तैव निन्द्यते महदवद्यम्—इत्यादिकारणं पद्यापेक्षया गद्यमेव महामान्यं

भवति" इत्येतद् अम्बिकादत्तव्यास स्वयमपि वक्ति परं यदा वयं नैजदृष्टिं तस्य शिवराजविजयरचितगद्योपरि आपातयामैव विचारयामस्तदैव तदेतत् ज्ञातं जायते यत् श्रीव्यासविदुषो गद्यं तां सर्वां विशिष्टतां निदधाति या श्रेष्ठगद्ये भवन्ति।

"नवोऽर्थो जातिरग्राम्या श्लेषोऽक्लिष्टः स्फुटो रसः ।
विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुष्करम् ॥"

इति यद् बाणेन गद्यस्य सौन्दर्यमुदीरितं तत् स्फुटमेव श्रीव्यासस्य कृतौ-शिवराजविजये विलोकितं भवति। तत्र सर्वत्र मनोभिरामाणां पदानां सद्विन्यासः कृतं वर्णने, नवनवार्थानामुन्मेषः संलक्ष्यते; न क्वापि अस्वाभाविकताया लेशोऽपि दृष्टो भवति, श्लेषस्य परिग्रहो यत्रापि कृतो न स अस्ति शिरोवेदनाकृत्। पाठकः श्रोता च अनायासेनैव सर्वत्र रसं पिबन् अग्रे उपसरन् वं चिता जायते। संस्कृतभाषाया वीरतापूर्णभावानामभिव्यक्त्यर्थं कियती बलवती सफला च शक्तिर्विराजते किञ्च नव नवविषयस्या ममाकारिणी कीदृशी कियती च महती प्रभविष्णुता प्रभुहर्ताति च श्रीव्यासविपश्चिद्वरस्य शिवराजविजयाध्ययनेन सम्यग् ज्ञानं भवति। इत्योदाहरणानि निधाय एतासां सर्वासां विशिष्टतानां किञ्च एताभ्यो व्यतिरिक्तानामन्यासां विलक्षणतानां प्रदर्शनस्य समासेनोद्योगो विहितो भवेद् येनोपरि निवेदितं निवेदनं प्रत्यक्षं स्यात् किञ्च समालोचकैर्विद्वद्भिर्ग्रन्थमिममधिकृत्य या श्लाघा कृतास्ति तस्या अपि सत्यता प्रमाणिता भवेत्।

शिवराजविजयस्य रचनायाः कालः स आसीद् यदा भारतीयजनतायाः मानसे देशभक्तिभावना पूर्णतया प्रसुप्तासीत्, यदा भारतीया शोचनीयां दीनतां कापुरुषताञ्च अवलम्बमाना समजायन्त, यदा तेषु नोत्साहो, न जीवनशक्तिः, न कर्तव्यपरायणता, न स्वधर्मपालननिष्ठा च व्यलोकिषत, यदा ते निद्रया, व्यसनेन बहुविधैश्च देशापकारानुरागैः कलहैरेव नैजं जीवनसमयं नयन्त एव समुपालक्ष्यन्त, यदा तेषां शोणितेऽल्पापि उष्णता नान्वभूयत, यदा ते स्वकीयं गौरवं सर्वथैव विस्मरन्तो दासतामेव सर्वस्वं मन्यमानाः सुखेन कालं क्षिपन्तोऽदृश्यन्त, यदा ते विनष्टशौर्यभावा भवन्तः परचाटुकारितायामेव सलक्ष्या अवाप्यन्त, यदा ते स्वसंस्कृतौ स्वसभ्यतायाञ्च नितान्तमनभिज्ञा एव प्रातीयन्त, यदा ते निष्प्राणाः सन्तोऽपि भूभार एव निर्लज्जा व्यलोक्यन्त, यदा ते परकृतं न्यक्कारमपि स्वकीयं सम्मानमिवावगच्छन्तः सर्वत्र समासादन्त, यदा च ते सर्वस्वमौचित्यं विस्मरन्तो नृत्ये सङ्गीते हासे उपहासे च निमग्नाः पर्यदृश्यन्त। एतादृशे चिन्तनीये पतनकाले शिवराजविजयो भारतीयां जनतां देशभक्तिमन्व

शिक्षयत्, तस्यामनादृतोऽनेहसि किं प्रमुखं कर्त्तव्यमित्युपादिशत्, तस्या मानसे उत्साहस्योत्कटं स्रोतः समचारयत्, तस्यामात्मगौरवभावनामजागरयत्, तस्याः स्वान्ते वीरताया अनभिभवनीयां नितान्तवेगवतीं सरलां भावनामपूरयत्, तत्र च स्वातन्त्र्यस्य शक्तिशालिनः पावनान् भासुरांश्च भावान् कृत्स्नतया अवपत्। 'क्वाधुना मन्दिरे मन्दिरे जयध्वनिः? क्व सम्प्रति तीर्थे तीर्थे घण्टानादः? क्वाद्यापि मन्त्रे मन्त्रे वेदघोषः? अद्य हि वेदा निरुध्य वीथीषु निक्षिप्यन्ते, धर्मशास्त्राण्युद्धूय धूमध्वजेषु ध्मायन्ते, पुराणानि पिष्ट्वा पानीयेषु पात्यन्ते, भाष्याणि भ्रंशयित्वा भ्राष्ट्रेषु भर्ज्यन्ते, क्वचिन्मन्दिराणि भिद्यन्ते, क्वचित् तुलसीवनानि छिद्यन्ते, क्वचिद् दारा अपह्रियन्ते, क्वचिद् धनानि लुण्ठ्यन्ते, क्वचिदार्त्तनादाः, क्वचिद् रुधिरधारा, क्वचिदग्निदाहः, क्वचिद् गृहनिपातः" इत्याद्युच्चैरुद्घोषय सकलानामपि भारतीयानां मनांसि भृशमान्दोलयन् तेषां नयनानि उन्मीलयन् तथा नाड्याः शोणितमुष्णं च प्रापयन्, अन्यायं प्रति तेषां रोमणि रोमणि रोषं जनयन्, अत्याचारपराणां म्लेच्छानां विध्वंसनाय तथा स्नायुषु प्रचण्डां भीषणां च जीवनशक्तिं समुत्पादयन् हि स समुपतिष्ठते।

यद् भारतं सम्प्रति घोरैः प्रतापशालिभिरतन्द्रिभिर्विक्रमवद्भिर्वीरैरिताश्रासुशोभिर्निर्विहीनमस्ति यत्र नाधुना शान्तिर्न च लक्ष्मीर्न च सौख्यं न च धर्मो न च विद्यैव दीव्यते, यत्र च राजानः परस्परं कलहायन्ते स्नेहं धनं शिथिलीकृत्य च वैरे धियं नियोज्य स्वकीयान् एव विनाशयितुमुपक्रमन्ते, यत्रान्या हि भग्नस्वशौर्यवैभवः सुन्दरीणां मस्तानेत्तगचरणसरसिजेषु मानसं समर्पयन्तो दीव्यन्ते, यस्य दृप्तस्य अमात्यसमुदायः स्वार्थचिन्तायामेव सततं निलीनोऽवाप्यते, यत्र नृपाः स्वप्रशंसाश्रवण एव प्रगाढां रतिं निदधति, यत्र च विद्वांसोऽपि मूर्खमपि भूपं 'त्वं विद्वान् असि' इति, गुणगणरहितमपि 'त्वं गुणिनां शिरोमणिरसि' इति, बलरहितमपि 'त्वं बलवताम् अग्रगण्योऽसि' इति, कुरूपमपि 'त्वं कामस्याप्यवतारोऽसि' इति, उपचितप्रजानिन्दितमपि 'त्वं सर्वेषां प्रजानां प्रियोऽसि' इति च कथयित्वा कथयित्वा सर्वत्र मिथ्या प्रशंसां विदधाना श्रुता भवन्ति, तस्य भारतस्य चिन्तास्पदं चित्रं निरीक्ष्य 'शिवराजविजय' प्रियस्य स्वप्नलोकस्य निवासिनः सर्वानपि मानवान् सप्रश्रयं सानुरोधं च सन्दिशति यत् ते पतनगर्तनिपतितं स्वकीयं देशं समुत्थापयितुं मनसा वचसा कर्मणा च प्रयतेरन्।

'कार्यं वा साधयेयम्, देहं वा पातयेयम्" इत्यस्ति नायकस्य एतस्य शिवराजविजयस्याभिमतम्। भारतवर्षस्य निवासिना स्वकीयस्य राष्ट्रस्य स्वतन्त्रताया रक्षणाय, स्वदेशस्य संस्कृते सभ्यताया भाषायाश्च परित्राणाय, स्वराष्ट्रस्य गरिम्ण परिवर्द्धनाय, स्वकीयस्य धर्मस्य च गोपनाय एतादृश्येव द्रढीयसी प्रतिज्ञा कर्त्तव्येति शिवराजविजयस्य हार्दिकोऽभिलाषो बलीयान्। काम महान् प्रचण्डो झञ्झावात प्रवर्तमानो भवेत्, काम दारुणाभि श्यामश्यामतराभिर्घन घटाभिर्व्याप्तम् आकाशमण्डल स्यात्, काम मार्गो नितान्तभयङ्करो विषमो दुर्गमो वनसङ्कीर्णं पर्वतश्रेणीसमाकुलो नानाविघ्नबाधाभिर्ग्रस्यमानश्च भवेत् पर न स्वकीयाल्लक्ष्यमार्गाच्च्यवनेन मरणेन भाव्यमित्येतद् उपदेष्टुमेव शिवराजविजय — 'तावदकस्मादुत्थितो महान् झञ्झावात, एक साय समयप्रयुक्त स्वभाववृत्तोऽन्धकार, स च द्विगुणितो मेघमालाभि। वनाद् वनानि, शिखराच्छिखराणि, परश्शतान्तरानी प्रच रुजन्येनैव कन्दरि-कन्दर-प्रतिध्वनिमिश्रगुञ्जितेन महाशब्देन पर्यपूर्यन्त साऽरण्यानी। परममुनाऽपि—"देह वा पातयेय कार्यं वा साधयेयम्" इति कृतप्रतिज्ञोऽसौ शिववीर चरो न निजकार्यान्निवर्तते इत्येतद्वतरणमवतारयति मुदा।

शिवराजविजयो हि दर्शे तादृशान् भृत्यान् दिदृक्षते यादृशा हि भृत्या शिवराजस्य सविधे बभूवु। न शिवराजस्य भृत्या स्वामिनो वञ्चन जानन्ति स्म, न ते केनापि सुहृत्तरेण, उत्कोचलोभेनैव गृह्यमाणा अभूवन् ते सकला अपि विपद सोढु सदा सन्नद्धा अवाप्यन्त पर न ते आत्मान कर्त्तव्यपथान्भ्रशयन्। शिवराजविजयो राजकर्मचारिषु सेवकेषु राज्यप्रति देशम्प्रति सत्यमनुराग, सत्य कर्त्तव्यपरायणत्व सञ्चारयितुमेव—'कथ विश्वासघात स्वामिवञ्चनञ्च शिक्षयसि? य उत्कोचलोभेन स्वामिन वञ्चयित्वा आत्मानमन्धतमसे पातयन्ति न वय शिवगणास्तादृशा " इत्यादिकानि वाक्यानि सन्निवेशयति। शिवराजविजयस्याशङ्कास्ति यद् देशस्य नेतृषु ते सर्वे गुणा सन्ति वाञ्छनीया ये महाराज शिवे अशोभन्त। तद्गुणविशिष्टा एव देशस्य भारतस्य स्वतन्त्रता पातु प्रभवेयु निज देशस्य गौरव वर्धयितु समर्था स्यु। अत स शिवस्य गुणवर्णनव्याजेन स्वदेशस्य शासनसूत्रधारिषु राजनीतिनिष्णातत्व-विद्यासिन्धुत्व-रणचतुरत्व-दीनदुःखदावदहनत्व-स्वधर्मरक्षणसङ्गत्व-विलक्षणविचक्षणत्वादिसद्गुणानां सन्निवेशो भवेदित्येतां स्वकामनां प्रकटयति। न स इच्छति

कदाचिद् गिरिशिखराणि अवलोकयन् परिक्रमापरपादाहति-पिच्छिल पाषाण-पट्टिका-परिष्कृत-वेदिकाया पर्यन्ते कश्चित् समयमतिवाहयाम्बभूव ।"

अस्मिन् शिवराजविजये बहूनामलङ्काराणां प्रयोगः कृतो दृश्यते। क्वचिदुपमा, क्वचिद् रूपकम्, क्वचिद् विरोधाभास, क्वचित् समासोक्तिः, क्वचिच्च अन्येऽनेकेऽल ङ्कारा सचेतसां चेतांसि चोरयन्तः परिस्फुरन्ति ।

'एष भगवान् मणिराकाशमण्डलस्य, चक्रवर्ती खेचरचक्रस्य, कुण्डलमाख ण्डलदिशः, दीपको ब्रह्माण्डभाण्डस्य, प्रेयान् पुण्डरीकपटलस्य" इत्यादौ म ला रूपकालङ्कार स्थितो मनोहरच्छटामावध्नन् विलोकितो भवति, "कर-कम्पित-कृपा-कृपण-कृपाणो महादेवमाराधयिषुस्तपस्विवपोऽर्जुन इव शान्तवीररस द्वयस्नात" इत्यत्र पूर्णोपमा स्वकीय सौन्दर्यं वितन्वन्ती दृष्टा जायते, "परिश्च तस्यैव खर्वामप्यखर्वपराक्रमा श्यामामपि यशःसमूहस्वलीकृतत्रिभुवना कुशासना अप्यामपि सुशासनाश्रयाम्" इत्यादौ विरोधाभासस्य विच्छित्ति साधु दृश्यते च रीभवति, 'धारिताकृतिमिव वीरता विग्रहिणीमिव धीरता" मित्यादावुत्प्रेक्षा परिस्पन्दमाना सती विलोक्यते, "तेषां चैकैकमन्तरा महाफला माकन्दद्रुमा, मध्ये मध्ये च विहितपार्श्वम्भ पादपाश्लेषा मन्दमन्दमनिलालोला लता लसन्ती ' त्यादौ समासोक्तिश्च स्वविलासेन बुधवृन्दस्य मनो हरन्ती वीक्ष्यते ।

'पाथोधि पय पूर परिवर्ति परश्शतपोतस्थ सांयात्रिकसमूह-गेगीयमान कीर्ति चन्द्रिका चुलुकन चकोरीभूत कोङ्कण कल्याण खानदेशादि-महामण्डल प्रजागण " इत्येवविधानि दीर्घदीर्घतराणि समासाश्लेषितानि वाक्यान्येव न, शिवराजविजय उपहारीकृत्य कोविदकुल परिप्रीणात्यपि तु स "अभाग्य एष जन, अस्वायत्त हृदयम्, विगलित धैर्य्यम्, पराधीन चित्तम्, अस्थिर आत्मा, दुर्निवार प्रेमप्रवाह, दुरन्तोऽभिलाप, अप्रतिरोधा कर्मरेखा, तत् किमिव वच्मि ? इत्यादिकानि सरलसरलतराणि लघुलघुतराणि वैदर्भीरीतिसमुल्लसितानि वाक्यानि चोपायनी कृत्य विद्वद्वर्ग नन्दयति ।

शिवराजविजयो न केवल साहित्यिकान् ललितललिततरै नवनवरूपनाक ल्पितैर्नानाभावविभावितैर्वाक्यै सम्यक् मोदयतेऽपि तु स "धातु"क शास्त्रीय प्रामिर प्रायिक यतर ततर मोमुह्यमान-वरीवृत्यमान-पोस्फुट्यमान तातप्यमान- रुरुद्स्वल् प्रातवीविदात् विधित्सु सिसनासु-ह्ययाजिषत अतापिषत चर्करीति वर्भर्ति-नर्हति प्रभृतिप्रचुरतरपदानि च प्रयुज्य वैयाकरणानामपि ससार साधु परितोषयति ।

शिवराजविजये हि नवनवान्यभूतपूर्वाण्यश्रुतपूर्वपदानि च निहितानि । तानि च यानि पदानि निर्दिश्यन्ताम्—मौलवि, मोहरम, शमयानम्, उष्ट्रा, अर्गला, कावशायन, अष्टादश पालकी, मञ्जिनम्, शृङ्गार, छुरिका, तुरग, अगमाश्रम् काण्डोल, पोटलिका गडगडा, पत्रिका च ।

शिवराजविजये ये संवादाः समुपस्थापिताः सन्ति तेऽपि सवादानुकूलपदपद-युक्तत्वात् गम्भीरतां श्रयन्ति । तद्यथारपि निभाल्यन्ताम्—

महर्षि—उद्वाह कदा भविता ?

सन्यासी—श्वः ।

महर्षि—अत्र वरयात्रा-समयः कः ?

संन्या०—यानं कत्याणाय यामिन्याम् ।

महा०—अपि मस्तके अनुमता नगराधिकारिभिः ?

संन्या०—तदन्यथानिरिक्षिताः ।

महा०—भद्रम्, वरमपि सह योचयाम ।

शिवराजविजये यत् किमपि कथितं तत्र सर्वत्र अमोघा ओजस्विता, चम-त्कारकारिणी उर्जस्वलता, विचित्रैव वक्रोक्तिः, अद्भुतो भावाभिव्यञ्जनविधिश्च शोभन्ते । पाठकानां श्रोतृणाञ्च मनांसि सर्वेभ्योऽप्यन्येभ्यः पदार्थेभ्यः प्रसभमा-कृष्य शिवराजविजयस्य प्रभावपेशलानि गद्यानि स्वविषयं प्रति स्वाभिमनस्त्वं स्वच्छन्दयन्ति परमफलतापूर्वकं नेतुं तानि, सर्वथैव क्षमाणि भवन्ति । न कादम्बर्यां न वासवदत्तायां न दशकुमारचरितेऽपि सा भाव-प्रकटनप्रवीणता दृष्टिपथं याति या अत्र वीक्षिता भवति दिङ्मात्रमिह तस्या विदुषो लोलालोकेन क्रियतां स्वर्ज-वनं सार्थकम्—

( क ) हा भारत ! किं लुण्ठकैरेव भोक्ष्यसे ? हा वसुन्धरे ! किं यवनभ्रष्टानां रक्तैरेव स्नास्यसि ? हा सनातनधर्म ! किं विलयमेव यास्यसि ? हा चातुर्वर्ण्य ! किं कथावशेषमेव भविष्यसि ?

( ख ) ····· अगणित-फणावलि फूत्कारैरिव वीज्यमानो विमल-कमलोदर-मोदर-सौन्दर्याभ्यां कमलकोमलकमला-करतलाभ्यां पादयोः पीड्यमानो निःशङ्कं तस्मिन्नेव कोमलतमशेषे शेषे शेषे । तत् किं जगतः शेषे तव निद्रया भद्रायते ? ··· ··तत् किं गजोद्धार-धावन-स्थगितोऽसि ? यद्वा धावसि । विमराजगहनन-वनवास-व्रीडितोऽसि ? यद्वा नरसि ।

न शिवराजविजयः पुरातनकथनप्रणालीमङ्गीकुरुते। अङ्गीकृतापि यद्यस्ति तदा सा नवीनायामेव शैल्यां परिणमय्य अवतारितास्ति। तत्र रूपशिल्पस्य सौष्ठवं बङ्किमचन्द्रकृतस्योपन्यासस्य सौष्ठवमनुहरति। बाणस्य गद्य-सौन्दर्यं तत्र भाति परं तदुपरि व्यासस्य मुद्रा स्पष्टं परिस्फुरति, तत्र दशकुमारस्य पदलालित्यं विद्योतते परं न तत्पौराणिकतयालिङ्गितमस्ति। इतिहासकल्पनयोरत्र स मञ्जुलः सम्बन्धः संगुम्फितो यः संस्कृतसाहित्यस्य न पुरातने न चाभिनवे एव साहित्ये विलोक्यते।

न शिवराजविजये लेखकस्तद्व्याजेन कापि अनिर्द्वयी कथा सृष्टा तत्र तु समाजगतस्यैव तस्य ज्योतिः पिण्डस्य मानवस्य चरित्रं चित्रितं यो विशङ्कटसङ्कटसङ्कुलेऽपि देहेऽपि भारतीयगौरवं गोपायाञ्चकार। तस्य मानवरत्नस्य चरित्रं नूनं व्यासमहाकवेर्जीवनस्य ता व्याख्यां वितनोति यत्रादर्शमानवताया रूपं प्रत्यक्षीभवति। मन्ये, राष्ट्रियता शतशतप्ररोहमानवं प्रमोदयन्ती सर्वतः स्वां दिव्यामाभां विकिरति।

अहो, अम्बिकादत्तव्यासो, वस्तुतो महान् प्रतिभावान् विद्वान् कल्पनावान् उत्कृष्टराष्ट्रानुरागवान् अस्ति। तस्य देशभक्तिस्तस्य स्वसंस्कृतिविषयकं प्रेम एतत्सर्वं तद्रचनातः प्रस्फुटीभवत्यपरतस्तस्य रचनातस्तदीयमुत्कृष्टं पाण्डित्यं भाषाया उपरि महान् एकाधिकारो व्याकरणादिशास्त्रनिष्णाततादिकाश्च गुणा व्यक्ता भवन्ति। केन प्रकारेण तदीयेयं कृतिर्वर्णनीया स्यात्, या वीरताया इतिहासोऽस्ति, या राष्ट्रप्रेम्णो मन्दाकिनी अस्ति, या नानाकलाना कलितं राजभवनमस्ति, या चारुचरित्राणां चित्रशालास्ति, या हृदयहारिणां कोमलकान्तपदावलीनां विलासागारोऽस्ति।

स्वरचनां प्रति, सत्यमेव, एष कविर्यामं "स्वर्गाधरमाधुरीं विद्रुमयन् वाचां विलासो मम" इत्यभिदधौ। अन्ततो वयं—

> "का द्राक्षा रसमाधुरी मधु च किं क्षीरं च किं साधनं
>
> किं वा चक्रगतं च किं पिकवचः किञ्चापि योषित् स्मितम्।
>
> राष्ट्रप्रेममयी महोज्ज्वलगुणा वीरानुरागाङ्किता-
>
> दत्तव्यासकवेर्गिरा यदि शिवा श्रोत्रद्वयं गाहते॥"

इत्येतेषु पदेषु निधाय नैजां नतिमिमां महनीयां कृतिंप्रति, विरमाम।

—०—

# गीतिकाव्यम्

अस्ति गीतिकाव्यं सुरसरस्वतीमातुः परममृदुलं शिरीषादपि पेलवं मनोरमं मङ्गम्। तन्मुक्तकप्रबन्धभेदेन द्विविधम्। यत् सन्दर्भानपेक्षि भवत् स्वयमरसमन्दस्य पूर्णता बिभ्रद् स्वविषयवस्तुना रसिकानां मनांसि रञ्जयद्रमणीयं भवति तन्मुक्तकमिति[1] सञ्ज्ञया प्रथितम्। एतदीयं प्रतिपद्यं सरसं भवति तदास्वादमात्रेण सहृदयहृदयं सद्यः परिप्रीणयति। मुक्तककाव्येषु भर्तृहरेः शतकत्रयममरुकस्य चामरुकशतकं माघप्रभृतिकविकुलालङ्कारभूतपण्डितराजजगन्नाथस्य सरस्वतीसौरभञ्च सुन्दरतमान्युत्तमानि मुक्तककाव्यानि सन्ति। प्रबन्धकाव्येष्वेव रसपरिपोषमुररीकृत्यैकया धारया वस्तुनो मुक्तकानि काव्यानि समूलमुन्मूलयन्ति। रसं तत्र प्रतिपद्यमुन्मीलयद्भिरेव आनन्दवर्धनः 'मुक्तकेषु हि प्रबन्धेष्विव रसबन्धाभिनिवेशिनः कवयो दृश्यन्ते" इत्येतदाह।

यत्र किमपि भव्यं कथितं वा आख्यानकं कस्यचन गेयचरितस्यैकदेशजीवनमनुसृत्योपादीयते तत्प्रबन्धात्मकं गीतिकाव्यमिति स्मृतम्। मेघदूतमन्यानि च पवनदूतहंसदूतप्रभृतीनि काव्यानि उत्तमप्रबन्धगीतिकाव्यत्वेन गण्यन्ते।

गीतिकाव्येषु कवयः सङ्गीतमयानि वृत्तानि च प्रयुञ्जाना प्रायेण प्राप्यन्ते ते तत्र सुकुमारान् भावान् तदनुरूपाणि च मधुरमधुरतराणि पदानि निबध्नन्ति। वर्णनाय च शृङ्गार-नीति-वैराग्य-प्राकृतिकदृश्यसम्बन्धिनो विषयास्ते तत्र चिन्वन्ति। विप्रलम्भ शृङ्गार-करुण शान्तरसास्तत्र विशेषेण रमणीयतामनुवाना दीपिता भवन्ति। हृदयपक्ष एव प्राधान्येन परिस्फुरन् सर्वतः काव्यं व्याप्तं समवाप्यते च तत्र।

प्रकृत्या अधीरः कातरः सुखाभिलाषश्च मानवः। स आत्मानं स्वजनं परं वा विपन्नमार्तं दीनं वीक्ष्य विषीदति नितराम्। न तस्य महती जायते स्वप्रियजनविच्छेदे। दुःखानि यदा तमभिभवन्ति क्लेशा यदा तं क्लिश्नन्ति स रोदिति, सम्पद् सुखानि स्वजनस्नेहः प्रियजनसम्पर्कश्च प्रसादयति प्रमोदयति च। तत्रैवा

1 पूर्वापरनिरपेक्षेणापि हि येन रसचर्वणा क्रियते तदेव मुक्तकम्—ध्वन्यालोक

स हसति, क्रीडति, निषीदति, स्वपिति, विश्राम्यति, अत्ति, वक्ति च यत्र तदनुकूला. स्थितय आसाद्यन्ते। मानवस्य एष स्वभाव एव गीतिकाव्ये कविना मधुरमालिख्यते। कविप्रतिभाया. कमनीयं संस्पर्शमवाप्य मानवस्य वास्ता दुर्दशाः अपि आनन्दवर्षिण्यो भूत्वा भावुकानां पुर उपतिष्ठन्ते। ता कस्मिन्नपि मनःप्रमोदके रूपे परिणता भवन्त्य परिस्फुरन्ति। दुःखकरमपि मानवस्याख्यानं, विचित्रमेवैतत्, कवित्वया सुखास्पद सञ्जायते। दुःखमपि तत्रत्य सुखत्वेनानुभूयते।

गीतिकाव्येषु नारीप्रणयस्योदात्तता स्वीय मर्मभागमपि समुन्मीलयन्ती दृग्गोचरीभवति। तत्र बाह्यप्रकृतेराभ्यन्तरप्रकृतेश्च प्रभावोऽन्योन्यमनुगृह्णन् प्रफुल्लति। यथा चलचित्रालये चित्राणि दर्शकानां चेतांसि चोरयन्ति तथैवात्रापि गीतिकाव्ये प्राकृतिकानि दृश्यानि रसिकानां स्वान्तानि हरन्ति।

मुक्तकमपि गीतिकाव्यं लौकिक-धार्मिकभेदेन द्विविधतां भजति। लौकिकं हि मुक्तकं लोकविषयकैर्विधानैर्बन्धुर भवति, धार्मिकं विशिष्टानां देवतानां स्तुतिभि. सुन्दरम्। संस्कृतसाहित्ये चिरन्तनात् कालात् द्विविधयोरपि लौकिक-धार्मिकगीतिकाव्ययोः प्रणयन कुर्वन्त कवय. प्राप्यन्ते।

वैदिकसंहितायामपि गीतिकाव्यस्य दिव्यैवाभा भाति। कवयस्तत एव वस्तुतो गीतिकाव्य-विरचनस्य शुभां प्रेरणामलभन्त। संहितासु उष-इन्द्र-विष्णु वरुण-मरुदादीनां देवानां हृदयहारिणी स्तुतीरधीत्य संश्रुत्य वा कवयोऽपि जगद्धरभट्ट-पण्डितराजजगन्नाथो-त्पलदेवप्रभृतयः स्वकीयानि गीतिकाव्यानि च देवस्तुतिपरकाणि प्राणैषु।

महर्षयो हि सत्यस्योपासका आसन्। ते तस्य सत्यस्य गवेषणाय सततमयतन्त यदीयया शक्त्या ब्रह्माण्डस्यापि सकलस्य सर्वेऽपि पदार्थाः स्व-स्वक्रियासु संलग्ना. सन्ति। तदर्थं ते प्रतिपदार्थं ददृशुस्तत्र च प्राविविशु। प्रतिपदार्थस्याभ्यन्तरभागे प्रविष्टत्वात् तेषां, तेषु तेषां तादात्म्यमेव सञ्जातम्। स्वेच्छया स्वीकृत एष तेषामुत्सर्गस्तेषां गिरासु ज्ञानगरिमाणं वर्णनमधुरिमाणञ्च उद्बोभवत्। श्रुतिमन्त्रेषु तत्तद्गुणवैशिष्ट्यस्य दर्शने कारणमिदमेव प्रतिभाति। तेषु मन्त्रेषु एतादृशा अपि भूयांसो मन्त्राः सन्ति यत्र महर्षीणां वृन्द स्वीयान् मनोभिलषितानपि भावास्तीव्रानुभूतिपुरस्सरं वितन्वानमधिगम्यते। त एव मन्त्रा

धार्मिकगीतिका यत्नेनोद्गीता भवन्ति। केचनात्र मन्त्रा उद्ध्रियन्ते। येन वैदिक-गीतिमनोज्ञता दृष्टिपथेऽवतरितुमर्हेत्—

"अहन्नहिं पर्वते शिश्रियाणं त्वष्टास्मै वज्रं स्वर्यं ततक्ष।
वाश्रा इव धेनवः स्यन्दमाना अञ्जः समुद्रमव जग्मुरापः॥"

इत्येष मन्त्र इन्द्रस्तुतिपरकः। अयं मायं गोचरान्निवर्तमानानां स्ववत्समोत्सुकानाम् उच्चै राव विदधतीनां धावन्तीनां सौरभेयीणां 'वाश्रा इव धेनवः' इत्येतया पदपङ्क्त्या मनोहरं दृश्यञ्चोपस्थापयति। धेनुषु अपामुपमितता च कियती प्रिया। ये हि भावा मानवमानसं कमपि शक्तिविशेषं स्तोतुं नुदन्ति ते भावाः सदा हृदये समुत्पद्यन्ते यदा शक्तिः स्वनैजस्विनया मानवमभिभावयति हृदये। वृष्टेस्तानि तानि लोकहितावहानि कार्याणि गहनविस्मयोत्पादनपूर्वकं स्वीयान् महनीयान् लाभान् निदर्शनि मानवस्याग्रे। स (मानवः) ततस्तां शक्तिं वर्षणकारिणीं स्तोतुमुपक्रमते। एष मन्त्रो यस्मादिन्द्रसूक्ताद् गृहीतः तदपि तत्त्वकर्तेर्महिम्नः प्रेरण्या प्रेर्यमाणाद् हृदयान्निर्गतमस्ति। एतादृशा मनोहरा अलङ्कारलसिता हृदयोद्गारा गीतिकाव्यतत्त्वयुताः श्रुतिषु सन्ति सहस्रशः।

औषसानि सूक्तानि नितरामेव गीतिकाव्यस्य ललितं रूपं सृजन्ति। तत्रत्याना सादनस्ता मत्नना नितान्तं मनो हरन्ति। अधिप्रभातमरुणिम्ना मण्डितं सुवर्णचक्राकृति प्राच्यं नभोमण्डलं पर्यवेक्ष्य कस्य न भावुकस्य हृदये कोमला भावनोदेति? कविमनश्चन्द्रविनीचते प्रेम्णा। स तदभिगममनुपमायामुन्मज्जति निमज्जति च उषसोऽवदानद्युतिमनस्य कवि हृदयमुद्बोधयति। उषा सुन्दरीव तस्य प्रतिभाति भावनाभुगमो वेगस्तया वर्धते यत् स तस्यानात्मानं लोपयति। स कदापि उषसं कुमारीं कदापि प्रेयसीं कदापि मातरं मन्यते। भावनानां बलीयसा रंहसा स सानन्दमेवं गायनुपारभते—

"अभ्रातेव पुंस एति प्रतीची गर्तारुगिव सनये धनानाम्।
जायेव पत्य उशती सुवासा उषा हस्रेव नि रिणीते अप्सः॥"

हन्त, कवेर्हृदयमुपमि किं किंयोत्प्रेक्षते। तत् उषःसुन्दरता तामनयाभिव्यङ्क्तुं नानालङ्कारान् विचारं प्रसौति। शुभ्ररूपवती उषा मिस्नातु सुन्दरीव नव नरमि अवतरति कदापि, भ्रातृविहीना भगिनीव कदापि सा दायभागनादिमदा पितरं भूयं निकषेपसरति, भासुरं दुकूलं वसाना प्रेमपाशेन पतिं वशीकर्तुकामा सौन्दर्याभिमानिनी कामिनीव प्रियतमस्य पुरः कदापि गच्छन्तीव विलोक्यते

तदेवं श्रुतिषु प्रभूतानि सूक्तानि गीतिकाव्यस्य ललिततराणि निदर्शनानि विभान्ति। महाकविः कालिदासः स्वकाव्येषु प्रकृतेर्द्विविधस्यापि रूपस्य आभा प्रस्तुवन् प्रेक्ष्यते। तदीये ऋतुसंहारे प्रकृतिश्चैरस्वीयं रूपमनावृत्य रमणीयां श्रियमाकलयन्ती पुरोऽस्माकमुपतिष्ठते तदा मेघदूतेऽलङ्काराणां दीप्त्या दीप्यमाना सुमृदुलभावभङ्गीनां शोभया देदीप्यमाना रमण्याः सुन्दरतां विकिरन्ती दृग्जिरेऽवतरति। कालिदासस्येदं प्रकृतिचित्रणं वैदिकीं शैलीमेवानुसरति।

लौकिकेषु गीतिकाव्येषु मेघदूतं तिलकायते। तत्र कुबेरशापग्रस्तस्य विरहिणो यक्षस्य प्रियतमा-वियोगजनिताया व्यथाया मर्म्मस्पर्शितया कविना चित्रणं कृतम्। मानव प्रकृते बाह्यप्रकृतेश्च परमहृदयहारि सामञ्जस्य समुपस्थापितन्तत्र। बाह्यप्रकृतिर्यादृशीं चरमप्रधानतां तत्र नीता वीक्ष्यते न कुत्राप्यन्यत्र तादृशीं प्रधानतामामादितावलोक्यते। पूर्वमेघे तु आदितोऽन्तं यावत् प्रकृतेरेव कमनीयाकृतिर्दृग्गता जायते। यक्षस्य तत्प्रेयस्याश्च विरहावस्थाया वर्णनं विधाय कविर्मानवमानसस्य मार्मिकचित्रमेव प्रस्तवीति। यदा प्रभृत्येव काव्यमिदं सृष्टमभवत् तदा प्रभृत्येव न विद्म कियन्तः कवयो हि काव्यादेतस्मात् प्रेरणां पूतामवाप्य दूतकाव्यप्रणयने रता बभूवुः कियन्तश्च तस्मात् सुधास्रोतस सुधां निपीय स्वजीवन धन्यममंसत। न ज्ञायते च भाविनि कालेऽपि कियतां कवीनां प्रेरणास्रोतस्त्वेन च तत सिद्धं स्यात्। यथातीतकाले कवयो नेमिदूत-शीलदूत-चन्द्रदूत-पवनदूतप्रभृतीनि काव्यानि, काव्यमिदं विलोक्य, कर्तुं प्रावर्तन्त वर्तमाने च यथा भ्रमरदूत-पद्मदूतप्रभृतिकाव्यानि च विरचयन्तो दृश्यन्ते तथैव भाविन्यपि अनेहसि बहवो हि कवयः प्रयतिष्यन्ते यत् तेषामपि दूतकाव्येषु तदेव सौन्दर्यं तदेव च माधुर्यं संसृतं स्यात् यन्मेघदूते समन्तात् प्रवहमानमस्ति। गीतिकाव्याग्रगण्यस्य मेघदूतस्य रमणीयां सुकोमलां कल्पनां तदनुरूपां भाषां मनोरमां, प्राञ्जलं प्रवाहं स्निग्धं प्रियं पदवृन्दं, प्रकृतेः किञ्च मानवप्रकृतेरुन्मादिनीं सुन्दरतां प्रेक्षन्तां क्षणम्—

अम्भोबिन्दुग्रहणचतुरांश्चातकान् वीक्षमाणा
श्रेणीभूताः परिगणनया निर्दिशन्तो बलाकाः।
त्वामासाद्य स्तनितसमये मानयिष्यन्ति सिद्धाः
सोत्कण्ठानि प्रियसहचरीसम्भ्रमालिङ्गितानि॥

संस्कृतसाहित्ये गीतिकाव्यं यस्यां द्वितीयस्यां सरण्यां प्रगीतमभूत् साऽस्ति शतक-

शैली। शतकशैल्या लभ्यमानेषु गीतिकाव्येषु भर्तृहरेः शतकानि शिरोभूतानि सन्ति। शतकीयानां श्लोकानां जनसाधारणस्य रसनायां सञ्चरणं भर्तृहरेः कृतीनां लोकप्रियतां स्पष्टं प्रथयति।

शतकत्रयस्य नामानीमानि (१) नीतिशतकम्, (२) शृङ्गारशतकम्, (३) वैराग्यशतकम्। एतेषां शतकानामध्ययनेन तल्लेखकस्यावाप्तपूर्णजगदनुभवत्वं विदितं जायते। अनुभूतीनां मार्मिकत्वग्रहणे तद्दृशीं अद्भुतामेव क्षमतां निदर्शनां विलोक्यते। यः कविः संसारमधिवसन् स्वानुभूतिबलेन तस्य (संसारस्य) हृदयमवगम्य कवितायां तस्य (हृदयस्य) रूपं साकारत्वेनालिखितुं क्षमते स एव सफलः कविरिति मनीषिभिः शस्यते। भर्तृहरिरेवंविध एव। स संसारस्य लघुलघुतराणि वस्तूनि अपि सूक्ष्मतया ददर्श व्यवहारांश्च विविधान् सावहितमानसं शिक्षामपि ततः परिजग्राह—एता हि सकलशतकीया विशिष्टतास्तदीयाभी रचनाभिरुच्चैराविर्भाव्यन्ते। शतकत्रयस्य श्लोकस्तबके यन्मनुजो मङ्गलं पश्येत् स सद्गुणान् सञ्चित्य नैजं जीवनमुन्नमयेत्। अत्र तद्वचनात् केचन श्लोका उद्ध्रियन्ते येन हि तत्कवितायाः अनन्यलभ्या विशिष्टता विदिताः स्युः। येषां संसर्गात् न कोऽपि गुणो लब्धो भवितुमर्हति तेषां को लाभः। धन्यास्त एव जना ये तुच्छान् अपि अयोग्यान् अपि गुणवतो विदधति—इत्येतच्चात्र क्रियया विचित्रया चारुतयाभिवदति कविः।

> किं तेन हेमगिरिणा रजताद्रिणा वा
> यत्राश्रितास्तु तरवस्तरवस्त एव।
> मन्यामहे मलयमेव यदाश्रयेण
> कङ्कोलनिम्बकुटजान्यपि चन्दनानि॥

यदपि कार्यं कुर्वीत तत्साधु चिरं विमृश्यैव विदधीत अन्यथा तत्फलेन दुःखमेव भवति। जगति अविमृश्यकारिणो जनान् अनुशयं विन्दमानान् प्रेक्ष्यैव कविरिदमाह—

> "उचितमनुचितं वा कुर्वता कार्यजातं
> परिणतिरवधार्या यत्नतः पण्डितेन।
> अतिरभसकृतानां कर्मणामाविपत्ते-
> र्भवति हृदयदाही शल्यतुल्यो विपाकः॥"

जगति पुष्पितां याच वदतां जनानां संख्यातिविशाला परं दानादिना साहाय्य-कारिणो विरला —इत्येतदनुभूय कथयति कविर्वैदग्ध्यविलसितया गिरा—

" रे रे चातक सावधानमनसा किञ्चित् क्षणं श्रूयता-
मम्भोदा बहवो वसन्ति गगने सर्वेऽपि नैतादृशा ।
केचिद् वृष्टिभिरार्द्रयन्ति वसुधां गर्जन्ति केचिद् वृथा
य यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः ॥"

सत्यमिदं यज्जगति धनं विना न जनः क्वापि मानं लभते काम स विद्यागुण-कुलसनाथः स्यात् । निर्धनत्वात् स सर्वत्र तिरस्क्रियत एव-इत्येतद् विलोक्य भुवि कविर्व्याहरति—

जातिर्यातु रसातलं गुणगणस्तस्याप्यधो गच्छतु
शीलं शैलतटात् पतत्वभिजनः सन्दह्यतां वह्निना ।
शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं
येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥

यत् सुखं शाश्वतं निर्वेदे न तत् क्वापि । विपुलवैभवादिकं किमपि न शान्ति-प्रदम् । शान्तिस्तु वैराग्यादेव लभ्या भवतीति स्फुटं ब्रूते कविः—

मही शय्या रम्या विपुलमुपधानं भुजलता
वितानं चाकाशं व्यजनमनुकूलोऽयमनिलः ।
शरच्चन्द्रो दीपो विरतिवनितासङ्गमुदितः
सुखी शान्तः शेते मुनिरतनुभूतिर्नृप इव ॥

सम्प्रति गीतिकाव्यस्यान्यविधमेव माधुर्यं पाययितुं पुर उपस्थियते । एष कवि-रस्ति 'अमरुकशतकस्य' कर्त्ता 'अमरुकः' । अहो, धन्योऽयं कविर्यं ध्वन्या-लोककारो रसमर्मविद् आनन्दवर्धनाचार्योऽप्येवं प्रशंसति—

"मुक्तकेषु हि प्रबन्धेष्विव रसबन्धाभिनिवेशिनः कवयो दृश्यन्ते । तथा अमरुकस्य कवेर्मुक्तकाः शृङ्गाररसस्यन्दिनः प्रबन्धायमानाः प्रसिद्धा एव"

जातायामस्यामेतादृश्यां रचनायां शतकानि बहून्यतीतानि परं सम्प्रत्यपि तत्र रसिकानां चेतांसि मुदा रमन्ते । तस्या मनोहारितैव तस्या लोकप्रियतायां कारणम् । वस्तुतोऽमरुको रसकविः तत्कृतिः शृङ्गाररसस्यानुपमो निधिः । तस्मर-सतायाः पुरो न कापि सरसता स्थातुं शक्नोति । 'घटे सागरः' इत्येषा लोकोक्ति-रत्र यथार्थतश्चरितार्थीभवति । तस्य काव्यं सजीवप्रेमशृङ्गारनरचित्रशालैव ।

क्वापि तत्र कामिनां कामिनीनाञ्च विभिन्ना मनोवृत्तयश्चित्रिताः सन्ति, क्वापि प्रवासगामिनं रमणं वीक्ष्य विह्वलतां प्रपन्नायाः कान्ताया अधीरं चित्तं चित्रितमस्ति। प्रायेण सर्वेऽपि श्लोकाः सन्ति ध्वनेर्मधुराण्युदाहरणानि। उपरि कथितकथनं प्रमाणीकर्तुमत्र केचन श्लोका लिख्यन्ते। तैः संस्कृतसाहित्ये कीदृशान्युत्तमानि गीतिकाव्यानीत्येतदपि सिद्ध्येत्—

अच्छिन्नं नयनाम्बु बन्धुषु कृतं तापः सखीष्वाहितो
दैन्यं न्यस्तमशेषतः परिजने चिन्ता गुरुभ्योऽर्पिता।
अद्य श्वः किल निर्वृतिं व्रजति सा श्वासैः परं खिद्यते
विस्रब्धो भव विप्रयोगजनितं दुःखं विभक्तं तया॥

एतानि विविधभावसम्पन्नानि चित्राण्यालोक्य सुन्दरं संवादात्मकं चित्रं साम्प्रतं प्रेक्षणीयम्—

बाले नाथ विमुञ्च मानिनि रुषं, रोषान्मया किं कृतं,
खेदोऽस्मासु न मेऽपराध्यति भवान् सर्वेऽपराधा मयि।
तत् किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते
नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते॥

इदं हि चित्रं वीक्षयतां तल्लक्ष्म्या लोकनयनचन्द्रिकायास्तस्या यदीयया सुषमया इन्दीवरस्याभावेऽपि इन्दीवराणां, कुन्दजात्यादीनां सुमनसामभावे कुन्दजात्यादीनाम्, अर्घ्यपात्रस्याभावेऽप्यर्घ्यमानस्य पूर्तिः स्वीयैरङ्गैरेवानवद्यराचरिता। अहो कवेः सृष्टिर्विचित्रा। इन्दीवराणि कमलादीनि तु विधातुः सृष्टेः कमलादिभ्योऽनितरां प्रियाणि लक्ष्मीनि च—

दीर्घा वन्दनमालिका विरचिता दृष्ट्यैव नेन्दीवरैः
पुष्पाणां प्रकरः स्मितेन रचितो नो कुन्दजात्यादिभिः।
दत्तः स्वेदमुचा पयोधरयुगेनार्घ्यो न कुम्भाम्भसा
स्वैरेवावयवैः प्रियस्य विशतस्तन्व्या कृतं मङ्गलम्॥

अमरुः संस्कृतगीतिसाहित्यस्य सुविदितः कविः। एतदीयाः श्लोकाः अलङ्कारग्रन्थेषु प्रायेण दृश्यन्ते। आचार्य आनन्दवर्धनो न केवलमस्य कवेः कवितामुद्धार अपि तु स एतस्य लोकोत्तरप्रतिभामपि श्लाघाञ्चक्रे। एतद्रचितं अमरुशतकं मुक्तकगीतिकाव्यस्य मधुरमुत्कृष्टञ्च निदर्शनम्। शतकमिदं नीतिसम्बन्धिनां श्लोकानां रम्य आकरः। अन्योक्तय एतदीया अनुपमाः। प्रमादस्तत्र पेशलो

माधुर्यं च पावनम्। अलङ्काराणां छटा मनोहारिणी। स्वभावोक्ति उत्प्रेक्षा, उपमा, अर्थान्तरन्यासश्च—इत्येतेऽलङ्कारास्तु वस्तुतः सहृदयानां हृदयं नितान्तं मन्दयन्ति। संस्कृतसाहित्येऽयं विद्वान् भल्लटो महाकविषु गण्यते। निपीयन्तां केचन तत्कवितासुधाशीकरा—

"एतत् तस्य मुखात् कियत् कमलिनीपत्रे कणं वारिणो
यन्मुक्तामणिरित्यमंस्त स जडः शृण्वन् यदस्मादपि।
अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनै
कुत्रोड्डीय गतो ममेत्यनुदिनं निद्राति नान्त शुचा॥"

मन्दानामसधाने ममत्वमिह वियासु सुन्दरेषु शब्देषु सन्निहिता—

"कस्त्वं भो. कथयामि दैवहतकं मां विद्धि शाखोटकं,
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते।
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
न च्छायापि परोपकारकृतये मार्गस्थितस्यापि मे॥"

स्वाभिमतमर्थं कियल्ललितया सरण्यात्र कविर्निदधाति स्म।

आचार्यगोवर्धनः शृङ्गाररसस्य सिद्धकवि कविषु। कविर्जयदेवस्तमेवं श्लाघते—

"शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्द्धनस्पर्धी कोऽपि न विश्रुतः।" कवि-रयमार्यारचनायां लब्धयशाः। आर्यासमं छन्दो नातः प्राक् कोऽपि एतावत्या सुचारुतया लिलेख। आर्यासप्तशत्यामेव कवि शृङ्गारस्य विविधानामव-स्थानां वर्णनं मार्मिकतया विदधानोऽवाप्यते। मानवहृदयस्य प्रवृत्तीनाञ्च महान् वेत्ताऽयं कविरित्येतदस्य कृतेरध्ययनेनाध्येता सम्यग् ज्ञातुमर्हति। आश्चर्यमिदं यदेष आर्यासदृशलघुच्छन्दस्यपि विविधानां विशालानाञ्च भावानां सन्निवेशने सफलतया क्षमो बभूव। आर्यासप्तशतीं हालकविकृतां गाथासप्तशतीं स्वपुरत आदर्शत्वेन निदधाति। श्रूयतां केवलमार्याद्वितयम्—

"तल्पे प्रभुरिव गुरुरिव मनसिजतन्त्रे श्रमे भुजिष्येव।
गेहे श्रीरिव गुरुजनपुरतो मूर्त्तेव सा व्रीडा॥
न सवर्णो न च रूपं न संस्क्रिया कापि नैव सा प्रकृतिः।
बाला त्वद्विरहादपि जातापभ्रंशभाषेव॥"

गीतिकाव्येषु जयदेवस्य गीतगोविन्दकाव्यमग्रगण्यम् अस्ति। अत्र संस्कृत-भाषायाः सौन्दर्यस्य माधुर्यस्य च चरमसीमावलोकिता भवति। कोमलकान्तपदावल्या सरसप्रवाहं मधुरभावाना मधुमयीं धारामवगाहितुमनसो रसिका अत्र स्वेच्छयावगाहन्ता तेषां तृप्तिं मनसः काव्यमिदं विहाय नान्यत् कर्तुं पारयेत्। वृन्दावनकन्दस्य व्रजचन्द्रस्य अगद्बाधाबाधाया राधायाश्च ललिताना लीलाना यादृश ललाम गान श्रुत भवति नान्यत्र क्वापि। भावाना मव्यता, शब्दाना सुन्दरता, अर्थाना सरसता सर्वाभरणभूषितहावलोक्यन्ते। निपीयतामाकण्ठमघरीकृतमधुरसुधा गीतिसुधैतदीया—

"उन्मदमदनमनोरथपथिकवधूजनजनितविलापे।
अलिकुलसङ्कुलकुसुमसमूहनिराकुलबकुलकलापे॥
केलिकलाकुतुकेन च काचिदमु यमुनाजलकूले।
मञ्जुलवञ्जुलकुञ्जगत विचकर्ष करेण दुकूले॥
मनोभवानन्दन चन्दनानिल प्रसीद रे दक्षिण मुञ्च वामताम्।
क्षणं जगत्प्राण विधाय माधव पुरो मम प्राणहरो भविष्यसि॥"

श्रीरूपगोस्वामी च राधाकृष्ण-ललितकेलीना नितरामेव रसमयमवदात-वर्णन स्तुतिश्लोकेषु विदधानो दृग्गोचरीभवति। रचनायामेतदीयाया गीतगोविन्दस्य प्रभावः स्पष्टमेवावलोक्यते। रूपगोस्वामी प्रतिभावान् श्रीराधाकृष्णविमल-भक्तिनिर्मलहृदयवान् महान् वैष्णवः कविर्बभूव। तस्य स्तवमालायाः स्तुतयो गीतिकाव्यस्य मनोऽभिरामं रूपं चित्रयन्ति—

हृदि वल्लवविरलमञ्जरपटलीस्फुरद्गुञ्जलमौक्तिकमुद्राया।
शीतलभूतलनिश्चलतनुरियमवमीदति सम्प्रति निरशाया॥
गोष्ठजनाभयसत्रमहाव्रतदीक्षित भवतो माधव बाला।
कथमर्हति ता हन्त मनाननविषमदशा गुणवृन्दविशाला॥

स्तवरत्नमाला गीतिकाव्यमपि परमसरसं हृदयस्पर्शननिपुणं विपुलं च। स्तोत्र-साहित्यसर्वस्वस्य गीतिकाव्यस्य कवयितारश्च प्रभूता भक्तकवयोऽभ्यजायन्त। अस्म-दीयसंस्कृत-साहित्यस्य विद्वद्वरेण्याणां कविराजानां विशिष्टतायं यत् ते सादृशीं यावदर्हति विद्यायाः निदधुस्तावदर्हमेवाथवा ततोऽपि गुरुतरां भक्तिं भगवति च सरला निहितवन्तः। इदमेव कारणमस्ति यत् तेषां कविताः सन्ति जीवनवर्योऽ-

ज्ञानविनाशनपटीयस्यो भगवच्चरणोन्मुखकारिण्यश्च । इह पूर्वं श्रीशङ्कराचार्यस्य काश्चन स्तुतिपङ्क्तयो निर्दिश्यन्ते—

"भज गोविन्दं भज गोविन्दं भज गोविन्दं मूढमते ।
प्राप्ते सन्निहिते तव मरणे नहि नहि रक्षति डुकृञ्करणे ॥
बालस्तावत् क्रीडासक्तस्तरुणस्तावत् तरुणीरक्तः ।
वृद्धस्तावच्चिन्तामग्नः परे ब्रह्मणि कोऽपि न लग्नः ॥
भज गोविन्दं भज गोविन्दं भज गोविन्दं मूढमते ।

पण्डितराजो जगन्नाथः परमवैष्णव आसीत् । स चञ्चलं चित्तमुपदिशत्येवं मधुरया कयापि सरसया गिरया—

रे चेतः कथयामि ते हितमिदं वृन्दावने चारयन्
वृन्दं कोऽपि गवां नवाम्बुदनिभो बन्धुर्न कार्यस्त्वया ।
सौन्दर्यामृतमुद्गिरद्भिरभितः सम्मोह्य मन्दस्मितै-
रेष त्वां तव वल्लभांश्च विषयानाशु क्षयं नेष्यति ॥

स्तुतिकुसुमाञ्जलिकारेण जगद्धरभट्टेन नितान्तप्रभावशालिना हृदयद्रावणकारिण्या गिरा शङ्करः स्तुतः । तत्स्तुतिं निशम्य कठोरहृदयस्यापि हृदयमार्द्रं भवति । केवलमेक एव श्लोकः श्रूयताम्—

स्वैरेव यद्यपि गतोऽहमधः कुकृत्यै-
स्तत्रापि नाथ तव नास्म्यवलेपपात्रम् ।
हस्तः पशुं पतति यः स्वयमन्धकूपे
नोपेक्षते तमपि कारुणिको हि लोकः ॥

गीतिकाव्येषु रागात्मकवृत्तीनामुन्मीलनात् तत्र जीवनस्य रञ्जनकारीणि चित्राणि एव सर्वत्र चारूणि भूत्वा चित्रितानि सन्ति । तेषु भावानामसीमता, कोमलता, निरीक्षणस्य नवीनता, कल्पनायाश्च चारुतानुपमैव प्रतिपदं सञ्चरते । यदि कोकिलश्च गीतिकाव्यकुञ्जे स्वतन्त्रतया स्वेन हसितसुधामाधुर्येण मधुरेण स्वरेण सर्वा अपि आशाः प्रपूरयन् श्रुतो भवति । धन्या संस्कृतसाहित्य-गीति सरसी ।



## कला-सीमा काव्यम्

'का नाम कला' इत्यत्र प्रतीच्य मर्मज्ञो हेगले वदति—"कला वस्तुनो ह्यान्तरिकी अभिव्यक्तिरस्ति"। शब्दान्तरेषु इदं वक्तुं शक्यं यद् वस्तुनो हि स्वकीया आकृतिर्यया सुघटिता भूत्वा प्रत्यक्षीभवति सा सुघटितयथार्थवैशिष्ट्याभिव्यञ्जनकारिणी क्षमता 'कला' इत्यनेन नाम्ना प्रोक्ता भवति। वस्तुनो मेन इ-तिर्बिम्बगतो धर्मः किंवा तद्गतः भावो वा वैशिष्ट्यं भवति। साहित्यिकानां भाषायां वस्तुन इदं वस्तुत्वमेव सौन्दर्यमित्यभिधीयते। जगति सर्वेऽपि पदार्थाः स्वसौन्दर्यवशादेव ग्राह्या भवन्ति। कलाया अयं सौन्दर्यस्योन्मीलनमस्ति। मानवस्य रागात्मिका बुद्धिर्यद्वशाच्च रमते सन्तुष्यति प्रमोदते आनन्दमनुभवति तदेव बुद्धेः सुरम्यं विश्रामस्थलं सौन्दर्यमिति गीयते। कला इदमेव सौन्दर्यमभिव्यञ्जयन्ती व्यक्ततां नयति। कलायाः स्वभाव एवास्त्यभिव्यक्तिस्वरूपता। कलाः सन्ति यद्यपि बहुविधाः परं तत्र पञ्च कलाः ललितकलाः इत्येतया संज्ञया सन्ति प्रसिद्धाः। ताः सन्तीमाः —

( १ ) स्थापत्यकला, ( २ ) मूर्तिकला, ( ३ ) चित्रकला, ( ४ ) सङ्गीतकला, ( ५ ) काव्यकला।

कलाकारः कलां सहकृत्य सर्वविधान् अपि मूर्तान् अमूर्तान् वा पदार्थान् कमनीयतमे रूपे परिवर्तयति। स एतस्माद्धेतोरेव चातुर्येण मर्त्येषु द्वयं मिथश्च निधाय समवतारयति। तत् स्वकीयं स्थूलं रूपमपहायैव किमपि परमाश्चर्यकरमानन्दावहं कमनीयतमं रूपं नवीनं परिगृह्य विलोकयितॄणां सहृदयानां पुरस्तिष्ठापयति। दृश्यते लोके यत् सुवर्णकार-रथकार-कुम्भकारादयः सुवर्ण-काष्ठ-मृत्तिकादिवस्तुकलापं परमसुन्दरेषु स्वान्तानन्दकरेषु कुण्डलामन्त्रिका कटकादिषु परिणमयन्ति। येनोपादानेन कठिनता-विवर्णता-कठोरतादिदोषमाप्यपि कान्तिस्वर-भाण्डादिका पदार्थाः सुन्दरं मनोऽभिरामं सुखदं कौतूहलास्पदं रूपं परिगृह्णन्ति तदुपादानमेव कला भवति। शिलाखण्डान् स्तूपान् मन्दिराणि वा दुर्गराजप्रासादादिषु मनोरमेषु नानाकल्पनाकलितेषु परिणमयति सा कला 'स्थापत्यकला' इति कथ्यते। येन साधनेन हि पाषाण-काष्ठ-मृदादिकाः पदार्थाः विचित्रविचित्रतर-

राम कृष्ण प्रताप गान्धि जवाहरलालादिकाना मूर्तिषु परिवर्तन्ते तत् साधनमेव 'मूर्तिकला' इति निगद्यत, येन साधनेन सीता दमयन्ती विवेकानन्द रवीन्द्रादिकान् जनान्, गिरि सरित्काननादिकानि वस्तूनि वा आलेख्यर्पितानि पश्यामो वय तदेव साधनविलक्षण 'चित्रकला' इति कलाविदो वदन्ति। यथा चित्रकार साधारण दलादिकमपि दमयन्त्यादिषु घटयति तथैव सगीतकारोऽपि साधारणान् एव शब्दान् स्वरान् वा अतिमधुरान् सरसान् आनन्दविधायकाश्च विधाय सचे तसा पुर सन्निदधाति। तान् निशम्य मानवानां तु कथैव का मृगादिका पश वोऽपि भीषणविषधरा भुजङ्गा अपि नितरामानन्द विन्दन्त प्राप्यन्ते। तेऽपि पुन पुन रानन्द शिरो धुनाना सुखसमुद्रे निमज्जन्तो लीयमाना विलायमानाश्च विलोक्यन्ते। सगीतकारा यया कलया ससार प्रमोदयन्ति सैव 'सगीतकले'ति कीर्त्यते। एवमेव कविरपि या शरण प्रपद्य शब्दार्थौ हि सुधामयौ कृत्वावतार यितु प्रभवति, कलाकलितौ भूत्वा च शब्दार्थौ तौ ससारे विचित्रविचित्रा घटना घटयितु समर्थौ बोभूत। कवेर्वाणीं तां निशम्य शूरा समराङ्गणे प्राणान् अपि सहर्षं जुह्वति, कृपणा अपि ता श्रुत्वा दातारो जायन्ते, जना राष्ट्र रक्षितु, स्व धर्मं पातु बद्धपरिकरा जायन्ते। किं बहुना ससारे असम्भाव्या अपि घटना सम्भाव्यास्तदा भवन्ति यदा कवि स्वकीया कवित्वमयीं गिरां प्रयुनक्ति। तद्गिरया जनेषु अन्याय निरोधनाय अपार बल समुत्पद्यते, सरसैव करुणाया सरित् तथा प्रवहमाना भवति यत सा तान् अपि जनान् परिप्लावयति य कदापि एकमपि बाष्पबिन्दु मुञ्चन्तो न दृष्टा पुरा बभूवु, सयमिना कृतब्रह्मचर्याभिमानानामपि चेतासि विकृतानि भवन्ति। एतद्विधा विचित्रा दशा नयन्तीं कविगिरा प्राप्यैव तामभिदृश्य सुरय एव स्तुवन्ति—

अपारे काव्यससारे कविरेव प्रजापति।
यथास्मै रोचते विश्व तथेद परिवर्तते॥

यया कववाणी एतद्विध लोकोत्तर बलमश्नुते सैव 'काव्यकला' इति कथ्यत बुधै।

एतासु पञ्चविधास्वपि ललितासु कलासु काव्यकला सा कलास्ति या चत-स्रोऽपि स्वतरा कला सर्वथा जयति। तस्मात् काव्यकला कलासूत्तमा कला। सा कलानां सम्राज्ञी। सा स्वगुणै स्वविशिष्टताभि स्वोत्कर्षैश्च विजयिभि सर्वा कला अधरीकृत्य अतिजृम्भते। सा सर्वासामपि कलानां शिरासि नमयन्ती श्रेष्ठ-

मुच्चततममासनमधिकरोति । अत्रेदमिदानीं विमर्शनीयत्वेनापतितमास्ते यत् काव्य-कलाया ते के गुणा किंवा कारणा' विशिष्टता विभान्ति यद्वशात् सा सकला अपि कला' अतिशेते । कलारहस्यविदा विपश्चितामभिधानमिदं यत् कलासु सैव कला श्रेष्ठा कला गण्यते या मूर्ताधारत्व कदापि त्यक्तुं शक्नोति । स्थापत्यमूर्ति-चित्रकला एतद्वैतवाधारार्थेभ्यो दृश्यन्ते, सङ्गीतकलापि मादृनिमा परिवीक्ष्यते । काव्यकलैव एतादृशी समवाता जायते सर्वेभ्योऽपि तन्त्रेभ्यो या स्वतन्त्रा भवन्ती कलाजनानि मनुद्गमायते सा मन्तोऽपि महत्तर तत् कार्यं साधयति, न तदन्या कला हि साधयितुमीष्टे । तदर्थं प्रतिमाऽपेक्ष्यते, शास्त्राग्यभिलष्यन्ते, सत्कवीना सन्निकर्ष आकाङ्क्ष्यते, सत्कविकविनानामनुशीलनमपेक्ष्यते । सा महद् ज्ञानं विशालमनुभव व्यापकञ्च पटत्व कामयते । एतेषा सर्वेषामप्यपेक्षा अन्यस्या कलाया कृते न भवति। एतद्धेतोरपि काव्यकला सर्वाभ्योऽपि कलाभ्य श्रेष्ठा किञ्च ज्येष्ठा । स्थपति-मूर्तिकार चित्रकारादय स्व स्व कलात्मक कौशल प्रदर्शयितुमभिमत पर्याप्त क्षेत्रमधिगच्छन्ति परं कविनटस्तु स नट आस्ते य' स्वीयकाव्यकलाकौशलस्य प्रतिष्ठापनाय तावन्तमप्याधार नापेक्षते यावान् आधारो नटेनातिसूक्ष्मतन्तूपरि चलनार्थं गृह्यते । अन्ये कलाकारास्तु बाह्यमेव सौन्दर्यं परिलक्षयितुं क्षमा' सञ्जायन्ते परं काव्यकलाकारास्तु आभ्यन्तरमपि सौन्दर्यं विना रङ्ग-तूलिका-करण्डिकादिसाधनं प्रसविष्णवो भवन्ति । सा यथा सुन्दरतया सर्वान् अपि लोकान्, समग्रान् अपि कालान्, सर्वत्रापि अविद्यमानान् पदार्थान् अपि अवतारयति न तथा सुन्दरतया अन्या कलास्तत् सकलमपि वस्तुजातमवतारयितुमलं जायन्ते । विधातु सृष्टया यत् क्वापि न विलोक्यते काव्यकलेयं तदपि प्रादुर्भावयति । या नवरमणीयतात्र दृश्यते सान्यस्या कलाया क्व । एवंविधा अनन्यलब्धविशिष्टतास्तत्रालोक्यैव आचार्यमम्मट आचष्टे—

"नियतिकृतनियमरहिता ह्लादैकमयीमनन्यपरतन्त्राम् ।
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥"

'कला कलाया' कृते' इत्येष उद्घोषो हि येषां वर्तते ति तेषा कवीनां काव्यानि पण्डित्यप्रधानानि संलक्ष्यन्ते । तानि विविधालङ्कारशब्दचमत्कारादिप्रसाधनै-स्तया प्रसाधितानि सुगुम्फितानि सुश्लिष्टानि च जायन्ते यत् तत्रत्यं भावात्मकं सौन्दर्यं तत्रत्याभ्यन्तरी सुषमा वा बाह्यया श्रीविपुता आव्रियते । परं विद्वन्म-चेतसां चेतःसु सावरणमेव विस्मयं जनयन्ती अमितां प्रसन्नतामुत्पादयति ।

केषाञ्चन जनानामभिधानमेतद् यदेतादृशानां काव्यानां सकाशात् कोऽपि लाभः सामाजिके जीवने नास्ति, ते वस्तुतस्तु नास्तित्वमुद्दीरयन्ति। यथा सामाजिक जीवनं स्वसत्तायै स्वस्वस्थतायै च धर्मार्थकामान् अपेक्षते तथैव तद् रञ्जयितुमा र्जन प्रीणयितुं तोषयितुं च नैव चेत, अपनेतुं स्वमनीषाया कण्डूं काव्य शास्त्र विनोदमपि नियततया वाञ्छति। यस्य हि समाजस्य प्रवृत्तिरेवंविधे विनोदे न दृश्यते वस्तुतस्तस्यापरिष्कृतरुचिशील्स्य समाजस्य सद्भावो न सतांसम्प्रति स्वीकार्यः।

'कला मानवजीवनोत्थानाय" इत्येतद्धि येषां मन्तव्यं तेषां कवीनां काव्येषु न शब्दचित्रता दृष्टा भवति न तानि काव्यानि तदीयानि अलङ्कारादि भार पुष्कलं वहन्ति, न तत्र तद्वैचित्र्यमेव चकास्ति येन हृदयचक्षु क्षण मात्रयत्निमीलितं सञ्जायते। तानि काव्यानि तु सरलतयैव मञ्जुलतयैव च मानवस्य पुरो जीवनस्य स्वरूपं प्रस्तुवन्ति। मानवीयजीवनोद्देश्यस्य जीवना त्थानोपायानां च प्रदर्शनं तेषामिष्टं भवति न च पैदुष्यस्य सम्प्रतिष्ठापनं तेषां प्रियम्। तानि तथा प्रयतन्ते येन मानवस्याग्रे मानवतायाः गतिविधी सम्यक् समुपस्थिते सञ्जायेयाताम्, मानवो हि तद्द्वारेण स्वकीयां दुर्बलतामभिजानीयात् ताश्च दूरीकर्तुं स प्रयतेत आत्मनि च सदाशयतां सञ्चारयेत्। स्वपदं च स द्रागेव सदाचारपथे निदधीत, एतानि च सर्वाणि कार्याणि कर्तुं सदैव तानि प्रयतमाना न्यव प्राप्यन्ते।

काव्यकलाया अभिव्यक्तयो भवन्ति नानानना। कदापि ता नीतिवादिता परिपुष्णन्ति तु कदापि उपयोगितावादम्, कदापि च ता शुद्धं कलात्मकमेव भाव मुपासते। एतादृश्यां स्थित्यां प्रश्नोऽयमुत्तिष्ठति यत् किं सौन्दर्यमपि एतेषामेवो द्देश्यानां सकने तृप्त्यर्थं बाध्यमानं भवति। अत्रेदं समाधानं विधीयते विद्वद्भि र्गोचरं सौन्दर्यं स्वत एव आश्रितवस्तु न, अभिव्यक्त्यर्थं तद् आधारमपेक्षते। तस्माद् विदितं भवति यत् कामं काव्यं केनाप्युद्देश्येन भवल्लिखितं तत्र सौन्दर्यं नियततयाभिव्यक्तं स्यात् तस्य स्वतो निरपेक्षत्वात्। सौन्दर्यस्योद्भवः कस्मात् तत्रायते, उद्भूयमानस्य च तस्योपलब्धिः कस्यां धरायामभीष्टा भवति इत्यत्र यदि विमृश्यते तदा ज्ञायते यत् सौन्दर्यं कल्पनाप्रसूतमस्ति। कवेः रागात्मिका वृत्तिः कल्पनामानन्दस्वरतां नयति। एष व्यापारो रसात्मकताम्प्रति कारणं सम्पा द्यते। एतेन काव्यकलायाः सौन्दर्यानुगतत्वं निष्पद्यते। काव्येषु मानवमनोवृत्ते

रागपक्ष एव अभिव्यज्यते । काव्यानुभूतिस्तु रागपक्षाश्रया । तस्मात् तद्धरा स रागपक्ष एव । काव्य वस्तुनाऽभिव्यक्त्यनुभूत्योः प्रक्रियात्वेन मतम् । उभयोरप्येतयोः प्रभावेण कवि पाठकयोर्मध्ये एकत्वस्य प्रतिष्ठापना सञ्जायते । इदमेकत्वमेव 'रसात्मकता' भवति । यावत् काव्य सचेतनमनसां कोटिं न प्रापयितु शक्नोति तावद् तत्काव्य वस्तुत काव्यत्व नार्हति । रसात्मकबोधाय काव्य वा साहित्ये सौन्दर्यतत्त्वस्यास्तित्वमभिलष्यते । तत्रैव सात्त्विकभावभूमे अधिष्ठितत्वात् । तस्माद् काव्य काव्य न तत् शब्दाडम्बर एव । काव्यकलामार्गस्य दुर्गमत्वादत्र कविश्चपदलाभ पश्यन्ति ।

सकलस्यापि साहित्यस्य लोकस्योद्गमस्थ कवावेव स्थितस्तस्मात् कवित्व पौराणिकत्वात् दार्शनिकत्वाच्च गरीय । कवि स्वकाव्यकलया तस्यैव तत्त्वस्याभिव्यक्तिं कुरुते यस्य पौराणिका पुराणेन, दार्शनिका दर्शनेन कुर्वन्ति परमभिव्यक्ते पद्धतिस्तेषां नैकविधा । कल्पनाकृतया पद्धत्या सत्यस्योपस्थापन तथा न भवति यथा पौराणिकादिका स्वाभिमतपद्धत्या विदधति । स तु सौन्दर्यावृत विधाय सत्य प्रकाशयति न कदापि तस्य सौन्दर्यशून्यता तदभिमता । सौन्दर्यपरिविष्टत्वमेव तस्य न प्रियमपि तु तस्य प्रकाशन हि परोक्षतया अपेक्षितमपि स इच्छति । अतएव कवेर्वाणीं तद्गतञ्च माधुर्यं निपीय यावत्समानन्द रसिका विन्दन्ति न तादृशमन्ये । सत्यस्य प्रकाशन न कठिन न च परुषवच प्रयोगोऽपि कठिन कठिन तु अस्ति सत्यस्य सुन्दरतया मधुरतया विलक्षणतया चाभिव्यञ्जनम् । अत एव कवि-कर्म परमगहनम् । कवे काव्य सत्य शिव सुन्दरञ्च भवद् इह भवतीत्येतदेव वैशिष्ट्य काव्य वाङ्मये मूर्धन्यस्थानाधिष्ठित विदधाति । परोक्षतया कथनमित्येतस्याभिप्रायोऽस्य यत् काव्य स्वाभिमत वच प्रकाशयितु न अभिधा वृत्तिमवलम्बते न च लक्षणा न च मीमांसकाना प्रिया तात्पर्यमेव । अपि तु व्यञ्जना वृत्तिमाश्रयति । व्यञ्जनया काव्यमनन्यलभ्या प्रकर्षश्रियमश्नुते । तल्लोकोत्तरमेव सञ्जायते । काव्यस्य लोकोत्तरत्वादेव आचार्य आनन्दवर्द्धनस्तस्य व्याख्यामेवमाह—

"प्रतीयमान पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
यत् तत् प्रसिद्धावयवातिरिक्त विभाति लावण्यमिवाङ्गनासु ॥"

विश्वस्य मङ्गल सम्पादयितु कवि प्रयतते । तस्मात् एतादृशस्य सर्गस्यानु

सरण स्वीकरण वा तस्यापेक्षित जायते येन सर्वेऽपि प्रयातु प्रभवेयु । कवेरुद्भ्रिभरत्व प्रेक्ष्यैव केनाप्युक्तम्—

"न स शब्दो न तद् वाच्य न स न्यायो न सा कला ।
जायते यन्न काव्याङ्गमहो भारो महान् कवे ॥"

यामिमा हि व्यञ्जनामालम्ब्य कवे काव्यकला स्वकीय स्थान सर्वेभ्योऽपि पृथक् करोति, किञ्च यया सा सर्वा अपि सकला कला शास्त्राणि जयति च तस्या स्वरूपमाचार्यमम्मटेन इत्थ दर्शितम्—

यस्य प्रतीतिमाधातु लक्षणा समुपास्यते ।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ॥
नाभिधा समयाभावात् हेत्वभावान्न लक्षणा ।
लक्ष्य न मुख्य नाप्यत्र बाधो योग फलेन नो ॥
न प्रयोजनमेतस्मिन् न च शब्द स्खलद्गति ।

व्यञ्जनामधिकृत्याधुनिकाना कथनमिद यद् व्यञ्जना सहजस्वतन्त्राध्यात्मिक क्रियास्ति तदाधारो मूलत कल्पना भवति । तस्या सफलतैव सौन्दर्यमस्ति । अभिव्यञ्जनावादस्य सार क्रोचे मतेनायम्—

( १ ) कलाविषयक ज्ञान प्रतिभाज्ञानमस्ति ।
( २ ) सौन्दर्यमभिव्यञ्जनायामाकृत्याञ्च भवति वस्तुनि न ।
( ३ ) प्रातिभज्ञानस्यैवाभिव्यञ्जना भवति ।
( ४ ) व्यञ्जना स्वतन्त्रमानसिकप्रक्रियास्ति तदाधारो मूलत कल्पनास्ति ।
( ५ ) व्यञ्जनाया अविभाज्यरूपत्वात् काव्येऽलङ्कारादीनां न पृथक् महत्त्वम् ।

न काव्यकला पानकरसार्थं शर्करोशीरैलाक्षीरवातादिप्रभृतिसाधनानि मनागप्यपेक्षते सा एवविधा सामग्रीमन्तरेणैवाधरीकृतामृतमाधुर्यमद्भुतमेव जिताखिललौकिकपानकरस पानकरस जगत कृते प्रस्तवीति । अहो धन्यास्ते कवयो ये सुधामपि वसुधायै सुलभां कृतवन्त । निपीयताम्—

मृगमदसौरभरभसवशवदनवदलमालतमाले ।
युवजनहृदयविदारणमनसिजनखरुचिकिंशुकजाले ॥
पीनपयोधरभारभरेण हरिं परिरभ्य सरागम् ।
गोपवधूरनुगायति काचिदुदञ्चितपञ्चमरागम् ॥

कापि कपोलतले मिलिता लपितुं किमपि श्रुतिमूले।
चारु चुचुम्ब नितम्बवती दयितं पुलकैरनुकूले॥
केलिकलाकुतुकेन च काचिदमुं यमुनाजलकूले।
मञ्जुलवञ्जुलकुञ्जगतं विचकर्ष करेण दुकूले॥

चेत् कविर्जगद् सर्वैर्विषयिभिरिति कामयते तदा स तद्विधामेव गीतिं सृष्ट्वा तत् तथाविधमेव कर्तुं यतते—

धावन्ते प्रतिवासरं दिशि दिशि प्रत्याशया सम्पदां
दृष्ट्वा कालवशेन हन्त पलितं कस्यापि दैवद्रुमम्।
श्रावं श्रावमवार्यपहसितं सर्वत्र सम्प्रोषिता
जीवन्ति परमार्थशून्यहृदयास्तृष्णा मनोमोदकैः॥
याच्ञाशून्यमयत्नलभ्यमशनं वायुः कृतो वेधसा
व्यालानां पशवस्तृणाङ्कुरभुजः सुप्ताः स्थलीशायिनः।
संसारार्णवलङ्घनक्षमधियां वृत्तिः कृता सा नृणां
यामन्वेषयतां प्रयान्ति सततं सर्वे समाप्तिं गुणाः॥

कदापि कविर्जनं शोके तु कदापि उत्साहे तु कदापि शृङ्गारे निमज्जयति। सकलं हि जगच्छोके निपातयन्तं तम् अवलोकयन्तु—

एषा पदस्खलनभीतिवशात् करं मे
यारूढवत्यसि शिलाशकलं विवाहे।
सा मां विहाय कथमद्य विलासिनी द्या-
मारोहतीति हृदयं शतधा प्रयाति॥

सम्प्रति उत्साहं जनयन्तं तं पश्यन्तु—

चत्वारो वयमृत्विजः स भगवान् कर्मोपदेष्टा हरिः
संग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता।
कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्योपनिमन्त्रणाय रसति स्फीतं यशो-दुन्दुभिः॥

इदानीं शृङ्गारसुधां पाययन्तं तं वीक्षन्ताम्—

पानायाधरतोऽमृतं वमतयेऽप्यस्याः स्तनक्ष्माधरो-
ऽधस्तात्सज्जघनान्तकन्दरधरः सत्पाय चञ्चूर्गमः।
जप्यो मन्त्रवरो मनोहरकथा ध्यानाय वक्त्राम्बुजं
सेयं देहतपस्थले सति कथं सन्तो वनान्तं गताः॥

यदि कविराश्चर्यनिमग्नस्तदा कथमिदं सम्भव यत् सर्वेऽपि नाश्चर्यनिमग्ना स्यु —

दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत—
टङ्कारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिम ।
द्राक् पर्यस्तकपालसम्पुटमिलद्ब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति ॥

अधुना कविर्हसति भवन्तोऽपि हसन्तु—

(क) गणयति गगने गणकश्चन्द्रेण समागमं विशाखायाः ।
विविधभुजङ्गक्रीडासक्ता गृहिणी न जानाति ॥

(ख) आपाण्डुरा शिरसिजास्त्रिवली कपोले, दन्तावली विगलिता न च मे विषाद । एणीदृशो युवतय पथि मा विलोक्य, तातेतिभाषणपरा खलु वज्रपात ।

भयाद् भीत हि भूत्वा सर्वं कम्पतेतरां, दृश्यताम्—

चिञ्चत्कोपकलाकलापकल्पाहुङ्कारनिर्भिद्भुवो-
र्विक्षेपादवरोदसीं रघुपतिर्लङ्कापते पत्तनम् ।
मन्दरस्फोट स्फुटत्कोट्टु विघटद्दारु स्फुरद्गुग्गुलु
मोत्क्षोदवदपि नि श्वसत्-फणि रणत्किङ्किभ्रमद्द्वीपि च ॥

काव्यकलायामद्भुतमेव सामर्थ्यं श्राव्यते सा यदपि दर्शयितुमसहने नद्धि- नैव विलम्बं लोचनयो पुर उपस्थापयति । विलोक्यतां जुगुप्सोत्पादनपरं घृणास्पदं दृश्यम्—

उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
आत्तस्नाय्वन्त्रनेत्रः प्रकटितदशन प्रेतरङ्क करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥

क्रोधं साकारं भवन्तं काव्यकलायामीक्षन्ताम्—

यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता ।
तद् द्यूतारणिसम्भृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत् कुरुवने यौधिष्ठिरं जृम्भते ॥

काम भवन्तः कस्मिंश्चिच्छीतागारे स्थिताः स्यु परं यदा निदाघमध्याह्नो-

मुग्ध स्निग्ध मधुरमुरलीमाधुरीधीरनादै
कार कार करणविवश गोकुलव्याकुलत्वम् ।
श्याम काम युवजनमनोमोहन मोहनाङ्ग
चित्ते नित्य निवसतु महो वल्लवीवल्लभ न ॥
स्वैरेव यद्यपि गतोऽहमध कुकृत्यै
स्तत्रापि नाथ तव नास्त्यवलेपपात्रम् ।
दृष्ट्वा पशु पतति य स्वयमन्धकूपे
नोपेक्षते तमपि कारुणिको हि लोक ॥

वस्तुत काव्यकलास्पर्शमणि (पारसमणि) स्त सस्पृश्य अयोऽपि चामीकरतां याति अगन्धोऽपि पदार्थ सौरभयुतो भवति । तत्प्रभावात् विषमपि अमृतायते, अमृतमपि विषायते । सर्वमपि अनिर्वचनीयतां प्रपद्यते । एतादृशी विलक्षणता एतादृशी विस्मयकृत्कर्मनिपुणता नान्यस्यां कलायामीक्ष्यते अत सम्य— कलासीमा काव्यम् ।



## अभिधादेरपि व्यञ्जना गरीयसी

शब्दो हि महाशक्तिशाली। अर्थस्तस्मै शक्तिं प्रयच्छति। विपुलविपुलतरश-क्त्यर्थं स सदा तमपेक्षते। पर शब्द माहात्म्यमन्तरेण अर्थो न नैज गौरव प्रकटीकर्तुमर्हति। सोऽपि शब्दमपेक्षते। उभावप्यन्योन्याश्रितौ। अत एवोक्तमपि "शब्दार्थाविव सत्कवि" इति। अर्थं विना शब्दो न स्यात् क्षम, शब्द विना र्थोऽपि। द्वावपि परस्परं सम्पृक्तौ स्तस्तस्मादेव नु हेतोर्महाकवि कालिदासो भगवन्त शङ्कर प्रणमन्नाह—"वागर्थाविव सम्पृक्तावि"ति। शब्दे स्थितायाः शक्तेः प्रयोग विद्वान् एव कर्तुं क्षमते। प्रतिभावान् विपश्चिन्नैव लेख भाषण कवितादिकं वा प्रति यावन्तमपि यादृशमपि गरिमाण प्रस्तुतमभिलषते स तावन्तमेव तादृशमेव त शब्दे प्रयोक्तु क्षम। न साधारणो जन शब्दनिष्ठा शक्ति जानाति, 'कन प्रकारेण शब्दस्थितया महत्या शक्तेः प्रयोग कर्त्तव्य' इत्येतदपि स न वेत्ति। तस्मात् तदीय वाक्य न लोक प्रीणाति न तमावर्जयितु स स्वयमपि क्षमते। कविर्मनीषी शब्दमुपास्ते स शब्दज्ञो भवति, शब्दस्य शक्तिमपि सम्यगवगच्छति। एतस्मात् कारणात् समग्रमपि जगत् तद्रचना तद्-वक्तृता तद्वार्गी च सतत श्रोतुमुत्सुकता दर्शयति। यथा कस्यचन सुयं यस्य शक्तिमत शूरस्य शरा वेध्यस्य वस्तुनो वा ऽभ्यन्तरमागे प्रविश्य तदायमन्यद्व मर्म भित्वा बहिर्निर्गत्य चान्यानपि स्वसम्मुखापतितान् पदार्थान् भिनत्ति तथैव कुशलवक्तृप्रयुक्तः शब्दोऽपि न केवल स्व विश्रुतमर्थं प्रकटीकृत्य विरमत्यपि तु स स्थल-समय श्रातृविशेषाद्य नुरोधवशादनेकान् विविधानर्थानभिव्यनक्ति। शब्द प्रत्यक्षमेवार्थं न निदधात्यपि तु स परोक्षमपि अर्थमधिकरोति। यो वक्ता परोक्षार्थतत्पर शब्द प्रयोक्तु समर्थो यश्च शब्द परोक्षार्थोपस्थापननिष्ठ स वक्ता स च शब्दो विदुषा समवाय परा प्रतिष्ठामश्नुते। विचारवन्तो विज्ञा शब्दाभ्यन्तरे राजमाना क्षमता सम्यक् चिरश्चानुभूय निश्चयमिममगुरुर्यद् यथा पृथिव्यस्तेजोवाय्वादिपदार्था असमन्यनन्त बल विपुलाश्च गुणान् सन्निदधति तथैव शब्दाऽपि सवव्यगाधशक्तिभागनन्तगुणशाली च। सद्गुण विद्या-कला सम्पन्न-सुसंस्कार नियत्यादिमाहात्म्यमवाप्य यथा लोक पुमान् अद्भुत सत्त्व तेजो बल प्रभावश्च प्रदर्शयति तथैव शब्दोऽपि प्रतिभावन्न

शास्त्र पारदृश्वान लोक व्यवहाराभिज्ञ स्वाध्यायपर जनमवाप्याद्भुताद्भुता र्थान् प्रकाशयति । शब्दस्य विलक्षणतामिमा साहित्यिका सुधीधौरेया धीरतया गम्भीरतया च चिन्तयाञ्चक्रु । ततश्च ते वैयाकरणा नैयायिका मीमांसकाश्च शब्दाभ्यन्तरे यां या शक्तिमनुसन्दधुस्ता ता शक्तिमेव न शब्दो जुषतेऽपि तु स ततोऽपि परां शक्तिं निदधातीत्येत् निश्चयमानमन् । ते वैयाकरणाद्यविदा शब्दं साधु परीक्ष्यान्तत इद निश्चिक्युर्यद् वैयाकरणा शब्दे यामभिधां, नैयायिकास्तत्र यां लक्षणा, मीमांसकाश्च तत्र यां तात्पर्याख्या शक्तिं पश्यन्ति ता सर्वास्तिभ्योऽपि शक्य शब्दाभ्यन्तरशोभमानया सहृदयसवेद्यया शक्त्या सर्वथातिशीयन्ते । इमा हि अभिधादिविजयिनीं शक्तिं ते 'व्यञ्जना' इत्यतेन नाम्ना व्याजहु । दृढतापूर्वक ते प्राहु —

तत्र व्यापारो व्यञ्जनात्मक ।<br>
यस्य प्रतीतिमाधातु लक्षणा समुपास्यते ।<br>
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ॥<br>
नाभिधा समयाभावाद्धेत्वभावान्न लक्षणा ।<br>
लक्ष्य न मुख्य नाप्यत्र बाधो योग फलेन नो ॥<br>
न प्रयोजनमेतस्मिन् न च शब्द स्खलद्गति ॥ इति ।

व्यञ्जनाया लक्षणमिद प्रतिपाद्य ते तां व्याचक्षाणा ब्रुवन्ति 'व्यञ्जना प्रति प द्योऽर्थो व्यङ्ग्यार्थ' इति कथ्यते । अभिधाप्रतिपाद्याद् वाच्यादर्थाच्छब्दस्य मुख्यार्थ एव वेद्यते यथा 'गङ्गा' इत्येतस्य शब्दस्य मुख्योऽर्थो जल-प्रवाहविशेष इत्येष वर्तते । एष अर्थोऽभिधात्वेष्यो भवति पर 'गङ्गायां घोष' इत्यादौ यदा गङ्गादिशब्द प्रयुज्यते तदा स गङ्गाशब्दस्तटरूप लक्ष्यार्थं लक्षयति । तटरूप लक्ष्यार्थस्य ज्ञापन लक्षणा करोति । पर 'गङ्गायां घोष' इत्यादौ प्रयुक्ताद् 'गङ्गा' शब्दात् शीतत्वपावनत्वादिकार्थो य प्रतीयते सोऽर्थ एव व्यङ्ग्यार्थ इत्युच्यते । इम व्यङ्ग्यार्थमभिव्यनक्ति व्यञ्जना । मीमांसकाभिमता तात्पर्याख्या वृत्तिर्न व्यञ्जनारूपे कार्यं कर्ते तस्यास्तु कार्यं ततो भिन्नमेव । तदीय कार्यं हि अर्थस्यान्विततार्करण किंवा अन्वितस्यैवार्थस्याभिधानमास्ते । तदेव व्यङ्ग्यार्थो वाच्यलक्ष्यतात्पर्यार्थेभ्योऽर्थेभ्यो नितान्त भिन्न । चेद् व्यङ्ग्यार्थस्य वाच्यादिष्व न्तर्भाव कृत स्यात् तदा मूलक्षयकारिण्यनवस्थाऽऽपतेत् ।

अभिधा केवल मुख्यऽर्थे प्रवर्तते, लक्षणा तत्र प्रवर्तते यत्र मुख्यार्थबाधो

वा मुख्यार्थबाधो वा रूढिप्रयोजनयोरन्यतरद् वर्तते, तात्पर्यवृत्तिस्त्वन्वये शक्तिं कुरुते। व्यञ्जनायाः कार्यं तु नैतदेव। सा तु अभिधामालम्बमानापि अभिधातः पृथक् एव व्यापारमाचरति। एतावदेव न, सा लक्षणामप्याश्रयन्ती लक्षणातो विलक्षणं कार्यमनुतिष्ठति। अन्वयमात्रे शक्तिकारित्वात् तात्पर्या च नैव कान्तुरम्। अभिधां लक्षणां चावलम्बमानापि व्यञ्जना स्वतन्त्रा वृत्तिरस्ति तत्कृतकार्यस्य सर्वथैव अभिधालक्षणाकृतकार्याद् भिन्नत्वात्। विद्युन्मेघादुत्पद्यते परं विद्युत्कार्यं मेघो न कर्तुं पारयति मेघाः यद्यपि धूमज्योतिःसलिलमरुतां सन्निपातोऽस्ति परं मेघस्य कार्यं न धूमं न ज्योतिर्न सलिलं न च मरुत् कर्तुमर्हति। पदार्थाः पृथक्तया यत् कार्यमाचरन्ति न तत् कार्यं ते संहतिं गत्वानुतिष्ठन्ति। तस्याः स्थित्या तत्कार्यं किमप्यन्यदेव भवति। समुद्रो वारिबिन्दूनामेव सङ्घातो भवति परं वारिबिन्दोर्भिन्नमेव किमपि नितान्तमद्भुतं विशालञ्च कार्यं करोति सः। व्यञ्जनाशक्तिस्तु विचित्रैव शक्तिः सा न सर्वथाभिधाद्यधीना, सा तु क्वचित् स्वातन्त्र्यमपि भजते।

यद्यपि व्यञ्जनाव्यापारस्यानन्त्यं दृश्यते परमनुगतोपाधिवशाद् भेदत्रये तदन्तर्भावो भवितुमर्हति वस्त्वलङ्काररसादिविषयतया व्यङ्ग्यार्थस्य त्रिविधत्वात्। एषु प्रथमावन्तरौ वस्त्वलङ्कारौ द्वावपि क्वापि व्यङ्ग्यौ भवतः क्वापि च वाच्यौ—वाच्यतामर्हौ—। परं रसः सदा व्यङ्ग्य एव भवति। न स कदापि वाच्यो भवितुं शक्नोति। वस्तुरूपाऽलङ्काररूपश्च ध्वनिर्व्यञ्जनाप्रतिपाद्य एव न लक्षणादिना तत्प्रतीतिः सम्भवा।

(क) अविवक्षितवाच्यस्य ध्वनेर्द्वावपि अर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्यौ भेदौ लक्षणामूलौ भवतः। तत्र वस्तुमात्रव्यङ्ग्यं लक्षणायाः प्रयोजनत्वेनाभिप्रेयते। न स व्यङ्ग्योऽर्थो लक्षणाया विषयः। चेत् सोऽपि तद्विषयत्वमभ्युपगम्येत तस्य प्रयोजनान्तरकल्पना तदर्थमपेक्षेत। तथा चैवानवस्थैवापतेत्। तस्मादिदमेव निश्चितं लक्षणामूलकध्वनौ हि वस्तुमात्रव्यङ्ग्यो भवति यः, स व्यञ्जनयैव प्रतीतिपथमवतरति। न तत्प्रतीतेः कापि शक्तिरन्या तत्प्रकाशयितुमलम् तस्माद् व्यञ्जनाख्या शक्तिरभिधादितो विलक्षणा।

(ख) अभिधामूलकध्वनेः शब्दशक्तिमूलके भेदेऽनेकार्थकाः शब्दाः प्रकरणादिना एकस्मिन् अर्थे नियम्यन्ते। शब्दस्यानेकार्थवाचकत्वे सत्यपि तेषां

बहूनामर्थानां मध्ये केवलमेकमेवार्थं प्रकरणाद्यनुकूलं तत्राभिधा ग्राहयति न च तदितरानर्थान्। एतेनेदं सिद्धं यन्नियन्त्रितार्थाच्छब्दाद् योऽर्थः प्रकरणादिवशाद् 'गृह्यते' स तु अभिधेयोऽर्थो भवति अवशिष्टाश्च अन्येऽर्था अभिधेया न भवन्ति। तेषामर्थानां या प्रतीतिरभिधेयार्थबोधानन्तरं भवति सा व्यञ्जनया कार्यते। मुख्यार्थबाधाद्यभावात् तत्प्रतीतिं लक्षणा तु कारयितुमर्हत्येव न। तस्माद् नियन्त्रितार्थाद् व्यतिरिक्ता अर्था व्यङ्ग्या एव भवन्ति तेषां व्यञ्जनाविषयत्वात्। 'भद्रात्मनो दुरधिरोहतनोरि'त्यादिश्लोके हि उदाहृत प्रोक्तञ्चाचार्यैः—यद्‍त्र राजपरकोऽर्थो यो हि प्रकरणादिना नियन्त्यते स अर्थोऽभिधेयोऽस्ति किन्तु तं व्यतिरिच्य गजपरको योऽर्थो द्वितीयः प्रतीयते स प्रतीयमानोऽर्थो व्यङ्ग्य। स अर्थो व्यञ्जनयाभिव्यक्तिं याति। न तमर्थमभिधा बोधयितुं समर्था जायते। राजपरकमर्थं समुपस्थाप्य तस्या विरतशक्तित्वात्। श्लेषेण राजपरकस्यान्यार्थस्य बोधो भवितुमर्हतीति कथनं न युक्तम्। श्लेषस्य प्रवृत्तिस्तत्र भवति यत्र वक्ता बहून् अर्थान् युगपद् व्याहर्तुमभिलषते। यत्र हि एकस्मिन्नेवार्थे वक्तुस्तात्पर्यं भवतिष्ठते तत्र व्यञ्जना अर्थान्तरमभिव्यनक्ति न च श्लेषस्तस्य तदविषयत्वात्। अभिधाद्यगम्यमर्थं या प्रकाशयति सा व्यञ्जना केन प्रकारेण अभिधादिषु हि अन्तर्भवितुं शक्या ?

( ग ) अर्थशक्तिमूलके ध्वनौ वस्त्वलङ्कारयोर्व्यञ्जनया प्रतीतिर्भवति न चाभिधया। तत्रापि अभिधाया गतिरसम्भवा। प्रतीयमानयोर्वस्त्वलङ्कारयो सङ्केतग्रहसीमातीतत्वात्। अभिधा सङ्केतितमर्थमेव बोधयति। तत्प्रतीत्यर्थं नाभिधोपास्यते न च तदवबोधनायाभिधापदार्थो एवाकाङ्क्षयते। अत्र भावोऽयं कथनस्य—प्रथमतः पदार्थः प्रतीयते, ततश्चान्वयविशिष्टरूपो वाक्यार्थ प्रकटीभवति, ततश्च वस्त्वलङ्कारयो प्रतीतिः सञ्जायते। वाक्यार्थमधिकृत्य मीमांसकानां हि सिद्धान्तौ द्वौ। प्रथमः 'अभिहितान्वयवाद' इत्यनेन नाम्ना ख्यातो द्वितीयो हि 'अन्विताभिधानवाद' इत्यनेन नाम्ना विश्रुत। अभिधा प्रथमं पदान्तर्गतमर्थं बोधयति ततश्च तात्पर्या वाक्यार्थमुपस्थापयति नाभिधाया वाक्यार्थबोधनक्षमता सा तु पदार्थमात्रज्ञापने शक्तिं निदधाती यत अभिप्रायोऽस्ति अभिहितान्वयवादस्य। विचारिते सत्यस्मिन् अभिहितान्वयवादे, इदं स्फुटतरमेव विदितं सञ्जायते यदर्थशक्तिमूलके ध्वनौ प्रतीयमानयोर्वस्त्वलङ्कारयोर्बोधने न कदापि अभिधा कारयितुं प्रभवति न च तात्पर्यमेव। तयोर्द्वयोरपि अभिधायास्ता

स्वपर्यायाविषयत्वात्। वस्त्वलङ्काररूपस्य व्यङ्ग्यार्थस्य व्यञ्जनाविषयत्वमनेनैव सिद्धं किञ्च व्यञ्जनायाः पृथग् वृत्तित्वमपि निष्पन्नम्।

(घ) अन्विताभिधानवादिनामप्यस्मदभिप्रायोऽयम्—अभिधा अन्वितमेवार्थं प्रकाशयति न च अनन्वितमर्थम्। यद्यभिधाया हि अन्वितार्थमात्रप्रकाशनशक्तिरस्ति तदा सा व्यङ्ग्यार्थं न केन प्रकारेण प्रकाशयितुं शक्नोति यो हि वाक्यार्थबोधानन्तरं प्रतीयते। व्यञ्जनाबोध्यमानमर्थं व्यङ्ग्य न अभिधा एकाकिनी बोधयितुं क्षमा न च सा तात्पर्याख्या साहाय्यमपि गृहीत्वा तं प्रकटीकर्तुं पारयति इत्येतस्मात् कारणात् व्यञ्जना सर्वथैव स्वतन्त्रो व्यापारः। न अभिहितान्वयवादेन स व्यापारो निरस्तो भवितुमर्हति न चान्विताभिधानवादेनैव।

(ङ) यद्यपि व्यङ्ग्योऽर्थो नैमित्तिकोऽप्यस्ति परं स नैमित्तिको व्यङ्ग्योऽर्थो यं शब्दं निमित्तत्वेनाददाति स शब्दः कर्तृत्वेन तु नो ग्राह्यो भवितुं शक्योऽर्थस्याकार्यत्वात्। शब्दोऽर्थं प्रकाशयति ज्ञापयति वा केवलमतः स (शब्द) ज्ञापको मतोऽर्थश्च ज्ञाप्यः। परं शब्दस्य प्रकाशकता ज्ञानसापेक्षा वर्तते। सा च ज्ञानरूपता सङ्केतेन ज्ञाता जायते। यावद् व्यङ्ग्यार्थं प्रति कोऽपि शब्दो नियतत्वेन निमित्तत्वाय न कल्पते तावत् नैमित्तिकस्य (व्यङ्ग्यस्य) अर्थस्य प्रतीतिः कुतः सम्भवेत्? व्यङ्ग्यार्थप्रतीतौ शब्दो ज्ञापकरूपनिमित्तं तु वर्तते परं तदीया सा निमित्तता व्यञ्जनां विना नोपपद्यते। यतो हि शब्दस्तदैवार्थं बोधयति यदा स वृत्तिसहायः स्यात्। शब्दोऽर्थप्रकाशनार्थं वृत्तिमपेक्षते। यथा वाच्योऽभिधया, लक्ष्यो लक्षणया च प्रकाशते तथैव व्यङ्ग्योऽर्थोऽपि व्यञ्जनया प्रकाशते विना वृत्ति प्रकाशं न याति सोऽपि तस्माद् व्यङ्ग्यार्थज्ञानाय शब्दवृत्तिः स्वीकार्यास्ति। अन्यथा, शब्दो व्यङ्ग्यार्थस्य निमित्तमिति कथनमसङ्गतं स्यात्। चेद् विना व्यापारमर्थं प्रति शब्दो निमित्तत्वेन मतो भवेत् तदाभिधा लक्षणा च द्वे अपि वैयर्थ्यं यायाताम्। एतेन विमर्शनेन च व्यञ्जनाया अभिधादिभिन्नत्वं सिद्ध्यति।

(च) इषुरिव अभिधापि व्यङ्ग्यार्थं प्रकाशयितुं शक्नोति "यत्परः शब्दः स शब्दार्थः" इत्येतन्न्यायादिति चेत् तदपि न, "यत्परः शब्दः स शब्दः" इत्येतस्य न्यायस्य "यदेव विधेयं तत्रैव तात्पर्यमि"त्यस्मिन्नर्थे संनिहितत्वात्। विधिवाक्येषु क्रिया साध्यत्वेन सन्तिष्ठते, तदर्थं एव कारकपदानि प्रयुज्यन्ते। प्रधानक्रियायाः सम्पादनाय कारकाणां स्वीयाः क्रिया अपि भवन्ति। यथा 'गामानय' इत्यत्र 'आनयनम्' प्रधानक्रियास्ति। 'गोचालनञ्च' गौणक्रिया।

प्रधानक्रिया निर्वहणकारिण्या क्रियया सार्धं सम्बद्धत्वात् कारकेष्वपि कश्चिदंशः साध्यत्वेन सल्लक्ष्यते। इत्थं वाक्ये किमपि वस्तु सिद्धरूपं भवत् किमपि च साध्यरूपं सत् समवतिष्ठते। साध्यत्वस्यैव (मीमांसकमतेन) अप्राप्तं भवति। अप्राप्तस्यैव सिद्धिरपेक्ष्यते। अदग्धदहनन्यायेन तस्यैव विधानं क्रियते। तस्मात् सिद्ध्यति यच्छब्दस्य तात्पर्यं हि अप्राप्त एव निपतति। तदेव व्यङ्ग्योऽर्थो न शब्दस्य वाच्योऽर्थः। एतेन व्यङ्ग्यार्थस्य कृते व्यञ्जनाऽपेक्ष्यत इत्यायातम्।

(छ) 'विषं भक्षय' इत्यादिवाक्यस्य 'शत्रुगृहेऽभ्यवहरणं विषभक्षणादपि दुष्टम्' इत्येष एवार्थः। यदेव विधेयं तत्रैव तात्पर्यमिति मीमांसकन्यायादुक्तवाक्येऽनुपात्तशब्दार्थ एव तात्पर्यं न च प्रतीतमात्रे। एवं स्थिते वाच्यार्थभिन्न-प्रतीयमानार्थनिमित्तेन व्यञ्जनाया उपादानमिष्टम्

(ज) शब्दश्रवणानन्तरं सर्वविधानामपि वाच्यादर्थानां बोधोऽभिधयैव जायत इति चेत्, तदा 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पूर्वपूर्वबलीयस्त्वमिति' जैमिनिसूत्रं कथं सङ्गच्छेत? अभिधाया सर्वार्थबोधकारित्वस्याङ्गीकरणेऽर्थविप्रकर्षचर्चायाः कृते कुतोऽवकाशोऽवशिष्येत? यदि श्रुतिलिङ्गादिप्रतिपाद्येष्वर्थेषु न क्वापि स्वरूपविशिष्टतास्ति तदा तत्परिग्रहणमेव मुधा? तस्य ग्रहणेन कस्य प्रयोजनस्य सिद्धिः स्यात्? अर्थबलीयस्त्वतायास्तदेवमसिद्धत्वेन तेषामुपादानमकिञ्चित्करम्। तस्माद् व्यङ्ग्यार्थनिमित्तेन व्यञ्जनाया ग्रहणमनिवार्यम्।

उपरि कृतेनैतेन विमर्शनेन ध्वनिव्यञ्जनाप्रतिपाद्यस्य व्यङ्ग्यार्थस्याभिधावृत्त्यबोध्यत्वञ्च निष्पन्नम्। सम्प्रत्यत्रेदमपि स्फुटीक्रियते यद् व्यङ्ग्यार्थं विना दोषादीनामपि व्यवस्था नोपपद्येत। अतो व्यञ्जनाया उपादानमपेक्ष्यत एव।

(झ) व्यङ्ग्यार्थाऽभ्युपपत्ते सत्येव, 'कुरु रुचिम्' इत्यनयोः पदयोर्विपर्यस्तत्वे, 'रुचिकुरु' इत्येवंविधं रूपं गते सत्युक्तवाक्ये, 'चिकु' शब्दस्य भगनामावाचकतया अश्लीलत्वादोष उचितो भवति। परमत्र न 'रुचिम्' इत्येतस्य शब्दस्य न च 'कुरु' इत्येतस्य शब्दस्य वाच्यार्थोऽस्ति 'भगनामे'ति। यदा हि अश्लीलार्थो वाच्योऽस्ति न, अभिधा विहाय काप्यन्या वृत्तिर्वाच्यार्थबोधिका च न तदा भगनामरूपाश्लीलार्थस्य प्रतीतिः कथं सम्भवा? एवं स्थिते, एतादृशः प्रयोगोऽपि काव्ये वर्जितः केन प्रकारेण भवितुं शक्यः? परं सर्वं एव सहृदयास्तादृशप्रयोगस्या

मन्यार्थत्वात् वर्जनीयत्वमुपपादयन्ति । अतोऽभिधा व्यतिरिच्य व्यञ्जनायाः अपि अर्थबोधकवृत्तित्वेन ग्राह्यत्वमपेक्ष्यते ।

(ञ) नित्यानित्यदोषव्यवस्थार्थमपि व्यञ्जनाया स्वीकरणमपेक्ष्यते । श्रुतिकटुत्वादिदोषा 'शृङ्गारे सन्ति दोषाः परं वीरादौ भवन्ति ते गुणाः'—इत्येतद्विधानं तदैव युक्तं भवति यदा व्यञ्जनाङ्गीक्रियते । अन्यथा न । 'आलिङ्गित स तन्वङ्ग्या कार्तार्थ्यं लभते कदे'त्यादौ पठितस्य 'कार्तार्थ्य'मिति पदस्य श्रुतिकटुत्व सर्वोत्तिनेयमेव । तद्विधाया प्रतीतेर्बोधिका व्यञ्जनाया ऋते कान्या वृत्तिः ?

(ट) पर्यायवाचीनि बहूनि सन्ति पदानि । परं तेषां पर्यायवाचिनां पदानां मध्ये विरलमेव किमपि पदं क्वचित् काव्ये नितरां सौन्दर्यं वर्धयति । तथा हि "द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः" इत्यत्र शिवपर्यायवाचिकपालीति पदं हि अद्भुतमेव सौन्दर्यं सृजति । चेत् तत् पदं विहाय शिवपर्यायवाचिपिनाकीत्यादि पदं तत्र प्रयुज्येत तदा न तत्सौन्दर्यं तत्र सम्भवम् । कपालिपदध्वनिता सुन्दरता व्यञ्जनयैव गम्या भवति न वृत्त्यन्तरेण तस्माद् व्यङ्ग्यव्यञ्जकभावोऽभ्युपेय एव । तदङ्गीकरणेनैव असाधुत्वादीनां नित्यदोषत्वं कष्टत्वादीनामनित्यदोषत्वमित्येतद् विभागकरणमुपपन्नतां सम्पद्यते ।

(ठ) वाच्योऽर्थः सर्वान् प्रतिपत्तॄन् प्रति एकरूप एवातो नियत स । न हि 'गतोऽस्तमर्कः' इत्यादौ वाच्योऽर्थः क्वचिदन्यथा भवति । प्रतीयमानस्तु सर्वतोऽनियत । वाच्यव्यङ्ग्यार्थयोरित्थं भिन्नतापि व्यञ्जनाया उपादेयत्वं प्रतिष्ठापयति ।

(ड) वाच्यो व्यङ्ग्यश्चार्थौ वस्तुतो नितान्तभिन्नौ । 'निःशेषच्युतचन्दन-मि'त्यादौ यदा वाच्यो निषेधात्मकस्तदा व्यङ्ग्यो विध्यात्मको दृश्यते । 'मात्सर्य-मुत्सार्य' इत्यादौ वाच्यः संशयरूपः परं व्यङ्ग्योऽर्थो निश्चयरूपः । तदेवं स्वरूपतोऽपि द्वावपि भिन्नौ । तयोर्भिन्नता स्वरूपत एव न कालतः, आश्रयतो, निमित्ततः, कार्यतः, संख्यातः, विषयतश्च प्राप्यते । वाच्यस्य प्रतीतिः प्रथमं भवति तत्रश्च व्यङ्ग्यस्य, इति कालभेदो वर्तते । वाच्यः शब्दगत एव व्यङ्ग्यस्तु शब्दतदेकदेशतदर्थवर्णसंघटनागतश्चापि स आश्रयतोऽपि भिन्नता गाहते । वाच्यस्य बोधो व्याकरणकोशादीनामनुशीलनेन भवति परं व्यङ्ग्यस्य प्रकरणादिसहायप्रतिभानैर्मल्यसुतरामनुशीलनेन वदितीयत स्पष्टो निमित्तभेदोऽप्युभयोः । वाच्यार्थस्य बोधो बोद्धृभिरपि कर्तुं शक्यते परं व्यङ्ग्यार्थस्तु सहृदयवेद्य एव । किञ्च वाच्ये

न चमत्कार प्रतीयते, व्यङ्ग्ये तु तस्य प्रतीति सचेतसा क्रियते तस्माद् 'वाच्य-व्यङ्ग्ययो कार्यं नैकम् । 'गतोऽस्तमर्क' इत्यादौ सख्याया ( तस्य तस्य जनस्य तत्तदर्थावगम्यमानतया ) भिन्नतास्ति सापि वाच्य–व्यङ्ग्ययोर्विभिन्नता स्पष्टीकरोति ।

"कस्स वा ण होइ रोसो" इत्यादिस्थलमुद्दिश्य वाच्यस्य व्यङ्ग्यस्य च विषय-भिन्नतामुपपादयति । तदेव व्यञ्जनाया ग्राह्यत्वमनेकधा सिद्ध्यति । न केवल वाच्यव्यङ्ग्ययोर्भिन्नत्वाद् व्यञ्जनाया महत्त्वमुपपद्यते अपि तु वाचक–व्यञ्जकयोश्च भिन्नतापि तदीया विशिष्टतामुद्घोषयति । तथाहि—

( ढ ) वाचकस्तु तमेवार्थं बोधयति यत्र तदीय सङ्केतग्रह । परं व्यञ्जकस्तु न तदपेक्षी । व्यञ्जकता न केवल शब्दे दृष्टा भवति सा तु अर्थेऽपि निरर्थकवर्णादौ च विलोक्यते ।

"वाणीरकुडङ्गोड्डीन" इत्यादौ ह्येतत् स्फुटीभवति यत् व्यङ्ग्ययोऽर्थो नाभिधा वृत्तेर्न च तात्पर्यवृत्तेरधीनतायामस्ति । एतेन तादृशार्थनिमित्तेन च व्यञ्जनाया अङ्गीकरणत्वमपेक्षित जायत । न प्रतीयमानस्यार्थस्यापलापनमुचित कदापि ।

( ण ) व्यङ्ग्यार्थस्य लक्षणावृत्तिबोध्यतापि न । अस्मादपि कारणात् व्यञ्जनाया अभ्युपगतिरनिवार्या भवति । लक्ष्यार्थ व्यङ्ग्यार्थयोर्भिन्नत्वेनावधारणे सन्ति हेतव इमे—

( अ ) यद्यपि एकस्य शब्दस्यानेक लक्ष्यार्था भवितु शक्या पर ते सर्वे नियता एव भवन्ति । लक्ष्यार्थस्य प्रतानि सामीप्यादिनियतसम्बन्धाधारेण जायत न च सम्बन्धाधार विना । लक्षणा मुख्यार्थयोगमपक्षते । व्यङ्ग्यार्थस्तु प्रकरणाद्यपेक्षिणा मुख्यार्थेन सह सम्बन्ध निबधातोऽपि न सदा नियतत्वेन तद्विधसम्बन्धमपेक्षते प्रतीयते च ।

( आ ) लक्षणा मुख्यार्थबाधे सति प्रवर्तते परम् "अत्ता एत्थ" इत्यादौ मुख्यार्थबाधादर्शनात् सिद्ध्यत्येतद् यद् व्यञ्जना तथाविधायामपि दशाया प्रवर्तयत्यात्मानम् ।

( इ ) प्रयोजनप्रतीत्यर्थं लक्षणयापि व्यञ्जनाश्रीयते पर व्यञ्जना न तस्माद्व्यर्थचिन्ताचिन्तिता दृश्यते ।

( ई ) यथा अभिधा सङ्केतायत्ता यथा च लक्षणा मुख्यार्थबाधादिसमय त्रिकाधीना न तथा व्यञ्जना परवशा ।

( उ ) व्यञ्जना न सर्वत्राभिधामपेक्षते न च सा सर्वत्र लक्षणामेव । सा क्वचित् क्वचिद्रसमन्येव रसनाम्ना न कामपि वृत्तिमवलम्बते । व्यञ्जकताया न सर्वत्र शब्दानुसरणशीलत्वात् तस्याः सर्वतन्त्रस्वतन्त्रत्वमिहोक्तम् । अशब्दात्मकनेत्र-त्रिभागावलोकनादिगतत्वमपि व्यञ्जनायाः प्रसिद्धमेव ।

( त ) "अखण्डबुद्धिनिर्ग्राह्यो वाक्यार्थ एव वाच्यः, वाक्यमेव च वाचकम्" इति येऽप्याहुः, तैरप्यविद्यापदपतितैः पदपदार्थकल्पना कर्त्तव्यैवे"ति निगद्य मम्मटाचार्येण कियत्या मधुरया वक्रोक्त्या व्यञ्जनाया वेदान्त्यभिमतत्वं साधितम् ।

( थ ) व्यङ्ग्यस्य प्रतीतेरनुमानागम्यत्वाच्च व्यञ्जनाया अभ्युपगमनमपेक्षितं सञ्जायते । व्यक्तिविवेककारो 'भ्रम धार्मिक' इत्यादौ व्यङ्ग्यस्यानुमेयत्वं यत् प्रतिपादयामास तद् समीचीनं न । तत्रत्यस्य हेतोर्व्यभिचारित्वात् । भीरुजनस्यापि प्रियास्नेह-स्लाघ्य-देशादिवशात् भयवत्स्थानप्रति गमनं दृश्यत एव तस्माद् व्यङ्ग्यार्थो हि अनुमानबोध्यः ।

तदेवं व्यञ्जनाया उपादेयत्वं, तदीयं महत्त्वं, तदीयं श्रेष्ठत्वं, तदीयं सर्ववृत्ति-विजयशीलत्वं, तदीयं परोक्षार्थदर्शकत्वं तदीयमतिशयानन्दशालित्वञ्च पूर्णतया सिद्ध्यति ।

"निःशेषच्युतचन्दनम्", "कस्य वा न भवति रोषः", "रामोऽसौ भुवनेषु विक्रमगुणैः", "न्यक्कारो ह्ययमेव"—इत्यादिषु श्लोकेषु यदद्भुतमत्युदात्तं सौन्दर्यं प्रवहति यश्च मधुरो रसस्तत्र सहृदयैः पीयते तदर्थं सकलमपि सुधीजगत् व्यञ्जनाम्प्रति स्वीयं कृतज्ञताञ्जलिमर्पयति ।

वस्तुतः शब्देऽर्थे च लावण्यमिव तरलं यत् सर्वोत्तमं पावनतमं मधुरतमं सुन्दरतमं च तत्त्वमुल्लसति तत्साहित्यशास्त्रिण एव मार्गयितुमक्षमन्त । तन्मार्गितमिदं तत्त्वामृतं यां परां मुदं सृजति न तां तु किमप्यन्यत् सृजद् दृश्यते । कवीश्वरान् लक्ष्यीकृत्य केनापि कोविदोत्तमेन युक्तमेवेदमभिनन्दनं कृतम्—

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ।
येषां नास्ति यशःकाये जरामरणजं भयम् ॥



## वैदिकी संस्कृतिः

या वेदस्मृतिशास्त्रविन्मुनिवरैर्जुष्टा सुरैकास्पदा
दैवी सम्पदलङ्कृता भगवता श्रीशेन संरक्षिता।
या वर्णाश्रमधर्मसारहृदया कामार्थमोक्षप्रदा
नित्या विश्वहितैषिणी विजयते सा वैदिकी संस्कृतिः॥

स्वकीयेभ्य आप्तेभ्य पितृपितामहप्रपितामहादिभ्य कुलपरम्परया सकाशाच्च कस्यचन देशस्य जनता यान् आचारान् विचारान् व्यवहारान् रीतिनीतीश्च कार्यकलापांश्चाधिगम्य आचरणे च परिणमय्य निजं जीवनं यापयति ते आचार-विचारादय एव 'संस्कृति' इत्येतेन शब्देन प्रोच्यन्ते।

जनता जीवन-यापनप्रयोजनेन यादृशमेव सदनं भोजनं वसनं पानं ... मनोरञ्जनमन्यच्च सकलमप्युपगच्छति यादृशं दृश-दान-जप-तप-... भवति। इदं देशकालादि जनताया बुद्धौ मानसे शरीरे ... च नितरां निजं प्रभावममोघं क्षिपति। सा तेषां सांनिध्यात् तदीयैः संस्कारैः ... जायते। तस्या तद्विधा संस्कृतिरेव संस्कृतिरिति बुधैर्गीयते।

वसिष्ठ-पराशरात्रिभरद्वाजरामकृष्णादिगोत्रोत्पन्नानां भरतभूमिभवानां ... संस्कृतिर्वैदिकी संस्कृतिरिति नाम्ना च सर्वत्र विश्रुता। सा "आनीदवातं स्वधया तदेकम्" (ऋग्वेद, १०।१२९।२) अथ च "संगच्छध्वं संवदध्वं सं वो मनांसि जानताम्" (ऋग्वेद, १०।१९१।२) इत्येवंविधाभ्य शास्त्रधाराभ्य, विविधकलाकलितनिकेतनकृतवासानां प्रस्तर-यष्टि-लगुड-लोष्ट-... शूर्प-तितउ-अर्दरादिकासंख्यातपरिच्छदनिषेवणपराणां, प्रतिष्ठापितनानादुर्गनगरग्रामनिचयानां, दध्याज्यक्षीर-नवनीतायुताज्यौदनादिप्रचुरभोज्यपदार्थप्रयोगप्रदर्शितकामानां, चीनांशुकाजिनकौसुम्भपरिधानाद्यावरणावृतवपुष्काणां, निष्कस्रक्पाश-कुरीर-प्रभृतिपुष्पालङ्कारालङ्कृतानां गवादिपशुपालनरतचित्तानां, आकाङ्क्षितसकलोदयानां विश्वोपकारिकर्मपरायणानां ज्ञानविज्ञानसम्पन्नानां यज्ञयागानुष्ठानप्रवणानां कृषीवलानाम् आचरणेभ्य, किञ्च—

निवृत्तिविधायिका भवेत्। वर्तमानाय सा श्लाघते परं तस्य सम्बन्धो भूतेन युज्यमानः स्यात् भवेच्च तद्योगो भाविजीवनोद्वेता। एतस्यैवादर्शस्य सरक्षणाय वैदिकीसंस्कृतिराश्रमवादिनी संस्कृतिरस्ति।

ब्रह्मचर्यं हि कठिनतमं तपः। तदाचरणेन तेजस्वितविलासद्बुद्धिरवश्यता-द्विमपदामवाप्तिर्जायते। तत् तपस्तपःसु श्रेष्ठम्। न तस्य महिमानं किमप्यन्य-दधिगन्तुं पारयति। अतस्तत् प्रशंसन् वेद आह—"ब्रह्मचर्येण तपसा देवा मृत्युमुपाघ्नत"।

ब्रह्मचर्यस्य महत्त्वं भारतमेव प्रथममजानात्। तस्मादेव कारणात् तदीया संस्कृतिर्ब्रह्मचर्यवादिनी संस्कृतिर्वर्तते।

भारतीया संस्कृतिर्न भोगान् द्वेष्टि परं ते सर्वे भोगाः-विषयाः-विचारपूर्वकं समग्रधिया विमृश्य भोक्तव्या इत्येतदवश्यमुपदिशति। तेषां विषयाणाम-निग्रहात् तु सपर्यवसायित्वाच्च तेषु हि अविचारपूर्वकप्रवर्तनेन हानिरेव हानि-र्भवति-इत्येतस्मात् कारणात् सा मानवमात्र सावधानं कुरुते। विषयोपभोग-विषयिणी कामना मानवस्य प्रकृतिमधिवसतीति सा तु अवगच्छति सा, अतएव सा तामुन्मूलयितुं नोपदिशति परं निग्रहीतुमेवादिशति। तन्निग्रहणमभ्यासेन वैराग्येण च सम्भवमिति विचिन्त्य सा यमनियमादीनां योगशास्त्रप्रतिपादितानां सिद्धान्तानामनुसरणाय सततं निर्दिशति। वस्तुतः आर्यसंस्कृत्या गार्हस्थ्याश्रम-व्यवस्था दुर्धर्षकाम-वासनाशासनप्रयोजनेनाभ्युपगतास्ति न च विषयो-पभोगाय।

इदं जगत्, इमे सम्बन्धिनः, इमे पुत्रकलत्रादयः इमाः सम्पदः, इदं भवनम्, इयं धरा, एषा च प्रभुता यत् किञ्चिदपि तिष्ठति तत् सर्वमपि नियत-मेकस्मिन्नहनि परित्याज्यं स्यादिति ध्रुवम्। यदा मृत्युरागमिष्यति तदा तत् पुरतः पुरुषो न किमपि कर्तुं प्रभविष्यति, तस्मिन् समये तु सर्वेषामुत्सर्गः कर्त्तव्य स्यादेव। एवंभूतायां स्थित्यामिदमेव वरं भवेद् यन्मृत्योः प्रागेव मोह-मुज्झित्वा सर्वाण्यप्यनित्यानि वस्तूनि विहायात्मोपचिकीर्षुरटवीं व्रजेत्। एतस्याः परित्यागाया एव हेतोर्भारतीयसंस्कृतौ वानप्रस्थाश्रमस्य प्रतिष्ठा दृग्गोचरीभवति।

वानप्रस्थाश्रम आध्यात्मिकभावनाया भूमिर्वर्तते। यथा दीप आलोकेन तमो विधूय प्रकाशं विकिरति तथैव सङ्कटोद्भूतामुद्विग्नतां निरस्य वैखानसता पुंसि शान्तं सञ्चारयति। कृतवानप्रस्थाश्रमप्रवेशो मानुषो न केवलमात्मश्रेय

आचरति किन्तु स स्वकीयेन गहनानुभूतिबलेन योग्यतासामर्थ्येन सक्रियेण च ज्ञानेन जनसामान्यस्य मलिनतामनतायाससाधनाय कर्तव्यं कर्म गन्तव्यञ्च मार्गं प्रदर्शयति । अतः भारतीयसंस्कृत्या वानप्रस्थाश्रमव्यवस्था सर्वजनकल्याणकारिणी व्यवस्था समवतिष्ठते ।

सन्यासाश्रमं प्रविश्य मानवो जीवनस्यान्त्यं लक्ष्यमधिगच्छति । एष आश्रमो मुक्तेर्द्वारमिव । दुःखानामात्यन्तिकनिवृत्तिर्वा जन्मजरामरणपाशाद्विमुक्तिः तत्त्वज्ञानाधिगमनमन्तरेण असम्भवा । तज्ज्ञानलाभाय भारतीया संस्कृतिः सन्यासवादिनी भूत्वा विद्योतते । विश्वप्रचलया विश्वजनीनाया भारतीयाया संस्कृत्या एषा आश्रमवादिना समाजं सम्यग्व्यवस्थापयति उन्नमयति चोत्तरोत्तरम् ।

समाजस्य सङ्गलाय तस्योत्थानाय, सुख-शान्तिपूर्वकं तस्य जीवनं जनानि स्वर्गादिरूपेन प्रयोजनेन वैदिकसंस्कृत्या वर्णव्यवस्था कल्पितासीत् । तस्मिन् जनेषु सात्त्विकं तत्त्वं प्रधानतया दृश्यते स इह संस्कृतौ 'ब्राह्मण' इति, यत्र सात्त्विकतान्वितं राजसं तत्त्वं प्रमुखं स 'क्षत्रिय' इति, यत्र रजोगुणविशिष्टस्य तमोगुणस्योन्मेषो दृश्यते स 'वैश्य' इति, यत्र च तमोगुण एव विपुल मुख्यतया स 'शूद्र' इति निगद्यते । आधुनिकं मनोविज्ञानमित्थं विभजते-जीवो द्विविध - उद्बुद्ध अनुद्बुद्धश्च । तत्रोद्बुद्धस्त्रिविध —ज्ञानप्रधान , क्रियाप्रधान , इच्छाप्रधानश्च । ये मस्तिष्केण समाजं सेवन्ते ते सात्त्विका जीवा ज्ञानप्रधानत्वाद् 'ब्राह्मणा' इति कथ्यन्ते । ये बाहुबलेन समाजमाराधयितुमनसस्ते राजसजीवा क्रियाप्रधानत्वात् 'क्षत्रिया' इति भाष्यन्ते, भौतिकदृष्टिमन्तस्तमःप्रधाना राजसजीवा 'वैश्या' इति उच्यन्ते, अनुद्बुद्धा प्राणिनः तमोगुणप्रधाना 'शूद्रा' इति शस्यन्ते । मनुष्येषु ज्ञान, क्रिया, इच्छा इत्येते भावाः प्राप्यन्ते । इमान् एव भावान् आश्रित्य वर्णव्यवस्था-प्रासाद सन्तिष्ठते ।

भारतीयसंस्कृत्यभिमता वर्णव्यवस्था अर्थशक्तिं पङ्गुं विदधाति । धनेन पुमान् भौतिकानि द्रव्याणि क्रेतुं शक्नोति किन्तु न तेन स सम्मानं क्रेतुं प्रभवति । भारतीयसंस्कृतिरभिलषति-यज्जना स्वस्वप्रकृत्यनुसारेण समाजं सेवेरन् । ब्राह्मणा ज्ञानेन, क्षत्रिया बलेन, वैश्या धनेन, शूद्राश्च सेवया च समाजमुपकुर्वीरन् । यदा कस्यापि कृते किमपि कर्तव्यं निर्धार्यते तदा तेन कर्तव्येन समं तस्य

कोऽप्यधिकारोऽपि स्थिरीक्रियते। अयमधिकारो वस्तुत उपहारत्वेन मत। भारतीयदृष्टिरधिकार सम्मान-शासन-धन-क्रीडाभेदेन चतुर्षु भागेषु विभजते।

ब्राह्मणाय कर्त्तव्यपालनोपलक्ष्ये सम्मान प्रदत्त किन्तु सम्मानमवाप्य बुद्धि र्दुष्यति अत ब्राह्मण प्रति भारतीयसस्कृतेरयमुपदेश —

"सम्मानाद् ब्राह्मणो नित्यमुद्विजेत विषादिव"।

क्षत्रियाय तत्कर्त्तव्यरक्षोद्देश्येन यत्पारितोषिकत्वेन प्रदीयते तदस्ति शासनम्। पर शासनमपि मानवमुन्मादयति तस्मात् भारतीयसस्कृतेस्तत्प्रति स्याह रणमिदम्—

'दण्डो हि सुमहत्तेजो दुर्धरश्चाकृतात्मभि।
धर्माद् विचलिते हन्ति नृपमेव सबान्धवम्॥"

वैश्याय धन तदधिकारत्वेन विश्राणित परन्तु तदपि जन मोहयति अत-उक्तम्—

"दद्याच्च सर्वभूतानामन्नमेव प्रयत्नत।"

शूद्रो हि शरीरेण समाज निषेवते। तदीया शक्तिस्तदेव। न तस्य मतिर्धे ज्ञान, न बल, न धनम्। तस्मात् तत्कर्त्तव्यानुरोधेन तदर्थं पारितोषिकत्वेनाव काश उत्सृष्ट। सर्वविधविकासाय तस्माअपि सर्वविध सौविध्यन्तु प्रदत्तमेव हि वर्ततेऽनुपदम्। स स्वेच्छयानाय स्वतन्त्र—

"शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम्।"

धनगत क्रयणबल हर्षयितु वर्णव्यवस्थाया प्रतिष्ठाप्रभुतासम्पदश्च नैकत्र सन्निवेशितास्तास्तिस्रोऽपि पृथक् स्थाने न्यस्तता समारोप्यावस्थापिता। यत्र प्रतिष्ठा प्रदत्ता तत प्रभुता सम्पच्च दूरीकृते यत्र प्रभुता समर्पिता तत्र न प्रतिष्ठा न सम्पदेवोपहृता किञ्च यत्र सम्पत् प्रतिष्ठापिता तत प्रतिष्ठाप्रभुते द्वे अपि हृते। प्रतिशक्ति सदैकाकिन्येवा कृता। समाजस्य विकास स्वार्थपरार्थयो समन्वयन भवितुमर्हतीति भारतीयशास्त्रिण साधु विविदु। तस्मात् तेऽर्थमुपेक्षमाणा परार्थ प्रमुखे स्थाने निधाय स्वार्थं परार्थसाधकत्वेन गौणमधिष्ठानमध्यासयाम्बभूवु। निष्कामा प्रवृत्ति परार्थं साधयति, सकामा च स्वार्थम्। निष्कामभावेन समाज हिताचरण ब्राह्मणक्षत्रिययो कर्त्तव्यम्। सकामतयापि तदाराधन वैश्यशूद्रयो, धर्मत्वेनाभ्युपगतम्। वर्णव्यवस्थाया इय दृष्टि ससार रचितुमीष्टे। जगज्जनाना-मौचित्यमेतदस्ते तां सवर्धयितु भारतीयसस्कृतिनिर्दिष्टां वर्णव्यवस्थामुररी कुर्वीरन्।

आस्माकीनमधुना भारतं योजनामयवातावरणं विस्तृणोति । उद्भिन्नोपज्ञ-मर्त्योऽपि देशान्तरीयाश्च स्व स्व राष्ट्रमुन्नमयितुं योजनानामानाय वितन्वाना अद्य दीव्यन्ते क्वचित् पाञ्चवर्षिकी क्वचिद् दाशवर्षिकी योजना प्रवर्तमानावाप्यते । आभिर्योजनाभिर्बन्ध-बन्धन, कुल्याखनन, सेतुप्रणयन, नल-कूपरचन, विविध-यन्त्रशालानां संस्थापनम्, औद्योगिकागारप्रतिष्ठापन, वैद्युच्छक्ते प्रसारणमित्यादिविधान्यनेकानि महामहाविशङ्कटान्युपक्रमणान्युपाक्रान्तानि दृश्यन्ते । एतासां योजनानां प्रयोजनं पार्थिववैभवोपभोगपल्लवनं विहाय नान्यत् किमपि । मानवानां भौतिक्या क्षुधो निवारणायानुष्ठीयमाना इमे उपक्रमा सन्ति कल्पनीयाः । किन्त्वाधुनिक्यानया विज्ञानदिशया मानवस्तस्य चरमाह्वयाद् विमुखीकृतः । मानवतातः स पराङ्मुखीकृतः । सार्वजनीनभावनातः पातितः । स स्व यावदिच्छति न तावत् स्वं वर्गं, यावत् स स्व वर्गं काङ्क्षति न तावत् स्वकीयं समाजमेवमेव यावदसौ स्वसमाजमभिलषते न तावत् स्वकीयं राष्ट्रम् । परकीय-वर्गव्यक्तिसमाज-राष्ट्राणां तु वार्तैवातिदूरे तिष्ठति । न राष्ट्रं राष्ट्रान्तरस्योत्थानं विकासं सुखानि च सोढुं शक्नोति । तस्य सर्वाण्यपि शस्त्रास्त्राणि नवनवानि परराष्ट्रं परस्परं विनाशयितुमुन्मूलयितुञ्च सानन्दव्यादानं सावलेपं च सन्तिष्ठन्ते । अपि किमियमेव मानवता ? किमेषैव उन्नततमा सभ्यता ? किमयं कश्चिद् विश्वबन्धुताया प्रकारः ? वैदिकी संस्कृतिर्न कदापि भौतिकताविकासविरोधिनी । सा तु परोत्कर्षासहनविरोधिनी । तदीयमन्त्वभिधानमिदमेव यद्येतेषां वैज्ञानिकानां कार्याणां कर्तरि मानवे मानवताया उद्रेको न समुदितस्तदाभिः सम्पद्भिरेभिः कार्यैश्च को लाभः ? न प्रतिदिनं वृद्धिं गच्छन्त्य इमा दुरन्ता दुष्पूरा प्रमाथिन्यो भौतिक्य कामना मानवं दुराचारान्निवर्तयितुं क्षमन्ते । नेमा भ्रष्टाचारात् तं पराङ्मुखीकर्तुमर्हन्ति । अस्याः पार्थिवताया एष स्वभावोऽस्ति यद् यदैवैका कामना पूर्तिमृच्छति तदैवेयमपरां कामनां जनयति—

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥

तस्मात् तत्रानासक्तधीरेव निषेव्या । भारतीयसंस्कृतेरेष एवाभ्यन्तरिकोऽभिलाषः ।

भारतीयसंस्कृत्या गुरुतमा योजना मानवस्य निर्माणमस्ति । प्रतीच्या संस्कृतिः स्वार्थं चिन्तयति, कामानि ध्यायति, विलासितां विसृजति परं सा मानवताया उन्मीलने निमीलितनयना भूत्वा सुखेन स्वपिति ।

नात्र संशयो यदशन-वसनादिकाभावे मानुषेणानृतचारिणा विपथगामिना भ्रष्टाचारनिषेविणा च भवितुं शक्यते—

'बुभुक्षितः किन्न करोति पापं, क्षीणा नरा निष्करुणा भवन्ति"—किन्तु प्रचुरभोज्यभोग्योपस्करधारिणो नानाविधदिव्याम्बरशालिन उच्चप्रासादनिवासिनोऽतुल्यसुखविहारिणोऽपि निन्दनीयेषु कर्मसु रममाणा आम्नायन्ते सर्वत्र। सतोऽपि पुष्कलाद् धनान्न तृप्तिं भजमानास्ते सर्वतो वित्तं सहस्रबाहवो भूत्वा कृषन्तो शब्दयन्ते। तस्माद् भारतीया संस्कृतिरिमां प्रतीच्यां संस्कृतिं न मानवकल्याणकारिणीं पश्यति। सकलमपि जगदद्यैतस्या प्रतीच्याया संस्कृते परिश्रान्तं परिक्लान्तं नितरामशान्तमुद्विग्नञ्च वर्तते। एतद्धेतोर्निखिलमेव भुवनं हाहाकारनिनदानं श्रूयते।

मानवस्य निर्माणं मानवताया निष्पादनं शान्तेः समुत्पादनं विश्वबन्धुताया आविर्भावनं च भारतीया संस्कृतिः साधु जानाति। तदीया संस्कारवादिता उपर्यभिहिततत्त्वान्येव सूते। भारतीयसंस्कृत्या विद्यमाना षोडशापि संस्कारा मानवजातेः मानसं संस्कुर्वन्ति परिमार्जन्ति च। तेषां प्रभावः प्रत्यक्षाप्रत्यक्षरीत्या धियि आत्मनि च निपतति। तेन धियि सात्त्विकानां प्रकाशानां सञ्चारो भवितुमारभते आत्मा च भवति द्रढीयान्। यस्मिन् मानवे सात्त्विकी धी, शुद्धं स्वच्छं मनो बलवान् आत्मा वासं कुर्वन्ति स एव विश्वस्य सेवां कर्तुं पारयति। अतः भारतीयसंस्कृतिस्तादृशैर्मानवैरलङ्क्रियमाणं विश्वं दिदृक्षते यादृशा मानवास्तदुद्धाराय प्रपद्यन्ते। भारतीयसंस्कृतेरयं विश्वासः—

"इह चेदवेदीत् अथ सत्यमस्ति, न चेदवेदीत् महती विनष्टिः।"

भारतीयसंस्कृतेर्मूलानुबन्धनानवगमनेनानेके छिद्रान्वेषिणः आलोचका आक्षिपन्ति यद् भारतीयसंस्कृतिः स्वप्नस्य कल्पनायाश्च चञ्चला श्रोणीमध्यास्ते। संसारस्य क्रियात्मिकया धारया सार्धं नास्ति तदीयोलिप्तोऽपि सम्बन्धः। परमेष आक्षेपो नावितथः। भारतीयसंस्कृतिश्चरणाभ्यामिमामिलां स्पृशति किन्तु मूर्ध्नाम्बरमभिव्याप्य निषीदति। आमुष्मिकताया निहितचेतस्कापि सा ऐहिकताया दत्तव्यानास्ति। पदार्थविद्या शासनपद्धति-समाजव्यवस्था-शारीरशास्त्र-वार्तावास्तुकला-युद्धविद्या-जननविज्ञानप्रभृतीनामखिलानामपि विद्यानां कलानां विज्ञानानां क्षेत्रेषु भारतीयसंस्कृतेः पारङ्गतत्वं सर्वविदितमेव। वायुविज्ञानशक्त्या सा कालाध्वनोर्व्यवधानं ज्यति, सूर्यविज्ञानस्य साहाय्येन पदार्थस्वरूपं परिवर्तयितुं

मृत्युञ्चापगन्तु सा सामर्थ्यमश्नुते। तदीया समाजव्यवस्था व्यक्तिविकासकारी व्युत्पत्कराण्युरीकृत्यापि समाजस्य शुभं प्राधान्येनानुतिष्ठति। तदीयमर्थशास्त्र समाजस्यापकारि न भूत्वा तद्धितकं प्रपञ्चं सञ्चालयति।

"उपार्जितानां वित्तानां त्याग एव हि रक्षणम्।
तडागोदरसंस्थानां परीवाह इवाम्भसाम्॥"

इत्यभिधाय सा समाजस्य पुरस्तान्महत्त्वमयीं सम्मतिं प्रस्तौति। येन समाजस्य दिनानुदिनं वृद्धिर्जायेत।

भारतीया संस्कृतिर्न शरीरं उपेक्षणीयं निदधाति। सा तु तत्र स्नेहं विदधाना नितराम्। सा मन्यते—

"देहोऽयं मानुषो राजन् पुरुषस्याखिलार्थदः।
तस्मादस्य वधो वीर सर्वार्थवध उच्यते॥"

सा कामयते—

'पश्येम शरदः शतं जीवेम शरदः शतम्।"

सा प्रार्थयते—

"भद्रं कर्णेभिः शृणुयाम देवाः ।"

मानवस्वभावे प्रवृत्तिर्द्विविधा सन्दृश्यते—केन्द्राभिमुखा वृत्ताभिमुखा च। आद्या वृत्तात् केन्द्रबिन्दुमनुसरति। सा विचारात् क्वापि परं नकिञ्चित् सन्तोषं केन्द्रे स्थिता भवति। सा तावत् विरमति यावत् केन्द्रं न लभते। अन्या केन्द्रात् परिधिं प्रधावति। सा बहिर्विहारिणी। द्वे अपीमे प्रवृत्ती द्विविधां संस्कृतिं सृजतः। केन्द्रोन्मुखी प्रवृत्तिर्भारतीयां संस्कृतिं वृत्तोन्मुखी च पाश्चात्यसंस्कृतिं जनयति। भारतीयसंस्कृतिराचारप्रधानास्ति। तत्र अन्तर्वृत्तेर्निरोधः, समाचारेष्वन्तःकरणशुद्धिः, वैयष्टिकजीवनस्य त्यागपरता च स्वीक्रियन्ते। यथार्थहिताचरणस्य कृते शुद्धान्तःकरणस्यापेक्षितत्वात्।

इदमनुपदमेवोक्तं यद् भारतीया संस्कृतिर्न भौतिकतापरिपन्थिनी। केवलं तस्याः सततभेदः संस्कृत्यन्तरैः सह भौतिकतोपयोगविषये वर्तते। भारतीयसंस्कृतौ भौतिकतोपभोगप्रकारः आध्यात्मिकतासंश्लिष्टोऽस्ति परं संस्कृत्यन्तरस्य भौतिकतोपयोगविधा तच्छून्यास्ति। भारतीयसंस्कृतेराध्यात्मिकताश्लिष्टा भौतिकता सर्वैरपि सत्यपथदर्शिभिर्विद्वद्भिः प्रशंस्यैः पुनः पुनः श्लाघ्यते। "इन्द्रिया ह्याद्

कैन इट टीच अस्" इत्यादिनामधेया ग्रन्था भूयोभूय संस्कृतिं वैदिकीं प्रशसन्त केन न श्रूयन्ते ।

अस्माकं धर्मस्यान्तराले, समाजव्यवस्थाया मूले, शिक्षाया गर्भे, कलाया' अन्त करणे च भारतीया संस्कृतिरिमां भव्या भावना पिपर्ति—

धर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पते ।
नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृत ॥
कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता ।
जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्मभि ॥

भारतीया संस्कृति कर्मवादिनी । कर्म विना न गति । तदेव बन्धने पातयति तदेव बन्धनान्मोचयति । न कदापि तस्माज्जुगुप्सेत—

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥

भारतीया संस्कृतिर्जन्मान्तरवादिनी । जगन्मध्ये प्राणिषु वीक्ष्यमाणा विविधता, दु खसुखादिक, दारिद्र्यमदारिद्र्य, रोगादिकमन्याश्च विषमता पूर्वजन्मकृतकर्म-वशादेव समागता सन्ति—

"जातस्य हि ध्रुवो मृत्युर्ध्रुव जन्म मृतस्य च ।"

भारतीयसंस्कृतिराचारवादिनी । सा ज्ञानादाचार ज्यायासमवगच्छति । न सा तथा विद्वांस सभाजयति यथाचारवन्तम्—

"कदाचार नर वदा न पुनन्ति कदाचन ।
न देवा न धन नेज्या नाधीतिर्न महान्वय " ॥

अहह भारतीयसंस्कृतिप्रपूर्यमाणा ग्रन्था सदाचार सेवितु कियन्मधुरया गिरयोपदिशन्ति—

आयु स्वैर स्रवति वपुषो भिन्नकुम्भादिवाम्भ
को विश्राम प्रहरति कदा क्रूरकर्मा कृतान्त ।
नान्य पन्था विषय विषतो दूषितो मानवानां
कल्याणाय प्रभवति सखे बन्धुराचार एक ॥

भारतीयसंस्कृतेर्वैशिष्ट्यमिदमपर यत् सा मातृशक्ते सम्मान करोति । "या देवी सर्वभूतेषु मातृरूपेण संस्थिता", "स्त्रिय समस्तास्तव देवि भेदा " इत्यादिवचांसि अस्या संस्कृतेरुच्चैर्नारी सम्मानभावनामुद्गिरन्ति ।

एषा चान्या विशिष्टतास्या यदियं विचारमहिम्ना भवति । सा स्वकीयान् विचारान् प्रकाशयितुं सहर्षं सर्वान् प्रति स्वातन्त्र्यं प्रयच्छति । भारतेऽत्र पुन नु नूपिष्टाना वादाना मतानाञ्च दर्शनं भवति । को न जन इ ईश्वरवादाना-श्वरवादवेद पौरुषेयत्वापौरुषेयत्ववाद-देहवाद शून्यवादादिकान् शतशो वादान् शृणोति ।

भारतीयसंस्कृत्यै सदैव सत्य रोचते । यत्र विद्या यत्र ज्ञान यत्र प्रकाश-स्तदेव ता प्रीणाति । तत्रैव सा रमते न ततोऽन्यद् किमपि ध्यानं जानाति ।

सेय तपोवनसम्भवा त्यागतरेभ्या पूता 'सर्वं खलु इदं ब्रह्म' इत्यस्मिन् मन्त्रे श्रद्धावतीत्वात् समदर्शिता भारतीया संस्कृतिः सनातनत्वात् सर्वास्वपि संस्कृतिषु श्रेष्ठा । यत्राद्य ग्रीक-यवन शक-हूण पारद-काम्बोजादिदानां संस्कृतय कालस्याननगह्वरे विलिल्युः तत्रैव वैदिकसंस्कृतिर्भौतिकवैभवरन्ती दीव्यन्ती सर्वत्रापि समाजे स्वकीयमनन्यसाधारणं प्रभुत्वमावेदयन्ती विश्वाजिर सम्प्रति विजृम्भते ।

प्रार्थ्यते परब्रह्म परमेश्वरः—

अध्यात्मज्ञाननिष्ठाऽखिलललितकलापोषिणी पुण्यरूपा
विद्यानामेकगेहं कलितमुदखिलविश्वसाहित्यसम्पद् ।
देशस्यास्य प्रतिष्ठाऽऽगमनिगमनिधिर्गौरवं चार्यजाते
सर्वेषां रक्षिता सा स्वभुवननिलये भासता संस्कृतिर्नः ॥

